# विज्ञप्तिः

ज्योतिषां परमं ज्योति-
र्ध्यात्वैव ब्रह्म शाश्वतम् ।
पाश्चात्त्यज्योतिषग्रन्थं
प्रकाशयाम्यहं मुदा ॥

रमानाथसहायस्तु
संस्कृताध्यापको बुधः ।
गणितज्ञोऽस्य कर्ताऽस्ति
मधुश्रीवास्तववंशजः ॥

पुस्तकं बहुचित्राढ्यं
सुष्ठु स्वार्थप्रबोधकम् ।
अर्वाचीनं समाख्यातं
ज्योतिर्विज्ञानम् अस्य वै ॥

लिखितं पुस्तकमेतत्
प्रदेशभाषयानया ।
ज्योतिःशास्त्रमधीयानां-
श्छात्रान् संबोधयिष्यति ॥

इत्याशाप्रेरितेनैव
देवेशचन्द्रशर्मणा ।
सम्पूर्णानन्दमालायां
चतुर्थं सुमनो हितम् ॥

---

# भूमिका

सुविदितमेव विदुषामेतत् तथ्यं यदमरभारतीकोषोऽस्माकं विविधविषयरचनासम्भृतः। ज्यौतिषं शास्त्रं नूनं पूर्वेषामेकः प्रमुखविषयोऽभवदिति वेदेषु लब्धैर्ज्योतिर्विज्ञानसंकेतैः स्पष्टं प्रतीयते। वेदाङ्गेष्वपि तस्योपलब्धिः प्रख्यापयति पुरातनमहत्तामस्य शास्त्रस्य। कृतज्ञाश्च वयं पूर्वेषामृषीणाममीषां ये नस्तद् व्याचचक्षिरे ज्ञानम्। अध्ययनपरम्परा चास्योत्तरोत्तरविकासोन्मुखी नवनवगवेषणार्थं प्राणुदद्विदुषो ये प्रयत्नसहस्रैर्व्यदधन् विषय-परिष्कारं शास्त्रस्यास्य। परं दूयते हृदयं नितरां मध्ययुगीनानामालोक्यौदासीन्यमस्मिन्विषये पण्डितम्मन्यानां यैः 'पारङ्गता वयं ज्योतिःशास्त्रस्य, न किञ्चिदप्यन्यज्ज्ञातव्यमिति' विचार्य वेधनादिकार्यमुपेक्षितं सर्वथा। एवञ्च वैदिककालादविच्छिन्नं प्रसवन्तीयं ज्ञानस्रवन्ती मरुभूमावकर्मण्यतायाः अशुष्यत। पाश्चात्त्यविद्वांसस्तु प्राचीनयवनज्योतिर्विद्यायाः संवर्धने रता उत्कृष्टोत्कृष्टतरनूतनयन्त्राणां परिष्कृतगणितादिविज्ञानसिद्धान्तानाञ्च साहाय्येन मध्ययुगादारभ्याद्यपर्यन्तम्। प्रशंसनीयास्ते यशोभाजोऽमरपुत्राः सरस्वत्याः।

दीनामवलोक्य दशां संस्कृतज्ञानां ज्यौतिषशास्त्रविद्यार्थिनां साम्प्रतं वेधशालायन्त्रादिकाभावे राज्याधिकारिण उत्तरप्रदेशस्य नैनीतालनगरे वेधशालामेकामिदानीन्तनयन्त्रादिसुसज्जितां कारयामासुः। तेषामेव चादेशेनामरवाण्यामियं रचना कृता संस्कृतविद्यार्थिनां सुखबोधाय दुरूहाणां ज्योतिर्विज्ञानप्रयुक्तयन्त्रसिद्धान्तादीनां शास्त्रविषयस्य च। विषयप्रतिपादनञ्चैवं पृथक् पृथक् कृतम्—खगोलः, पृथिवी, चन्द्रः, ग्रहणानि, सूर्यः, ग्रहविषयकसिद्धान्ताः, ग्रहाः, बुधादयः, धूमकेतवः। पुनश्चैवम्—वेधशाला, नक्षत्रमण्डलम्, नक्षत्रम्, द्विकादयः, विकारिनक्षत्राणि, नक्षत्रतस्कराः, नीहारिकाः, आकाशगङ्गा, अन्याकाशगङ्गासंस्थानानि, सृष्टिसिद्धान्ताश्च।

ग्रन्थरचनायामस्माकं प्रथमं लक्ष्यं विषयस्य सुस्पष्टतया प्रतिपादनं द्वितीयञ्चाध्ययनाभिलाषिणामायासापनयनम्। विषय एष गणितादिशास्त्रसिद्धान्तानां भौतिकादिशास्त्रपरीक्षणविधीनां सूक्ष्मवेधनचित्रगमापनाद्युपयुक्तजटिलयन्त्राणाञ्च किञ्चिज्ज्ञानमपेक्षते। तथा चेदानीं हिन्दीभाषाया एतावान् प्रचारो यत्तस्या एवानुरूपाऽसंश्लिष्टपदा समासविरला रीतिर्व्यवहार्या संस्कृतभाषायाम्। अतोऽस्माभिरल्पवृत्तिरेव रीतिः समादृता; नास्माकमभिमताऽनुप्रासयमकादीनां चमत्कृतिर्न च श्रुतिमधुरसुललितपदावल्या विच्छित्तिर्नापि च प्रभूतपर्यायप्रयोगाणां भङ्गी। सौकर्यार्थञ्च विद्यार्थिनां सन्धयोऽपि नातिमात्रं प्रयुक्ताः। विभक्तिवचनपुरुषादीनां झटिति बोधः स्यादित्यस्मिन्नेवास्माकं प्रयत्नः। तदेतज्ज्ञात्वा बुधाः प्रमाणम्।

—रमानाथसहायः

# विषय-सूची


भूमिका क
विषयसूची ग
विस्तृता विषयसूची ङ
चित्रसूची ट
सारिणीसूची ड
१. खगोलः १
२. पृथिवी १३
३. चन्द्रः ५१
४. ग्रहणमाच्छादनं संक्रमणञ्च ७७
५. सूर्यः ९५
६. ग्रहाः—ग्रहगतिविषयकसिद्धान्ताः ११५
७. ग्रहाः—बुधादयः १३०
८. धूमकेतुः, उल्कादयः १६२
९. वेधशाला, यन्त्राणि च १७३
१०. नक्षत्रमण्डलानि १९५
११. नक्षत्राणि २१२
१२. द्विकानि, विकारिनक्षत्राणि च २३१
१३. नक्षत्रस्तबकाः, नीहारिकाश्च २५६
१४. आकाशगङ्गासंस्थानम् २६६
१५. अन्याकाशगङ्गासंस्थानानि २७८
१६. सृष्टिः २८५
उपसंहारः २९२
परिशिष्टानि [ अ ] शब्दसूची—१. पारिभाषिकशब्दानाम् आङ्ग्लसंस्कृतपर्यायसूचिका २९५
संस्कृताङ्ग्लपर्यायसूचिका ३०५
२. ज्योतिर्विदां नाम्नां सूची ३१६
३. ग्रहाणां नाम्नां प्रमुखनक्षत्राणां च सूची ३१८
[ आ ] ग्रीकवर्णमाला ३२०
[ इ ] प्रमुखज्योतिषस्थिराङ्काः ३२१


—*—

# विस्तृता विषयसूची


१-१२

प्रथमोऽध्यायः । खगोलः ।

१·१ खगोलः । १·२ खगोलीयक्षितिजं स्वस्तिकश्च । १·२१ दर्शकस्थित्यनुसारं खगोलीयक्षितिजं परिवर्तते । १·३ खगोलीयनियामकाः (१) दिगंशोन्नतांशपद्धतिः । १·३१ दिगंशकोटि-उन्नतांशाः । १·४ खगोलीयनियामकाः (२)—विषुवांशक्रान्त्यंश-पद्धतिः । १·४१ नियामकपद्धतिः । १·५ खगोलीयनियामकाः (३)—होरांशक्रान्त्यंश पद्धतिः । १·५१ अहोरात्रवृत्तानि । १·६ खगोलीयनियामकाः (४)—खगोलीयाक्षांश-रेखांशपद्धतिः । १·६१ नियामकपद्धतिः । १·७ विभिन्ननियामकानां प्रयोगस्थलानि ॥

१३-५०

द्वितीयोऽध्यायः । पृथिवी कालविभागश्च ।

२·१ पृथिव्या आकारः । २·११ पृथिव्या ध्रुवनिम्नता । २·१२ ध्रुवनिम्नताया मानम्, पृथिव्या व्यासश्च । २·२ पृथिव्या अक्षभ्रमणम् । २·२१ अक्षभ्रमणस्य प्रमाणानि । २·२२ अक्षभ्रमणवेगः अक्षभ्रमणकालश्च । २·२३ अक्षभ्रमणवेगे अक्षभ्रमणकाले वा परि-वर्तनानि । २·२४ परिवर्तनकारणानि । २·२५ पार्थिवध्रुवयोः (सुमेरुकुमेर्वोः) प्रतीयमान-विचलनम् । २·३ पृथिव्याः परिक्रमणम् । २·३१ प्रमाणानि । २·३२ परिक्रमणमार्गः (भूकक्षा) । २·४ ऋतवः । २·४१ ऋतूनां कालावधयः । २·४२ ऋतुकारणम् । २·४३ कथं ऋतुश्चिरायते ? २·५ वायुमण्डलम् । २·५१ वायुमण्डलस्य श्रयः स्तराः । २·५२ प्रकाशकिरणानां वर्तनक्रिया । २·५३ वेधेषु वर्तनजनितसंस्काराः । २·५४ वायुमण्डले किरण वर्तनस्य प्रभावाः । २·६ अयनगतिः । २·६१ पृथिव्या अयनगतिः । २·६२ अयनगतेः कारणम् । २·६३ अयनगतेः परिणामाः । २·६४ अक्षविचलनम् । २·६५ मार्गच्युतिः । २·७ पृथिव्या आयुः । २·८ कालविभागः । २·८१ नाक्षत्रकालः । २·८२ स्पष्टसौरकालः । २·८३ मध्यमसौरकालः । २·८३१ पूर्वाह्नकालावधिरपराह्नकालावधिश्च । २·८३२ कालसमी-करणम् । २·८४ स्थानीयकालः । २·८५ प्रामाणिककालः । २·८६ आन्ताराष्ट्रिय-दिनाङ्करेखा ॥

५१-७६

तृतीयोऽध्यायः । चन्द्रः ।

३·१ चन्द्रस्य दूरत्वम् । ३·११ दूरत्वनिर्धारणम् । ३·१२ चन्द्रदूरत्वनिर्धारणम् । ३·१३ लम्बनम् । ३·१४ लम्बनदूरत्वसम्बन्धः । ३·१५ चन्द्रस्य लम्बननिर्धारणम् । ३·१६ चन्द्रदूरत्वमानम् । ३·२ चन्द्रस्य व्यासादयः । ३·२१ चन्द्रव्यासमानम् । ३·२२ चन्द्रस्य पिण्डमात्रा । ३·२३ चन्द्रस्य घनत्वम् । ३·३ चन्द्रस्य परिक्रमणम् । ३·३१ चन्द्रस्य पृथ्वीं परितो भ्रमणम् । ३·३२ चन्द्रकलाः । ३·३३ चन्द्रान्तोरः । ३·३४ भुव आलोकश्चन्द्रपृष्ठे । ३·४ चन्द्रस्य अक्षभ्रमणम् । ३·४१ दृश्यनाभेदाः । ३·५ चन्द्रलोके भौतिकस्थितयः । ३·५१

वायुमण्डलम् । ३·५२ जगमावः । ३·५३ तापक्रमः । ३·६ चन्द्रपृष्ठनिदर्शनानि । ३·६१ चान्द्रसमुद्राः । ३·६२ चान्द्रज्वालागिरिमुखानि । ३·६३ चान्द्रपर्वताः । ३·६४ गर्ता पृष्ठाश्च । ३·७ खगोले चन्द्रस्य मार्गः । ३·७१ राहुकेतू । ३·७२ चन्द्रगतिविषयकाङ्कानां चयनम् । ३·७३ चन्द्रस्य स्थितिनिर्णयः । ३·८ आप्लावाः । ३·९ चन्द्रस्य उत्पत्तिः ॥

चतुर्थोऽध्यायः । ग्रहणम् आच्छादनं संक्रमणञ्च । ७७-९४

४·१ ग्रहणाध्ययने प्रयुक्ताः प्रकाशनियमाः । ४·२ चन्द्रग्रहणम् । ४·२१ कारणम् । ४·२२ चन्द्रग्रहणभेदाः । ४·२३ भूछायातिक्रमणम् । ४·२४ चन्द्रकक्षायां भूछायाव्यासानयनम् । ४·२५ भूछायादैर्घ्यम् । ४·२६ ग्रहणस्थितिकालः । ४·३ सूर्यग्रहणम् । ४·३१ कारणम् । ४·३२ सूर्यग्रहणभेदाः ४·३३ चन्द्रछाया अतिक्रमणम् । ४·३४ चन्द्रछायाशङ्कोः चन्द्रछायादैर्घ्यस्य चानयनम् । ४·४ सूर्यचन्द्रग्रहणानि । ४·४१ सूर्यग्रहणचन्द्रग्रहणयोस्तुलना । ४·४२ ग्रहण सम्भावना । ३·४३ एकस्मिन् वर्षे ग्रहणानां सख्या । ४·४४ ग्रहणावृत्तिचक्रम् ( सैरोस ) । ४·६ आच्छादनं संक्रमणञ्च । ४·५१ आच्छादनम् । ४·५२ बुधशुक्रयोः संक्रमणानि ॥

पञ्चमोऽध्यायः । सूर्यः । ९५-११४

५·१ सूर्यस्य भुवो दूरत्वम् । ५·११ दूरत्वनिर्धारणम् । ४·१२ शुक्रसंक्रमणविधिः । ५·१३ भौमदूरत्वविधि । ५·१४ परोक्षदूरत्वविधि । ५·१५ भूचलनसिद्धान्तेन ( मार्गच्युतिसिद्धान्तेन ) ५·१६ डाप्लरसिद्धान्तेन । ५·२ परिमाणादयः । ५·२१ सूर्यस्य परिमाणम् । ५·२२ सूर्यस्य पिण्डमात्रा, घनत्वम्, गुरुत्वाकर्षणञ्च । ५·२३ आत्मभ्रमणम् । ५·३ सूर्य विधानम् । ५·३१ प्रकाशमण्डलम् । ५·३११ कणचिह्नानि । ५·३१२ सूर्यलाञ्छनानि । ५·३१३ सूर्यलाञ्छनचक्रम् । ५·३१४ सूर्यलाञ्छनस्य वर्णच्छत्रम् । ५·३१५ सूर्यलाञ्छनानां चुम्बकीयक्षेत्रत्वम् । ५·३२ वर्णमण्डलम् । ५·३२१ वर्णच्छत्रं सूर्यस्य । ५·३२२ सूर्यस्य रासायनिकतत्त्वानि । ५·३२३ सूर्यरश्मिविश्लेषणयन्त्रम् ५·३२४ सौरलोलज्वाला ५·३२५ सूर्यो मलज्वालाशिखराणि । ५·३३ प्रभामण्डलम् । ५·४ सूर्यस्य प्रकाशस्तापश्च । ५·४१ प्रकाश निर्गिरणम् । ४·४२ तापविकिरणम् । ५·४२१ सौर स्थिराङ्कः ५·४२२ सूर्ये तापविकिरण मात्रा । ५·४३ सूर्यस्य तापक्रम । ५·४४ तापविकिरणस्य समस्या ॥

षष्ठोऽध्यायः । ग्रहविषयकसिद्धान्ताः । ११५-१२९

६·१ ग्रहनक्षत्रयोर्भेदः । ६·२ ग्रहाणां सख्या । ६ २१ ग्रहाणां संक्षिप्तसामान्यवर्णनम् । ६·३ ग्रहाणां वर्गीकरणम् । ६·४ ग्रहाणां सूर्याद् दूरत्वम् । ६·५१ भगणकालः (परिक्रमणकालः) । ६·५२ युतिकालः । ६·६१ लघुग्रहाणां दृष्टिः कलाश्च । ६·६२ प्रधानग्रहाणां दृष्टिः कलाश्च । ६·७ ग्रहाणां गतिः । ६·७१ ऋज्वी गतिः । ६·७२१ लघुग्रहस्य वक्रगतेर्व्याख्या । ६·७२२ प्रधानग्रहस्य वक्रगतेर्व्याख्या । ६·७२३ स्थिरबिन्दवः । ६·८ ग्रहगतिविषयकसिद्धान्ताः । ६·८१ 'टलेमी' सिद्धान्तः । ६·८२ केप्लरनियमाः । ६·८३ ग्रहकक्षावृत्तस्य तत्त्वानि । ६·८४ ग्रहकक्षावृत्ततत्त्वानां सारिणी ॥

१३०-१६१

सप्तमोऽध्यायः । ग्रहाः—बुधादयः ।

७·१ बुधः । ७·११ दर्शनम् । ७·१२ परिक्रमणम् । ७·१३ दृष्टिः कलाश्च । ७·१४
अक्षभ्रमणम् । ७·१५ तापक्रमः । ७·१६ वायुमण्डलम् । ७·१७ बुधचन्द्रयोः समानता ।
७·१८ बुधनीचस्य च्युतिः । ७·१९ बुधस्य संक्रमणानि । ७·२ शुक्रः । ७·२१ सूर्यं परितः
परिक्रमणम् । ७·२२ दृष्टिः कलाश्च । ७·२३ अक्षभ्रमणम् । ७·२४ शुक्रपृष्ठं वायुमण्डलञ्च ।
७·२५ तापक्रमः । ७·२६ शुक्रस्य संक्रमणानि । ७·३ भौमः । ७·३१ सर्वानुकूलप्रेक्षणीयता ।
७·३२ परिक्रमणम् । ७·३३ अक्षभ्रमणम् । ७·३४ भौमे ऋतवः । ७·३५ वायुमण्डलम् ।
७·३६ तापक्रमः । ७·३७ पृष्ठचिह्नानि । ७·३८ उपग्रहे । सारिणी । ७·४ अवान्तरग्रहाः ।
७·४१ तिथिनीतिहासः । ७·४२ विस्तार आकारश्च । ७·४३ परिक्रमणानि । ७·५ गुरुः
७·५१ परिक्रमणम् । ७·५२ अक्षभ्रमणम् । ७·५३ वायुमण्डलं तापक्रमश्च । ७·५४
गुरो रचना । ७·५५ पृष्ठचिह्नानि । ७·५६ उपग्रहाः । ७·५७ उपग्रहाणां ग्रहणं संक्रमण
छायासंक्रमणम् आच्छादनञ्च । ७·५८ उपग्रहग्रहणानां महत्त्वम् । ७·५९ उपग्रहाणां सारिणी ।
७·६ शनिः । ७·६१ परिक्रमणम् । ७·६२ अक्षभ्रमणकालः । ७·६३ वायुमण्डलं तापक्रमश्च ।
७·६४ रचना । ७·६५ पृष्ठचिह्नानि । ७·६६ शनिवलयानि । ७·६७ वलयानां कलाः ।
७·६८ वलयानां निर्मितिः । ७·६९ शनेरुपग्रहाः । ७·७१ वरुणः ( यूरेनस ) । ७·७२
इन्द्रः ( नेपच्यून ) । ७·७३ कुबेरः । ७·८ ग्रहाणां सारिणी ।

१६२-१७२

अष्टमोऽध्यायः । धूमकेतुः, उल्काश्च ।

८·१ धूमकेतवः । ८·११ परिक्रमणमार्गः । ८·१२ धूमकेतोः स्वरूपम् । ८·१३ पुच्छम्
उत्पत्तिर्गतयश्च । ८·१४ वर्णच्छत्रम् । ८·१५ पिण्डमात्रा, रचना च । ८·१६ धूमकेतूनां
परिवारः । ८·१७ धूमकेतूनां वर्गः । ८·१८ प्रसिद्धा धूमकेतवः । ८·२ उल्काः । ८·२१
संख्या । ८·२२ संपातबिन्दुः । ८·३ उल्कापिण्डाः । ८·४ राशिचक्रप्रकाशः ॥

१७३-१९४

नवमोऽध्यायः । वेधशाला यन्त्राणि च ।

९·१ वेधशाला । ९·२ दूरदर्शकयन्त्राणि । ९·२१ प्रकाशकिरणानां नियमाः । ९·२२
वर्तनात्मकदूरदर्शकानि । ९·२३ परावर्तनात्मकदूरदर्शकम् । ९·२४ दूरदर्शकयन्त्रस्य शक्तिः ।
९·३ याम्योत्तरवृत्तम् । ९·४ कालाङ्कयन्त्रम् । ९·५ विषुवद्वीयदूरदर्शकम् । ९·६ घटिका
यन्त्राणि । ९·७ विविधानि यन्त्राणि । ९·७१ किरणसूक्ष्ममापकम् । ९·७२ नतांशदूरदर्शक-
यन्त्रम् ( नतांशनलिका ) । ९·७३ अट्टालिकादूरदर्शकयन्त्रम् । ९·७४ रश्मिविश्लेषकयन्त्रम् ।
९·७५ फोटोकैमरायन्त्रम् ॥

१९५-२११

दशमोऽध्यायः । नक्षत्रमण्डलानि ।

१०·१ नक्षत्रमण्डलानि । १०·२ नक्षत्रमण्डलानां सारिणी । १०·३ नक्षत्रस्थानगणना ।
१०·४ नक्षत्राणां मानचित्राणि । १०·५ राशिचक्रम् । १०·६ कृत्रिमतारामण्डलगृहम् ॥

एकादशोऽध्यायः । नक्षत्राणि । २१२-२३८

११·१ नक्षत्राणां भास्वरत्वकोटिः । ११·११ शून्यकोटिः ऋणकोटयश्च । ११·१२ षष्ठाधिका कोटिः । ११·१३ सूर्यचन्द्रग्रहाणां कोटिः । ११·१४ सापेक्षिकभास्वरत्वनिश्चयः । ११·२ कोटिभेदाः तेषां निश्चयविधयश्च । ११·२१ (क) चाक्षुषकोटिः । ११·२२ (ख) फोटोग्राफिककोटिः । ११·२३ (ग) फोटोचाक्षुषकोटिः । ११·२३१ वर्णसूचकम् । ११·२४ (घ) फोटोविद्युत्कोटिः । ११·२५ (ङ) यथार्थकोटिः । ११·२६ नक्षत्राणां सम्पिण्डितौज्ज्वल्यम् । ११·२७ नक्षत्राणामौज्ज्वल्यम् । ११·२८ उज्ज्वलतमानि नक्षत्राणि । ११·३ नक्षत्राणां दूरत्वम् । ११·३१ दूरत्वनिर्धारणविधिः । ११·३२ नक्षत्रलम्बननिर्धारणरीतयः । ११·३३ वार्षिकलम्बनस्य प्रभावः । ११·३४ दूरत्वप्रमापकाणि । ११·४ नक्षत्राणां गतिः । ११·४१ प्रकृता गतिः, केन्द्रीया गतिश्च । ११·४११ प्रकृता गतिः । ११·४१२ केन्द्रीया गतिः । ११·४२ स्वगतिः । ११·४३ सूर्यस्य स्वगतिः । ११·५ परिमाणम् । ११·५१ परिमाणविषयक प्रयोगाः । ११·६१ घनत्वम् । ११·६२ तापक्रमः । ११·७१ नक्षत्राणां वर्णच्छत्रम् । ११·७२ घनस्थितिवर्गः ॥

द्वादशोऽध्यायः । द्विकनक्षत्राणि विकारिनक्षत्राणि च । २३९-२५५

१२·१ द्विकनक्षत्राणि । १२·११ द्विकनक्षत्राणां भेदाः । १२·१२ द्विकभ्रमणनिर्धारणम् । १२·१३ द्विकानां परस्परपरिक्रमणम् । १२·१४ द्विकानां परस्परसम्बन्धस्य द्वे तत्त्वे । १२·१५ माइक्रोमीटरयन्त्रम् । १२·१६ परिक्रमणमार्गनिर्णयः । १२·१७ द्विकानां कक्षातत्त्वानि । १२·१८ द्विकानां पिण्डमाना । १२·१९ उदाहरणानि । १२·२ वर्णच्छत्रीयद्विकानि । १२·२१ वेगरेखाचित्रम् । १२·२२ उदाहरणानि । १२·२३ द्विकानामुत्पत्तिः । १२·३ त्रिकाणि । १२·४ बहुकानि । १२·५ विकारिनक्षत्राणि । १२·५१ विकारिनक्षत्राणां भेदाः । १२·५२ प्रकाशरेखाचित्रम् । १२·५३ स्फुरणशीलविकारिनक्षत्राणि । १२·५३१ भेदाः । १२·५३२ पार्यपर्यविकारिनक्षत्राणि । १२·५३३ अर्धनियमितविकारिनक्षत्राणि । १२·५३४ दीर्घकालिकविकारिनक्षत्राणि । १२·५३५ अनियतकालिकविकारिनक्षत्राणि । १२·५३६ स्फुरणस्य कारणम् । १२·५४ विस्फोटशीलविकारिनक्षत्राणि । १२·५४१ नामकरणम् । १२·५४२ ऐतिहासिकनवनक्षत्राणि । १२·५४३ प्रकाशपरिवर्तनम् । १२·५४४ विस्फोटकारणम् । १२·५४५ धर्मोद्गमः । १२·५४६ अत्यागतनक्षत्राणि प्रत्यावर्तिनक्षत्राणि च । १२·५५ ग्रहणशील-विकारिनक्षत्राणि । १२·५५१ उदाहरणम् । १२·५५२ प्रकाशपरिवर्तनानि । १२·५५३ प्रकाशमानग्रहणशीलद्विकानि ॥

त्रयोदशोऽध्यायः । नक्षत्रगुच्छका नीहारिकाश्च । २५६-२६२

१३·१ नक्षत्रगुच्छकाः । १३·११ नक्षत्रगुच्छकभेदाः । १३·१२१ उदाहरणम् । १३·१२२ दूरत्वनिर्धारणम् । १३·१३ आवृतनक्षत्रगुच्छकाः । १३·१३१ दूरत्वनिर्णयः । १३·१३२ स्थितिविभागः । १३·१३३ जीवनकालः । १३·१४ गोलीयनक्षत्रगुच्छकाः ।

१३·१४१ उदाहरणानि । १३·१४२ दूरत्वनिर्धारणं स्थितिविभागश्च । १३·१४३ तेषाम् अस्मत्तारासंस्थानस्य अङ्गत्वम् । १३·२ नीहारिका । १३·२१ भेदाः । १३·२२ प्रसृता नीहारिका । १३·२३ ग्रहीयनीहारिका । १३·२४ श्यामा नीहारिका ॥

चतुर्दशोऽध्यायः । आकाशगङ्गासंस्थानम् । २६६-२७३

१४·१ आकाशगङ्गाया भगोले स्थितिः । १४·२ आकाशगङ्गीयपनियामकाः । १४·३ आकाशगङ्गासंस्थानस्य आकारः । १४·४ आकाशगङ्गासंस्थानस्य अक्षभ्रमणम् ॥

पञ्चदशोऽध्यायः । अन्याकाशगङ्गासंस्थानानि । २७४-२८४

१५·१ अन्याकाशगङ्गासंस्थानानां भेदाः । १५·२१ नियतरूपदीर्घवृत्ताकारसंस्थानानि । १५·२२ नियतरूपमङ्गलसर्पिलानि संस्थानानि । १५·२३ प्रकृतसर्पिलानां वर्गाः । १५·२४ नियतरूपानवद्धसर्पिलानि संस्थानानि । १५·२५ नियतरूपसंस्थानानां क्रमः । १५·२६ अनियतरूपाणि आकाशगङ्गेतरसंस्थानानि । १५·३१ आकाशगङ्गेतरसंस्थानेषु दृश्यमान-नक्षत्राणि । १५·३२ आकाशगङ्गेतरसंस्थानानां परिमाणानि । १५·३३ खगोले संस्थानानां स्थितिविभागः । १५·३३ खगोले संस्थानानां स्थितिविभागः । १५·४ स्थानीयसंस्थानसमूहः । १५·५ संस्थानान्तरकाः । १५·६ अन्याकाशगङ्गासंस्थानानां केन्द्रीया गतिः । १५·७ विस्तृतं जगत् ॥

षोडशोऽध्यायः । उत्पत्तिः । २८५-२९२

१६·१ सौरमण्डलस्योत्पत्तिः । १६·११ नीहारिकासिद्धान्तः । १६·१२ 'सूर्याद्ग्रहा जाता' इति वादिनां सिद्धान्तः । १६·१३ 'जीन्स'-महोदयस्य आघातसिद्धान्तः । १६·१४ मङ्गलसिद्धान्तः 'चेम्बरलेन'-'मूल्टनयोः' । १६·१५ वेकरीजमहोदयस्य संघात-सिद्धान्तः । १६·१६ नाक्षत्रजोमेन-सिद्धान्तः (१) १६·१७ नाक्षत्रजोमेन-सिद्धान्तः (२) । १६·२ विश्वस्य उत्पत्तिः । १६·२१ नीहारिकाणाम् ( सर्पिलसंस्थानानां ) उत्पत्तिः । १६·२२ नक्षत्रजगतामुत्पत्तिः । १६·२३ नक्षत्राणामुत्पत्तिः । द्विकानामुत्पत्तिः ॥

❧

# चित्रसूची


| | |
|---|---|
| खगोलः | १ |
| भगोलः | २ |
| क्षितिज स्वस्तिकं पूर्वापरादिवृत्तानि | २ |
| स्वस्तिकं दर्शनस्थानापेक्षि | ३ |
| समकोणाक्षनियामकाः | ४ |
| भूगोले नियामकाः | ४ |
| दिगंशोन्नतांशपद्धतिः | ५ |
| सदोदितनक्षत्राणि | ६ |
| नाडीवृत्तम्, ध्रुवौ | ७ |
| विषुवांशक्रान्त्यंशपद्धतिः | ७ |
| पार्थिवध्रुवे अहोरात्रवृत्तानि | ८ |
| ध्रुवस्योन्नतांशा दर्शनस्थानापेक्षिणः | ८ |
| विषुवद्देशे अहोरात्रवृत्तानि | ८ |
| अन्यत्र अहोरात्रवृत्तानि | ९ |
| क्रान्तिवृत्तं कदम्बस्थाने | ९ |
| भोगांशशरांशपद्धतिः | १० |
| पृथिव्या गोलाकारत्वम् | १४ |
| गोलत्वमानानयनम् | १५ |
| पृथिव्या गोलत्वम् | १६ |
| फूको महोदयस्य प्रयोगः | १८ |
| सुमेरोः प्रतीयमानचित्रणम् | २० |
| दीर्घवृत्तरचना | २२ |
| भूकक्षाभासः | २२ |
| चत्वार ऋतवः | २३ |
| विभिन्नर्तुषु सूर्यस्य दृङ्मण्डलानि | २५ |
| औष्ण्यशैत्ये किरणानामार्जवकौटिल्यापेक्षिणी | २५ |
| वर्तनस्य द्वे उदाहरणे | २८ |
| वर्तनम् | २८ |
| विरलमाध्यमात् सघनमाध्यमे प्रवेशः | २९ |
| सघनमाध्यमाद् विरलमाध्यमे प्रवेशः | २९ |
| वेधे वर्तनसंस्कारस्य आवश्यकता | २९ |
| सूर्यस्य उदयास्तकालयोर्दीर्घवृत्तत्वम् | ३१ |
| | ३१ |
| पृथिव्या अयनगतिः | ३२ |
| पृथिवी भ्रमरवद् भ्रमति | ३३ |
| उत्तरध्रुवस्थानस्यायनवृत्ते चलनम् | ३३ |
| अयनचलनस्य कारणं सूर्याकर्षणम् | ३४ |
| अयनगतिपरिवर्तनानि | ३६ |
| अक्षविचलनम् | ३६ |
| मार्गच्युतिसिद्धान्तः | ३७ |
| कालघटिका | ३९ |
| नाक्षत्रदिनम् | ४१ |
| कक्षायां भूपरिभ्रमणम् | ४२ |
| प्राणकलान्तरम् | ४३ |
| कालसमीकरणम् | ४३ |
| अगम्यवस्तुनो दूरत्वनिर्णयः | ५१ |
| " | ५१ |
| चन्द्रदूरत्वनिर्धारणम् | ५२ |
| भूमध्यीयलम्बनम् | ५३ |
| क्षैतिजलम्बनम् | ५३ |
| लम्बननिर्धारणम् | ५४ |
| चन्द्रव्यासमानानयनम् | ५६ |
| चन्द्रस्य सूर्यं परितो भ्रमणम् | ५८ |
| चन्द्रकलाः | ५९ |
| चन्द्रालोकमाना | ६० |
| भुव आलोकश्चन्द्रोपरि | ६१ |
| अभ्रभ्रमव्याख्या | ६२ |
| अक्षांशविषयकदृश्यनाभेदः | ६२ |
| रेखांशविषयकदृश्यनाभेदः | ६३ |

| | |
|---|---|
| दैनिकदृश्यताभेद | ६३ |
| चन्द्रस्य छायाचित्रम् | ६५ |
| चन्द्रस्य मानचित्रम् | ६६ |
| चन्द्र | ६७ |
| चन्द्रस्य दक्षिणभाग | ६८ |
| चन्द्रे कोपर्निकसज्वालागिरिमुखम् | ६९ |
| चन्द्रे एपनाइनपर्वत | ७० |
| राहुकेतू | ७१ |
| पार्थिवसंस्कार | ७४ |
| आप्लायाना हेतुस्त्वन्द्राकर्षणमेव | ७४ |
| उच्चाप्लावा अत्युच्चाप्लावाश्च | ७५ |
| चन्द्रोत्पत्ति | ७६ |
| सूचीछिद्रकैमरा | ७७ |
| अपसृताकिरणपुञ्ज, संसृताकिरणपुञ्जश्च | ७८ |
| छाया | ७८ |
| प्रच्छाया उपच्छाया च | ७९ |
| चन्द्रग्रहणभेदा | ८० |
| भूच्छायामतिक्रमणम् | ८१ |
| चन्द्रकक्षाया भूभाव्यासानयनम् | ८२ |
| पूर्णग्रहण वलयाकारग्रहण च | ८४ |
| सूर्यग्रहणभेदा | ८५ |
| चन्द्रमाया अतिक्रमणम् | ८६ |
| चन्द्रप्रभादैर्ध्यानयनम् | ८६ |
| चन्द्रगोलव्याससमानानयनम् | ८७ |
| ग्रहणसम्भावना | ८९ |
| ,, | ८९ |
| गुरोस्तदुपग्रहाणामाच्छादनम् | ९३ |
| शुक्रसंक्रमणविधि | ९६ |
| सूर्यस्य निशाल्कनम् | ९७ |
| सूर्याक्षभ्रमणम् | ९८ |
| विभिन्नर्तुषु विभिन्नदर्शनानि सूर्यस्य | ९९ |
| प्रकाशमण्डले कणा | १०० |
| सूर्यलाञ्छनानि | १०१ |
| सूर्यलाञ्छनचक्रम् | १०२ |
| कौमनरेखादन्तुरत्वम् | १०३ |
| भुवनप्रकाशचित्र | १०४ |
| फ्राउनहोफररेखा | १०४ |
| सूर्यस्य वर्णच्छत्रम् | १०५ |
| सूर्यरश्मिविश्लेषणद्योतचित्राणि | १०६ |
| ,, | १०६ |
| सूर्योन्नत नागशिखरे | १०७ |
| ,, | १०७ |
| सूर्योन्नत नागशिखराणि | १०८ |
| प्रभामण्डलम् | १०९ |
| ,, | ११० |
| सूर्यतापविकिरणमानानिर्णय | ११२ |
| सौरमण्डलम् | ११८ |
| लघुग्रहस्य दृष्टि | १२० |
| प्रधानग्रहस्य दृष्टि कलाश्च | १२० |
| वक्री गति | १२१ |
| लघुग्रहस्य वक्रगतेर्व्याख्या | १२२ |
| प्रधानग्रहस्य वक्रगतेर्व्याख्या | १२२ |
| ग्रहस्थानेषु स्थिरबिन्दव | १२३ |
| टालेमीरामतसौरमण्डलम् | १२४ |
| गालेमीकृतवक्रगतिव्याख्या | १२५ |
| ग्रहकक्षान्तराणि | १२६ |
| ग्रहाणां परिमाणानि | १२७ |
| परिमेषान्तरे बुध | १३१ |
| बुधनीचस्य च्युति | १३३ |
| बुधस्य सूर्यबिम्बे सञ्चरणम् | १३३ |
| शुक्रस्य विभिन्ना भागा | १३ |
| शुक्रपृष्ठचिह्नानि | १३६ |
| भौमस्य प्रतियोगा | १३८ |
| भौमे ऋतुजनितपरिवर्तनानि | १३० |
| भौमस्य उपरन्ने नीललोहितोत्तरवर्णयोश्चिन | १४० |
| भौमस्य प्रागोचित्र कलाचित्र च | १४१ |
| भौमस्य कालचिह्नानि | १४२ |
| भौमस्योपग्रहौ | १४३ |

अवान्तरग्रहाणां क्रमगतिचिह्नानि १४४
एरोस ग्रहः १४५
गुरोरुपरङ्के नीललोहितोत्तरे चित्रे १४६
गुरोः संरचना १४७
गुरौ मेघचिह्नानि १४८
गुरोश्चत्वारो भासुरा उपग्रहाः १४९
गुरोश्चत्वारो भासुरा उपग्रहाः १४९
गुरोरुपग्रहाणां सङ्क्रमणादयः १५०
उपग्रहसङ्क्रमणात् प्रकाशगतिनिर्णयः १५१
शनेः संरचना १५२
शनेश्छायाचित्रम् १५३
शनेर्वलयनयम् १५४
वलयाना कलाः १५४,१५५
यरुणस्य पञ्च उपग्रहाः १५७
इन्द्रः, तदुपग्रहः 'ट्रिटन' १५८
निवृत्तिकाले कुबेरः १५९
कुबेरस्य कक्षावृत्तम् १६०
धूमकेतुः १९१० अ १६२
धूमकेतुः १९४८ १६३
पुच्छनिर्माणम् १६४
पुच्छविस्तारः १६५
हालिधूमकेतुः १६६
हालिधूमकेतोर्मार्गः १६६
धूमकेतु १९२५ द्वितीयस्योल्कात्वे विनाश.१६७
रजन्या उत्तरार्द्धे उल्कापतनम् १६८
उल्कापातबिन्दुः १६९
'एरिजोना' स्थाने उल्कापिण्डखनित
गिरिमुखम् १७०
राशिचक्रप्रकाश. १७०
द्विशत इञ्चीयदूरदर्शकचित्रसगोलार्धः १७४
निमितालोक्य प्रकाशवर्तनम् १७५
बिम्बनिर्माणम् १७६
बिम्बनिर्माणे प्रमुखा नियमाः १७६
अभिदृश्यतालम् १७७
चक्षुस्तालम् १७७
वर्तनात्मकदूरदर्शकम् १७८
मेनोदरदर्पणजनितबिम्बम् १७८
न्यूटोनियन-कैसेग्रेनियनवीक्षी १७९
याम्योत्तरवृत्तम् १८१
याम्योत्तरवृत्तम् १८२
याम्योत्तरवृत्तदर्शनम् १८२
कालाङ्कयन्त्रम् १८३
कालाङ्कयन्त्रे चिह्नानि १८३
विषुवदीयदूरदर्शकम् १८४
" " १८५
" " १८६
स्फटिकघटिकायन्त्रम् १८७
अभ्रलिकादूरदर्शयन्त्रम् १८८
रश्मिविश्लेषयन्त्रम् १८९
सरश्मिविश्लेषकदूरदर्शकम् १८९
सकैमरा दूरदर्शकम् १९०
विभिन्नोदयनकालेनक्षत्राणां दर्शनानि १९१
शत इञ्चीयदूरदर्शकम् १९२
द्विशत इञ्चीयदूरदर्शकम् १९३
नक्षत्रमण्डलानि १९५
उत्तरार्द्धे सदोदितनक्षत्राणि २०४
शिशिरकालिकनक्षत्राणि २०५
ग्रीष्मकालिकनक्षत्राणि २०६
शरत्कालिकनक्षत्राणि २०७
वसन्तकालिकनक्षत्राणि २०८
दक्षिणार्धे सदोदितनक्षत्राणि २०९
कृत्रिमतारामण्डलगृहम् २१०
षड्विंशद्दीपानि २१२
भासुरतरस्य नक्षत्रस्याधिको व्यासः २१५
फोटोग्राफस्य वर्णविशेषस्य ग्राहिता २१५
फोटोमीटरयन्त्रम् २१७
वार्णिकलम्बनम् २२१
रेडियनमानम्—दूरत्वनिर्धारणम् २२२

| | |
|---|---|
| नाक्षत्रलम्बननिर्धारणम् | २२४ |
| वार्षिकलम्बनस्य प्रभावः | २२५ |
| प्रौक्सिमा किन्नरनक्षत्रस्य प्रकृता गतिः | २२७ |
| प्रकृता-केन्द्रीया सगतिः | २२८ |
| वर्णच्छत्रतुलना | २३० |
| वर्णीयनक्षत्रस्य वर्णच्छत्रम् | २३० |
| वार्षिकपरिवर्तनम् | २३१ |
| सूर्यस्य स्वगतिव्याख्या | २३२ |
| सूर्यस्य गतिः | २३३ |
| भूयोऽनन्ताकाशे स्थितिः | २३३ |
| पिण्डमात्रा यथार्थकोटिः | २३५ |
| द्विकद्वितयर्योर्भेदः | २३६ |
| द्विकस्य परस्परसम्बन्ध | २४० |
| माइक्रोमीटरम् | २४१ |
| माइक्रोमीटरस्य वृत्ताकारपटलम् | २४१ |
| क्रूगर ६० द्विकनक्षत्रस्य भास्वरत्वम् | २४२ |
| द्विकपरिक्रमणम् | २४२ |
| वसिष्ठस्य वर्णच्छत्रम् | २४३ |
| वेगरेखाचित्राणि | २४४ |
| चित्रानक्षत्रस्य वेगरेखाचित्रम् | २४५ |
| गरुडस्य प्रकाशरेखाचित्रम् | २४७ |
| गोलस्तनकीयनार्थपर्वस्य प्रकाशरेखाचित्रम् | २४८ |
| आवृतिकाल्यथार्थभास्वरत्वरेखाचित्रम् | २४९ |
| मृगनक्षत्रस्य प्रकाशरेखाचित्रम् | २४९ |
| हंसनक्षत्रस्य प्रकाशरेखाचित्रम् | २५० |
| मध्यगरुडनक्षत्रस्य भास्वरत्वम् | २५१ |
| नवनक्षत्रस्य प्रकाशरेखाचित्रम् | २५२ |
| नागराज १९१८-स्य परिवेष्टनम् | २५२ |
| ऽऽहंसनक्षत्रस्य प्रकाशरेखाचित्रम् | २५३ |
| ऽऽर्षिनक्षत्रस्य ग्रहणशीलविकारित्वम् | २५४ |
| अलगूलनक्षत्रस्य प्रकाशरेखापरिवर्तनमानार्थ | २५५ |
| वृषराशौ चलनक्षत्रकुलम् | २५७ |
| ययातिनक्षत्रमण्डले द्वावद्वनक्षत्रस्तबकौ | २५८ |
| शौरिनक्षत्रमण्डले गोलीयनक्षत्रस्तबकः | २५९ |
| किन्नरनक्षत्रमण्डले गोलीयनक्षत्रस्तबकः | २६० |
| मृगनक्षत्रमण्डले प्रसृता नीहारिका | २६२ |
| बहुलाया नीहारिकास्तरम् | २६२ |
| द्वे मन्दीय नीहारिके | २६३ |
| वीणानक्षत्रमण्डले वलयाकारनीहारीका | २६३ |
| किन्नरस्वस्तिकामध्ये आकाशगङ्गा | २६४ |
| आकाशगङ्गाया महाविवरम् | २६५ |
| धनुर्नक्षत्रमण्डल आकाशगङ्गा | २६७ |
| चर्मवृश्चिकमध्य आकाशगङ्गा | २६८ |
| हंसनक्षत्रमण्डल आकाशगङ्गा | २६९ |
| वृश्चिकनक्षत्रमण्डले श्यामानीहारिका | २७० |
| नक्षत्राणां स्थितिविभागः | २७१ |
| आकाशगङ्गासस्थानस्य रूपम् | २७२ |
| आकाशगङ्गासंस्थानस्याक्षभ्रमणम् | २७३ |
| द्वे दीर्घवृत्ताकारसंस्थाने | २७४ |
| मेसिये ३३-सर्पिलसंस्थानम् | २७५ |
| मेसिये ३१ सर्पिलसंस्थानम् | २७६ |
| सर्पिलसंस्थानम् | २७७ |
| केशनक्षत्रमण्डलेऽरुद्धसर्पिलसंस्थानम् | २७७ |
| नियतरूपसंस्थानाना क्रम | २७८ |
| वृहद्मैगल्लानिकमेघ | २७९ |
| उत्तर आकाशगङ्गीयार्धे संस्थानानां स्थितिविभाग | २८१ |
| उत्तरकिरीटमण्डले संस्थानस्तबक | २८२ |
| नीहारिकासिद्धान्त | २८५ |
| ग्रहाणामुत्पत्ति | २८६ |
| " | २८७ |
| नाक्षत्रजोमेयसिद्धान्त | २८९ |
| नीहारिकाणामुत्पत्ति | २९० |
| स्वस्थानी संस्थाने नक्षत्राणामुपस्थिति | २९१ |
| द्विकस्योत्पत्ति | २९२ |

# सारिणीसूची


| | |
|---|---|
| | ९० |
| उन्नतांश वर्तनान्तर सारिणी ... ... .... | ९१ |
| ग्रहाणां सारिणी ... ... ... | १२७ |
| ग्रहकक्षातत्त्वानां सारिणी ... ... ... | १५२ |
| गुरोरुपग्रहाणां सारिणी ... ... ... | १५६ |
| शनेरुपग्रहाणां सारिणी ... ... ... | १६० |
| ग्रहाणां सारिणी ... ... ... | १९७ |
| नक्षत्रमण्डलानां सारिणी ... ... ... | २०० |
| याम्योत्तरोल्लङ्घनकालस्य ज्ञानार्थं सारिणी ... ... ... | २०१ |
| नक्षत्राणां दिनार्धमानस्य सारिणी ... ... ... | २०२ |
| याम्योत्तरोल्लङ्घनकालिकनतांशानां सारिणी ... ... ... | २२० |
| उज्ज्वलतमानां नक्षत्राणां सारिणी ... ... ... | २२१ |
| प्रमुखद्वीभप्रातिकनक्षत्राणां सारिणी ... ... ... | २३७ |
| वर्णच्छटातापक्रमसम्बन्धसूचकसारिणी ... ... ... | २३८ |
| मुख्यनक्षत्राणां तापक्रमव्यासादयः ... ... ... | २४३ |
| प्रमुखद्विकानां कक्षातत्त्वानि ... ... ... | २५५ |
| प्रकाशमानग्रहणयोग्यनक्षत्राणि ... ... ... | २८१,२८३ |
| स्थानीयसंस्थानसमूहः ... ... | |




# अर्वाचीनं ज्योतिर्विज्ञानम्

## प्रथमोऽध्यायः

[ ज्योतिर्विज्ञानाध्ययनविषयाणि सकलान्येव पृथिव्यादीनि खगोलसम्बन्धेनैव मनुष्येण निरीक्ष्यन्ते, तस्मिन्नेव च तेषां स्थितयः प्रतीयन्ते; अस्मादेव खलु तस्य विवेचनं प्रथमं करिष्यामः ]

### खगोलः

**१.१ खगोलः**

नगराद् बहिर्गत्वा यदि कोऽपि जनश्चन्द्रविहीनशर्वर्यां निरभ्रामाकाशमवलोकयेत्तर्हि नूनं पश्येत् स नीलाम्बरे रत्नानीव देदीप्यमानान् प्रकाशबिन्दून् नक्षत्राख्यान्। तदा नक्षत्रपूर्णं नीलाम्बरमेव प्रतीयते यत् क्षितिजस्य उपरि कोऽपि गोलार्धः स्थापितोऽस्ति, तस्मिंश्च नक्षत्राणि संलग्नानि सन्ति। परन्तु होरैककाला-यधिक निरीक्षणं विभिन्ननक्षत्र-मण्डलानां दर्शनैर्गोलार्धस्या-चलत्वं निराकरोति। गोलार्धोऽयं पूर्वतः पश्चिमदिशं प्रति गच्छन् दृश्यते। अत एव खं गोलार्धो नास्ति, इदं गोल एव। अस्य केवलमर्धभागः कालविशेषे जनैर्दृश्यते, अर्धा-दाकाशस्य दृश्यगोलार्धे उपरि, अदृश्यगोलार्धो दर्शकानामधो वर्तते। आकाशविषयकगो-लोऽयं खगोलः कथ्यते।



खगोलः

खगोलोऽयं यद्यपि काल्पनिको गोलो यस्य मध्यकेन्द्रे दर्शकस्तिष्ठति, तथापि ज्योतिर्विद्यायां खगोलस्य कल्पनातिमहत्त्वपूर्णा। खगोले प्रत्येकस्य नक्षत्रस्य प्रतीयमाना स्थितिरेव

माप्यते । खगोलीयपिण्डानां परस्परदूरत्वादीनां मानं रैखिकप्रमापकेऽसम्भवमस्ति, अत एव तत् कोणीयप्रमापके माप्यते । कोणीयान्तराणि गोले एव मापनीयानि, अत एव खगोलकल्पनया इदं सर्वं सम्भवं भवति । एवं नक्षत्राणां ग्रहाणाञ्च स्थितयः परस्परदूरत्वानि च खगोले कोणीयप्रमापके व्यक्तीक्रियन्ते । ( इदमग्रे स्पष्टतरं भविष्यति—द्रष्टव्यम् §§१ ३—१·६ ) ।



खगोलः

## १.२ खगोलीयक्षितिजं खस्वस्तिकञ्च

खस्वस्तिकम्—खगोले ऊर्ध्वाधरदिशायां दर्शकस्य शीर्षस्य यथार्थत उपरि वर्तमानो बिन्दुः खस्वस्तिकं कथ्यते ।

पातालस्वस्तिकम् — खगोले ऊर्ध्वाधरदिशायां दर्शकस्य चरणयोर्यथार्थतोऽधो वर्तमानो बिन्दुः पातालस्वस्तिकमुच्यते ।



क्षितिजम्, खस्वस्तिकम्, पूर्वापरादिवृत्तानि

खगोलीयक्षितिजम्—खस्वस्तिकात् पातालस्वस्तिकाच्च नवत्यंशमितान्तरया खगोले कल्पितं महद् वृत्तं खगोलीयक्षितिजं प्रोच्यते । इदं प्रायेण दर्शकस्य भूपृष्ठीयक्षितिजादभिन्नमेव ।

ऊर्ध्वाधरमहद्वृत्तानि — खस्वस्तिकं पातालस्वस्तिकं प्रोतानि महद्वृत्तानि 'ऊर्ध्वाधरमहद्वृत्तानि' कथ्यन्ते । एतानि सर्वाणि खगोलीयक्षितिजं लम्बरूपेण छिन्दन्ति ।

दिशः—खगोलीयक्षितिजस्य चतसृषु दिशासु

चत्वारि समस्थानानि वर्तन्ते—पूर्वसमस्थानम्, दक्षिणसमस्थानम्, पश्चिमसमस्थानम्, उत्तरसमस्थानञ्च। क्रमिकसमस्थानद्वयमध्ये नवत्यंशमितचापो वर्तते।

याम्योत्तरवृत्तम्—दक्षिणसमस्थान उत्तरसमस्थान प्रोतम् ऊर्ध्वाधरमहद्वृत्तं याम्योत्तरमुच्यते।

पूर्वापरवृत्तम्—पूर्वसमस्थान पश्चिमसमस्थान प्रोतम् ऊर्ध्वाधरमहद्वृत्तं पूर्वापरवृत्तं समण्डलं वा प्रोच्यते।

## १.२१ दर्शकस्थित्यनुसारं खगोलीयक्षितिजं परिवर्तते

खगोलीयक्षितिजं स्वस्तिकं वा दर्शकस्थित्यनुसारं परिवर्तते। निम्नचित्रेणेदं स्पष्टं भविष्यति। चित्रे ख स्थानस्य ग स्वस्तिकं घ स्थानस्य पाताल स्वस्तिकं भवति।




स्वस्तिक दर्शकस्थानापेक्षि

## १.३ खगोलीयनियामकाः—

### (१) दिगंशोन्नतांशपद्धतिः

नियामकाः—लोकस्य व्यवहारेऽपि कस्यचित् स्थानस्य निर्देशनार्थं नियामकाः प्रयुज्यन्ते। यदि कस्मिंश्चिन्नगरे समकोणकाः पन्थानः सन्ति, अ स्थाने कोऽपि नवागतो जनः क स्थानगमनाय मार्गं पृच्छति तर्हि तन्नगरवासी तमेवं वदति, "भवान् पूर्वदिशायामितो हस्तानां शतद्वयं गच्छतु, तत उत्तरदिशायां हस्तशतमितमग्रतः गच्छतु, तदा तत्र क स्थानं प्राप्स्यति" इति। अत्र समकोणाक्षनियामकपद्धतिरवलम्बितास्ति। पूर्वापरदिशा याम्योत्तरदिशा, अत्र द्वौ नियामकाक्षौ; द्विशतहस्तमितदूरत्वं शतहस्तमितदूरत्वञ्चात्र नियामकौ—एतौ नियामकावनु निर्दिश्येते। अ स्थानमत्र मूलबिन्दुः। एवं समकोणाक्षनियामकपद्धत्यां सन्ति।

(१) एको मूलबिन्दुः (यथा अ स्थानम्)।

(२) एकः प्रधानोऽक्षः (यथा पूर्वापरदिशा)।

(३) एको गौणोऽक्षः (मूलबिन्दुगामी प्रधानाक्षसमकोणकः) यथा याम्योत्तरदिशा।

(४) प्रथमो नियामकः (भुजः—यथा द्विशतहस्तमितदूरत्वम्)।

(५) द्वितीयो नियामकः (कोटिः—यथा शतहस्तमितदूरत्वम्)।

गोलीयनियामका—एवमेव भूगोले अक्षांशा देशान्तररेखांशाश्च नियामकरूपेण प्रयुज्यन्ते। कस्यचिद् स्थानस्य निर्देशन भूगोलविद् नियामककथनेन करोति। यथा काशीनगरस्य



समकोणाक्षनियामका।

निर्देशनमेव क्रियते—अक्षांशा २५°।२०' देशान्तररेखांशा ८३°। अत्र गोलीयनियामक-पद्धतिरवलम्बिताऽस्ति। तत्र सन्ति—

(१) एकं प्रधानमहद्वृत्तम् (यथा भूगोले विषुवरेखा)।

(२) गौणानि महद्वृत्तानि—एतानि सर्वाणि प्रधानमहद्वृत्तस्य ध्रुवयोर्लग्नानि, प्रधानमहद्वृत्तं समकोणे छेदयन्ति। (यथा भूगोले देशान्तररेखांशा)

(३) एकं प्रमुखं गौणमहद्वृत्तम्—गौणेषु महद्वृत्तेषु एकं प्रमुखरूपेण निर्धार्यते यतो रेखांशानां प्रवृत्तिर्भवति। (यथा 'ग्रिनिच' रेखा)

(४) प्रथमो नियामकः—प्रधानवृत्तमनु मापितं प्रमुखगौणवृत्तात् स्थानविशेषस्य कोणीयान्तरम्। (यथा रेखांशा।)



भूगोले नियामका

(५) द्वितीयो नियामकः—गौणवृत्तमनु मापितं प्रधानवृत्तात् स्थानविशेषस्य कोणीयान्तरम्। (यथा अक्षांशा)।

## १.३१ दिगंशकोटि-उन्नतांशाः ( दिगंशोन्नतांशपद्धतिः )

अस्यां पद्धत्यां प्रधानं महद्वृत्तं क्षितिजमस्ति । गौणानि महद्वृत्तानि नैकानि खस्वस्तिक-प्रोतोर्ध्वाधरवृत्तानि । प्रमुखगौणमहद्वृत्तं प्रायेण दक्षिणसमस्थानप्रोतोर्ध्वाधरवृत्तं ( याम्योत्तर-वृत्तम् ) अस्ति । [ भारतीयपद्धत्यां पूर्वसमस्थानप्रोतोर्ध्वाधरवृत्तम्, अर्थात् पूर्वापरवृत्तं प्रमुख-गौण-महद्वृत्तमस्ति ] । प्रथमो नियामको दिगंशाः, द्वितीयो नियामक उन्नतांशाः कथ्यन्ते । नक्षत्रप्रोतम् ऊर्ध्वाधरवृत्तं नक्षत्रस्य दृङ्मण्डलं कथ्यते ।

दिगंशाः—क्षितिजमनु मापितं दक्षिणसमस्थानाद् नक्षत्रविक्षेपस्य कोणीयान्तरं दिगंशाः । अर्थात् क्षितिजस्य दृङ्मण्डल-याम्यसमस्थान-मध्यवर्तिनो वृत्तांशा दिगंशाः ।

उन्नतांशाः—दृङ्मण्डलमनु मापितं क्षितिजाद् नक्षत्रस्य ऊर्ध्वत्वं निम्नत्वं कोणीयप्रमाणं




अत्र नक्षत्रस्य दिगंशाः ११०° उन्नतांशाः ५०°
नक्षत्रस्य स्थाननिर्धारणम्

उन्नतांशाः । अर्थात् दृङ्मण्डलस्य नक्षत्र-क्षितिजदृङ्मण्डलसंपात-मध्यवर्तिनो वृत्तांशा उन्नतांशाः ।

सप्तर्षिमण्डलम्—[illegible] । यदि कोऽपि जनो भवति [illegible] दक्षिण[illegible] पूर्वम्, [illegible] ( अर्थात् [illegible] दिगंशाः ) [illegible] भवति, [illegible] इव [illegible], अन्यत्र [illegible] ।

परन्तु प्रत्येकं स्थानस्य विभिन्नानि क्षितिजानि खस्वस्तिकस्थानानि च भवन्ति। अत एव स्थानविशेषे प्राप्ता नियामका स्थानान्तराय अनुपयुक्ता। नक्षत्राणि काले काले परिवर्तनं भजन्ते। अत एव स्थानविशेषे विदिता अपि नियामका काले भिन्ना भवन्ति। अत एव देशकाल भेदादियं पद्धतिर्नाधिकमुपयुक्ता।

## १.४ खगोलीयनियामकाः—(२) विषुवांशक्रान्त्यंशपद्धतिः

ध्रुवस्थानम्—प्रायेण नक्षत्राणि खे पूर्वतः पश्चिमदिशां प्रति गच्छन्ति दृश्यन्ते, तथा प्यावसायिकलोकरुचिज्योतिर्विनिर्दिष्टं यत् खगोले स्थानविशेषे स्थितमेकं नक्षत्रं परिभ्रमणं न भजते (द्रष्टव्यं फोटोचित्रम्)। अत एव तैर्निश्चितं यद् यदि नक्षत्राणां दूरत्वं ध्रुवस्थानाद् मापितं भवेत् तर्हि तल्लब्धा नियामकपद्धतिः स्थानकालपरिवर्तनैरप्रभावितत्वादत्यन्तमुपयुक्ता भवेत्। पद्धतिरियं विषुवांशक्रान्त्यंशपद्धतिरुच्यते।



सदोदितनक्षत्राणि [ यरकिसवेधशाला ] ]
ध्रुवसमीपवर्तिनक्षत्राणां छायाचित्रं प्रकाशोद्घाटन होरैकमितम्।
मध्ये ध्रुवो ध्रुवस्थानञ्च।

ध्रुवस्थानम्—खगोलस्य यो निश्चलो बिन्दुरस्ति स ध्रुवस्थानं कथ्यते। खगोले द्वे ध्रुवस्थाने उत्तरध्रुवस्थानं दक्षिणध्रुवस्थानम्। उत्तरध्रुवस्थानाति समीपवर्ति नक्षत्रं 'ध्रुव' कथ्यते। ध्रुवनक्षत्रं परिवर्तनशीलमस्ति (द्रष्टव्यम् § १२६१)।

नाडीवृत्तम्—ध्रुवस्थानाद् नवत्यंशमितत्रिज्यया खगोले कल्पितं वृत्तं नाडीवृत्तं विषुववृत्तं कालवृत्तं वा कथ्यते।

## १.४१ नियामकपद्धतिः

अस्यां पद्धत्यां प्रधानं महद्वृत्तं नाडीवृत्तमस्ति। गौणानि महद्वृत्तानि ध्रुवयोर्गतानि महद्वृत्तानि। प्रमुखगौणमहद्वृत्तं मेषसम्पातप्रोतं ध्रुवयोर्गतं महद्वृत्तमस्ति। प्रथमा

नियामको विषुवांशा, द्वितीयो नियामकः क्रान्त्यंशा कथ्यन्ते। नक्षत्रप्रोत ध्रुवयोर्लग्न गौणमहद् वृत्त होरावृत्तनाम्ना प्रसिद्धम्।




नाडीवृत्तम्, ध्रुवौ

विषुवांशा — नाडीवृत्तमनु मापितं मेषसम्पातान्नक्षत्रविशेषस्य कोणीयान्तरं विषुवांशा। अर्थात् नाडीवृत्तस्य होरावृत्तसम्पात मेषसम्पात मध्यवर्तिनो वृत्तांशा विषुवांशा। विषुवांशाना गणना मेषसम्पातात् पूर्वदिशायां भवति। विषुवांशा कोणप्रमापके ०° अंशात्प्रारम्य ३६० अंशपर्यन्तम्, होराप्रमापके ० होरात प्रारम्य २४ होरापर्यन्त गण्यन्ते।

क्रान्त्यंशा —होरावृत्तमनु नाडीवृत्ताद् नक्षत्रविशेषस्य कोणीयान्तरं क्रान्त्यंशा कथ्यते। अर्थात् होरावृत्तस्य नक्षत्र होरावृत्तनाडीवृत्तसम्पात मध्यवर्तिनो वृत्तांशा क्रान्त्यंशा।

१.४ खगोलीयनियामकाः —(३)
होराकोणक्रान्त्यंशपद्धतिः

पद्धतिरियं पूर्ववत्। केवलं प्रमुखगौणवृत्तमत्र दर्शकस्य याम्योत्तरवृत्तमस्ति। अत्र एव नाडीवृत्तमनु मापितं याम्योत्तरवृत्त नाडीवृत्त सम्पातात् नक्षत्रविशेषस्य कोणीयान्तरं होराकोणः। याम्योत्तरवृत्तस्य द्वे शाखे—प्रथमायां शाखायां खस्वस्तिकयुक्त याम्योत्तरवृत्तार्धं, द्वितीयायाञ्च पातालस्वस्तिकयुक्त याम्योत्तरवृत्तार्धं।

होराकोणा याम्योत्तरवृत्तापेक्षि त्वात् स्थानपरिवर्तनात् परिवर्तन्ते। भूगोलीयमध्यरेखाप्रदेशे गणना 'ग्रिनिचमध्यहोराकोणेन' क्रियते।




नक्षत्रस्य स्थाननिर्धारणं ( विषुवांशक्रान्त्यंशपद्धत्याम् )
इष्टनक्षत्रस्य विषुवांशा २०° क्रान्त्यंशा २०°

## १.५१ अहोरात्रवृत्तानि

नक्षत्राणि प्रतिदिनं पूर्वतः पश्चिमदिशायां गच्छन्ति । गतिरियं तेषां दैनन्दिनी गतिः कथ्यते । तेषां मार्गाश्च अहोरात्रवृत्तानि कथ्यन्ते ध्रुवसमीपवर्तिनक्षत्राणि मन्दगत्या अहोरात्रवृत्तेषु भ्रमन्ति । नाडीवृत्तसमीपवर्तिनक्षत्राणि तीव्रगत्या निजेष्वहोरात्रवृत्तेषु भ्रमन्ति ।



पार्थिवध्रुवे अहोरात्रवृत्तानि

सुमेरु ( पार्थिवोत्तरध्रुव ) स्थाने ध्रुवस्थानं खस्वस्तिके वर्तते, क्षितिजञ्च नाडीवृत्तादभिन्नं भवति । अत एव नाडीवृत्तसमानान्तराण्यहोरात्रवृत्तानि क्षितिजसमानान्तराणि भवन्ति (द्रष्टव्यमेतच्चित्रम् ) । अत एव उत्तरार्धवर्तिनक्षत्राणि सदोदितनक्षत्राणि भवन्ति ।

ध्रुवस्य उन्नतांशाः स्थानापेक्षिणः सन्ति । चित्रे इदं स्पष्टीभविष्यति ।

अत्र ध्रुवसुमेरौ ध्रुवस्य उन्नतांशाः शून्यमिताः । निरक्षप्रदेशे ९०° मिताः । अन्यस्थाने ( ९०° अक्षांश ) मिताः ।



ध्रुवस्योन्नतांशाः स्थानापेक्षिणः

पार्थिवविषुवरेखावर्तिप्रदेशेषु ध्रुवस्थानं क्षितिजलग्नं दृश्यते । नाडीवृत्तञ्च खस्वस्तिकगामि भवति । अत एव नाडीवृत्तसमानान्तराणि अहोरात्रवृत्तानि ऊर्ध्वाधराणि भवन्ति । अत एव प्रत्येकं नक्षत्रं ( उत्तरार्धवर्ति दक्षिणार्धवर्ति वा ) तत्र दृश्यते ।



पार्थिवविषुवरेखायामहोरात्रवृत्तानि

सुमेरु-विषुवरेखामध्यवर्तिस्थानेषु ध्रुवस्थानं खस्वस्तिकात् क्षितिजस्य चाभिन्न भवति गच्छते । अत एव अहोरात्रवृत्तानि तिर्यग् भवन्ति । खगोलस्य कश्चिद् भागः क्षितिजस्य सदैव अधः, कश्चिद् भागः सदैव उपरि वर्तते । खगोलस्य यो भागः सदैव क्षितिजस्य अधो वर्तते, तद्वर्तीनि

नक्षत्राणि कदापि न दृश्यन्ते। यो भागः सदैव उपरि वर्तते तद्वर्तीनि नक्षत्राणि सदैव दृश्यन्ते। मध्यवर्तिभागस्य नक्षत्राणि वर्षे कदाचिद् दृश्यन्ते, कदाचिन्न दृश्यन्ते।

सदोदितानि नक्षत्राणि—उपर्युक्तं यत् खस्य यो भागः सदैव उपरि वर्तते तद्वर्तीनि नक्षत्राणि सदैव दृश्यन्ते। एतानि नक्षत्राणि सदोदितानि नक्षत्राणि कथ्यन्ते।

यदि नक्षत्रस्य क्रान्त्यंशाः स्थानविशेषाक्षांशहीननवत्यंशेभ्योऽल्पा न (यदि क्रान्त्यंशाः > ९०—अक्षांशाः) तर्हि स्थानविशेषे तन्नक्षत्रं सर्वदा दृश्यते।



सुमेरुविषुवरेखामध्यवर्ति स्थाने अहोरात्रवृत्तानि

उदाहरणम् — देहरादूनस्य अक्षांशाः + ३०°, अत्र एतानि तानि नक्षत्राणि सदोदितानि। येषां क्रान्त्यंशाः (९०–३०=) ६०° अक्षतुल्याः ६०° अंशेभ्योऽधिकाः।

## १.६ खगोलीयनियामकाः—(४) खगोलीयाक्षांशरेखांशपद्धतिः




क्रान्तिवृत्तं पदम्सस्थाने

**क्रान्तिवृत्तम्**—सूर्यस्य प्रतीयमानो वार्षिकमार्गः क्रान्तिवृत्तं कथ्यते । अस्य नाडीवृत्ताद् २३½° मिता प्रनतता विद्यते ।

**उत्तरायणम्, दक्षिणायनम्, मेषसंपातः, तुलासंपातः**—क्रान्तिवृत्तं ययोः स्थानयोर्नाडीवृत्तमुल्लङ्घयति, तत्र संपातौ विद्येते । प्रतीयमानः सूर्य उत्तरं गच्छन् यत्र नाडीवृत्तमुल्लङ्घयति तत्र मेषसंपातः, यत्र च दक्षिणं गच्छन् नाडीवृत्तमुल्लङ्घयति तत्र तुलासंपातः ।

उत्तरायणं दक्षिणायनं च क्रान्तिवृत्ते नाडीवृत्ताद् दूरतमस्थाने । उत्तरायणम् उत्तरार्धे, दक्षिणायनं दक्षिणखगोलार्धे वर्तते ।

**कदम्बस्थानम्**—क्रान्तिवृत्तस्य ध्रुवस्थाने उत्तरकदम्बस्थानं दक्षिणकदम्बस्थानं कथ्येते ।

## १.६१ नियामकपद्धतिः

यतः प्राचीनज्योतिर्विद्भिः प्रायेण सूर्यचन्द्रयोर्ग्रहणानां या स्थितिर्गणिता, एते सर्वे च क्रान्तिवृत्तेऽथवा क्रान्तिवृत्तस्य सामीप्ये वर्तन्ते, अत एव तैः खगोलीयाक्षांशाः खगोलीयरेखांशाः प्रायुज्यन्त ।

अस्या पद्धत्या प्रधानं महद्वृत्तं क्रान्तिवृत्तमस्ति । नैतानि कदम्बयोर्लग्नानि महद्वृत्तानि




भोगशरपद्धतिः

गौणमहद्वृत्तानि । प्रमुखगौणवृत्तं मेषसंपातयोः कदम्बयोर्लग्नं गौणमहद्वृत्तम् । प्रथमो नियामकः खगोलीयरेखांशः (मार्तण्डपद्धत्या भोगांशाः सेव्यन्ते वा), द्वितीयो नियामकश्च खगोलीया

शांशाः ( भारतीयपद्धत्यां शराः ) सन्ति । नक्षत्रप्रोतं कदम्बयोर्मध्ये गौणमहद्वृत्तं नक्षत्र-कदम्ब-प्रोतमण्डलं कथ्यते ।

खगोलीयरेखांशाः—क्रान्तिवृत्तमनु मापितं मेषसंपाताद् नक्षत्रविशेषस्य कोणीयान्तरं खगोलीयरेखांशाः ।

खगोलीयाक्षांशाः—नक्षत्रकदम्बप्रोतमण्डलमनु मापितं क्रान्तिवृत्ताद् ऊर्ध्वत्वं निम्नत्वं कोणप्रमापके खगोलीयाक्षांशाः ।

### १.७ विभिन्ननियामकानां प्रयोगस्थलानि

दिगंशोन्नतांशपद्धतिः प्रायेण नौचालने प्रयुज्यते । विषुवांशक्रान्त्यंशपद्धत्या नक्षत्राणां सूची निर्मीयते । नाविकपञ्चाङ्गेषु ग्रहाणां नियामका होराकोणक्रान्त्यंशपद्धत्यापि दीयन्ते । सूर्यचन्द्रयोः खगोलीयरेखांशाः खगोलीयाक्षांशाः यदा कदा प्रयुज्यन्ते ।

### विशेषद्रष्टव्यानि

खगोलस्य खगोलज्ञानस्य च भारतीयज्योतिषग्रन्थेष्वतिमहत्त्वमिति प्रमुखग्रन्थान्तर्गत 'गोलाध्याय'विरचनेनैव प्रत्यक्षम् । गोलाध्याया ग्रन्थस्य प्रमुखभागा आसन्, गोलज्ञानं विना ज्योतिर्विद् दन्तुरितदर्वीतुल्यो ज्योतिषग्रन्थश्च सारहीन एव—

शशधरकिरणैर्विना प्रदोषः कुञ्चरहिव लवणावनस्य वधः ।
मधुरसविवर्जितं च भोज्यं न किमपि गोलविवर्जितं च तन्त्रम् ॥

खगोलस्य वास्तविकी सत्ता न काऽपि, तस्य कल्पना ग्रहाणां स्थानमानप्राप्तये कृता ( § १.१ ) इति भास्कराचार्यस्याप्यभिमता ।

दृष्टान्त एवावनिभग्रहाणां संस्थानमानप्रतिपादनार्थम् ।
गोलः स्मृतः क्षेत्रविशेष एष प्राज्ञैरतः स्याद् गणितेन गम्यः ॥

अस्मिन्नध्याये व्यवहृतानां खस्वस्तिक क्षितिज ध्रुव कदम्बादीनां सुज्ञा आसन् भारतीय ज्योतिषाचार्याः । प्रत्येक प्रमुखग्रन्थे 'त्रिप्रश्नाधिकार' अवश्य वर्तते । तत्र तत्सम्बन्धिगोलाध्याये च प्रायः सर्वेषाम् अत्र प्रयुक्तानां पारिभाषिकशब्दानां परिभाषा दत्ताः सन्ति । अत्र निदर्शनार्थं भास्कराचार्यपठिताः कतिपयाः परिभाषा दीयन्ते—

### याम्योत्तरवृत्तं ध्रुवस्थानं सममण्डलञ्च

पूर्वापरं विरचयेत् सममण्डलाख्यं याम्योत्तरञ्च विदिशोर्वलयद्वयञ्च ।
ऊर्ध्वाध एवमिदं वृत्तचतुष्कमेतदावेष्ट्य तिर्यगपरं क्षितिजं तदर्धे ॥

एकं पूर्वापरमन्यद् याम्योत्तरं तथा कोणवृत्तद्वयमेवं वृत्तचतुष्कमूर्ध्वाधोरूपमावेष्ट्य तदर्धे वृत्तं क्षितिजाख्यं निवेशयेत् । अत्र याम्योत्तरवृत्ते उत्तरक्षितिजादुपरि पलांशान्तरे एकं ध्रुवचिह्नं कार्यम् । दक्षिणक्षितिजादधोऽन्यत् । ( द्रष्टव्या चित्रसंख्या ३ )

विषुवन्मण्डलम्—तयोरेव पूर्वापरसम्पातयोर्बिम्ब तथा याम्योत्तरवृत्ते खस्वस्तिकाद् दक्षिणतोऽथ स्वस्तिकादुत्तरतोऽक्षांशान्तरे यद् वृत्त निबध्येत तद् विषुववृत्तम्।

वेधशालेषु निरयणमानानां प्रथमा पद्धति स्वीकृतासीत्। कालादिज्ञानाय (उदयास्तज्ञानाय) द्वितीया पद्धति प्रचलितासीत्। ग्रहाणां स्थानज्ञानाय चतुर्थी पद्धति प्रसिद्धासीत्। पद्धतय एताः सर्वेषां सुविदिता एव, अत एव विस्तरेण न दीयन्ते।

§. १.५१—तमेव यथा वर्णितं तथैव श्रीपतिनोक्तम्—

याम्योत्तरस्थौ क्षितिजाश्रितौ ध्रुवौ सदैव पश्यन्ति निरक्षदेशजाः।
स्वमूर्धगं मेरुगतास्तमुत्तरं तथेतरं वाडवयासिनो जनाः॥
भूमध्यकाद् भूमितलं नरा ये निरक्षदेशाभिमुखं प्रयान्ति।
तैर्वीक्ष्यतेऽभ्युन्नतमक्षचक्रमिदं ध्रुवश्चापि नतः क्रमेण॥



# द्वितीयोऽध्यायः

"द्यौर्मे पिता जनिता नाभिरत्र बन्धुर्मे माता पृथिवी महीयम्"

(ऋ० सं० १ १६४ ३३)

[ पृथिवी सर्वेषामस्माकं धारयित्री पालयित्री सहजपरिचिता च । अत्र तस्या आकारा भ्रमणादीनि वर्ण्यन्ते । तद्भ्रमणपरिभ्रमणापेक्षित्वात् कालविभागोऽप्यत्रैव दीयते । ]

## पृथिवी

**२ १ पृथिव्या आकारः**

पृथिवी गोलाकारेति सिद्धान्तोऽतिप्राचीनः । भारतवर्षे ग्रीसादिदेशेषु वा सर्वत्र ज्योतिर्वैज्ञानिकैर्गोलाकारत्वस्य प्रमाणानि प्रस्तुतान्यनेकधा । मध्ययुगादागतानि प्रमाणान्येतान्येव—

(अ) यदा कश्चित्पोतः समुद्रतटमुपसरति तदा प्रथमं समुद्रतटवर्तिजनैस्तस्य कूपाग्रमेव दृश्यते, तदनन्तरं तस्य मध्यभागो दृष्टिगोचरतां याति, अन्ततः पूर्णः पोतो नेत्रपथे आपतति । घटनाक्रमोऽयं तदैव सम्भवो यदा पृथिवी समतला न भवेत् । चेत् पृथिवी समतलाऽभविष्यत्तर्हि पोतः सम्पूर्णतयैव प्रथमतो द्रष्टव्योऽभविष्यत् ।

इत्थमेव यदा पोतः पर्वतीयसमुद्रतटमुपगच्छति तदा पोतस्थजनः प्रथमं पर्वतशिखरमात्रं पश्यति, पुनश्च पर्वतमध्यभागं पश्यति, अन्ततश्च पर्वतमूलवर्तिप्रदेशानीक्षते । अयमपि घटनाक्रमः पृथिव्याः समतलत्वं निराकरोति ।

(आ) सूर्योदयः सर्वत्र एकस्मिन्नेव समये न भवति, पूर्ववर्तिदेशेषु सूर्योदयः पूर्वं भवति, पश्चिमवर्तिदेशेषु च पश्चात् । अत एव पृथिवी समतला न, अन्यथा सर्वत्र समकालमेव सूर्योदयो भवेत् ।

(इ) चन्द्रग्रहणे चन्द्रस्य तिरोहितभागो गोलाकारः । चन्द्रग्रहणं तदैव सम्भवं यदा चन्द्रसूर्ययोर्मध्ये पृथिवी आगच्छति । चन्द्रे पतिता भूच्छाया एव ग्रासकारणम् । यदि पृथिव्या आकारो गोलेतरो (यथा त्रिकोणाकारः) भवेत्तर्हि प्रतिबिम्बमपि गोलेतरं (यथा त्रिकोणाकारं) भवेत् । गोलवस्तुन एव प्रतिबिम्बं सर्वदा गोलम्, नान्याकारवस्तुनः ।

(ई) कश्चिज्जनो यथा यथा स्वस्थानाद् उत्तरदिशि दक्षिणदिशि वा गच्छति तथा तथा स रात्रौ नवीनं नक्षत्रमण्डलमवलोकते । नूतननक्षत्रमण्डलानामालोकनं क्षितिजानां भिन्नत्वादेव सम्भवम् । क्षितिजानां भिन्नत्वं गोलाकारे एव सम्भवम् (द्रष्टव्य § १.५१) (क्षितिजं वस्तुनो भूगोलस्य भूपृष्ठवर्तिनी स्पर्शरेखा, स्पर्शरेखाया भिन्नत्वं गोलाकारवस्तुन एव, समतलवस्तुन एकैव स्पर्शरेखा) । अत एव पृथिवी यदि समतलचक्राकाराऽभविष्यत् स्थानपरिवर्तनेन न नूतननक्षत्रचयः नयनपथमागमिष्यत् । एवमपरिचितनक्षत्रमण्डलस्य दर्शनं समर्थयति पृथिव्या गोलाकारत्वम् ।

( उ ) यथा यथा नरो निरक्षदेशाद् उत्तरदिशि गच्छति तथा तथा ध्रुवस्योन्नतांशा अधिका भवन्ति। निरक्षदेशे तु ध्रुव क्षितिजलग्न, अर्थाद् उन्नतांशास्तस्य शून्यमिता। यथा यथा नर उत्तरदिशि चलति, ध्रुवस्योन्नतांशा उत्तरोत्तरं वृद्धिं प्राप्नुवन्ति। अन्ततो ध्रुवप्रदेशे ध्रुव खस्वस्तिके वर्तते, अर्थात्तस्योन्नतांशा नवतिमिता भवन्ति। पृथिवी यदि गोलाकारा नाभविष्यद् ध्रुवस्योन्नतांशा सर्वत्र समामिता अभविष्यन्।

( ऊ ) यूरोपीयदेशेषु मध्ययुगात् प्रारभ्य नाविका विशालजलपोतमारुह्य सुदूरदेशानपि अगच्छन्, तेषामनुभवोऽप्येष यत् पृथिवी समतला न। एकस्मात् स्थानात् प्रस्थितास्ते



पृथिव्या गोलाकारत्वं स्पष्टमत्र दृश्यते।

ऽस्मादधोगतिम् ऊर्ध्वारोहणञ्चान्वभवन्। यतः न सम्मुखे एव गच्छन्तः पुनः प्रस्थानस्थलमा गच्छन्। अतः पृथिवी गोलाकारैव।

आधुनिककाले उपर्युक्तान्येव प्रमाणानि वेधोपलब्धसूक्ष्मगणनया नवीनतमयन्त्रोपलब्ध निरीक्षणैर्वैज्ञानिकपद्धत्या च परिपुष्टता लभन्ते। नवीनतम प्रमाणमग्निबाण द्वारा भुवः फोटो चित्रम्। नातिपूर्वखिस्ताब्दे १९४७ तमे वत्सरे मार्चमासस्य ७ तमे दिनाङ्के 'न्यूमेक्सिको' स्थान एकोऽग्निबाण आकाशे प्रक्षिप्त। १०१ क्रोशार्धोच्चस्य आकाशगामस्य 'कैमरा' यन्त्रेण पृथिव्या यद् फोटोचित्र गृहीत तदत्र दत्तम्। १४ पृष्ठस्थेन चित्रेण पृथिव्या गोलाकारत्व सुस्पष्टमेव दृश्यते।

पृथिव्या गोलाकारत्वमेव न केवलमाधुनिकज्योतिर्विद्भि सुप्रमाणितम्, गोलत्वपरिमाणमपि सुनिरूपितम्। गोलत्वमान (वक्रतामानम्) एव क्रियते। एक सुदृढ क्रोशमितदीर्घो लौहदण्ड पोतात् समुद्रमध्ये सुदृढयन्त्रेण मध्यभागाद् लम्ब्यते। यत पृथिवी गोलाकारा, अत समुद्रपृष्ठ शनै शनैर्निम्नतामधिगच्छति, लौहदण्डस्य च उभे कोणे समुद्रपृष्ठात् किञ्चिदूर्ध्वे तिष्ठत। सूक्ष्मनिरीक्षणेनेदम् ऊर्ध्वत्वम् अष्ट इञ्च मितम्, अर्थात् पृथिवी क्रोशार्धे अष्ट इञ्च मित निम्नत्व भजते। निम्नत्वमिदमन्तरवर्गेण च भिद्यते, अर्थात्

२ क्रोशार्धान्तरेण $२^२ \times ८ = ३२$ इञ्चतुल्यम्।

३ क्रोशार्धान्तरेण $३^२ \times ८ = ७२$ इञ्चतुल्य भवति।

निम्नचित्रमिद प्रदर्शयति—




गोलत्वमानवक्रनम्

### २.११ पृथिव्या ध्रुवनिम्नता

पूर्वानुच्छेदे पृथिव्या गोलाकारत्व प्रमाणपुरस्सर व्याख्यातम्। परन्तु पृथिवी सर्वथा गोलाकारा न, तस्या ध्रुवप्रदेशौ किञ्चिद् निम्नावेव। यदि पृथिवी साकल्येन गोलाकाराऽभविष्यत्

तर्हि देशान्तरवृत्तानि सर्वथा वृत्ताकाराणि, देशान्तरवर्तिनः कस्यचिदंशस्य दीर्घत्वं सर्वत्र समानमेवाभविष्यत्। परन्तु देशान्तरवृत्तानि दीर्घवृत्ताकाराणि, अंशस्य दीर्घत्वमसमम्। निम्नलिखितसारिण्यामंशस्य दैर्घ्यं च सूक्ष्मतया परिमाय लिखितम्—

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| निरक्षप्रदेशे | एकस्यांशस्य | | दीर्घत्वम्— | ६८.७०४ | क्रोशार्धमितम्। | | |
| २०° अक्षांशप्रदेशे | ,, | ,, | ■ | ६८.७८६ | ,, | ,, | । |
| ४०° ,, | ,, ,, | ,, | ■ | ६८.९९२ | ,, | ,, | । |
| ६०° ,, | ,, ,, | ,, | ,, | ६९.२३० | ,, | ,, | । |
| ८०° ,, | ,, ,, | ,, | ,, | ६९.३८६ | ,, | ,, | । |



उपरिलिखितसारिण्या सुस्पष्टं यद् ध्रुवप्रदेश एकस्यांशस्य दीर्घत्वमधिकम्, अर्थाद् देशान्तरवृत्तानि ध्रुवप्रदेशे किञ्चिन्न्यूनमानया वक्रत्वं लभन्ते, अर्थात्तानि किञ्चिन्मात्रदीर्घवृत्ताकाराणि। पार्श्वलिखितचित्रेण कथं देशान्तरवृत्तस्य दीर्घवृत्तत्वाद् अंशदीर्घत्वेऽन्तरमापततीति प्रदर्श्यते।

पृथिव्या गोलत्वम्—विषुवरेखाया ध्रुवेरौ च।

### २.१२ ध्रुवनिम्नताया मानम्,

### पृथिव्याः व्यासश्च

निरक्षप्रदेशे पृथिव्या व्यासस्य परिमाणं ७९२६.६८ क्रोशार्धमितम्, परन्तु ध्रुवप्रोतव्यासः (ध्रुवयोः एतां धृत्वा) ७८९९.८८ क्रोशार्धमितः। विशोधनाद् द्विरूपात् १३.३५ क्रोशार्धमिता प्रत्येकस्य ध्रुवस्य निम्नता।

$$\text{ध्रुवनिम्नताया मानम्} = \frac{\text{महत्तमो व्यासः} - \text{अल्पतमो व्यासः}}{\text{महत्तमो व्यासः}}$$

$$= \frac{२६.७}{७९२६.६८} = \frac{१}{२९७}$$

पृथिव्या ध्रुवनिम्नतामानम् $\frac{१}{२९७}$ अत्यल्पमेव, अर्थाद् व्यासदृष्टिदृष्ट्या पृथिवी गोलाकारैव। महाप्रयत्नेन रचितं सर्वथा गोलं कन्दुकमपि पृथिव्या अधिकं ध्रुवनिम्नत्वं भजते। पुनश्च यदि पृथिवी एकमितव्यासार्धेन कन्दुकेन निरूप्यते तर्हि ध्रुवप्रदेशयोः $\frac{१}{३}$ इञ्चमितं निम्नत्वम्। उच्चतमस्य पर्वतशिखरस्याप्यस्मिन् कन्दुके $\frac{१}{१०}$ इञ्चमितं उच्चत्वं भविष्यति, अतस्तुच्छत्वस्य नेत्राभ्यां न दृश्यते।

ध्रुवनिम्नताया देवरमप्रमाणमस्ति। किन्तु सुस्पष्टतया न ज्ञायते, सूक्ष्मत्वस्यैव।

## २.२ पृथिव्या भ्रमणम्

ये मरा (पृथिवी एषो मद एव) एवं परितो भ्रमन्ति, भ्रमणमिदं परिभ्रमणमिति

निगद्यते। परन्त्वेते ग्रहाः स्वार्क्षं (यास्योदग्वुत्प्रोतयष्टिं वा) परितोऽपि भ्रमन्ति, भ्रमणमिदमक्षभ्रमणं कथ्यते। अक्षोऽयं तेषां पिण्डानामन्तर्विद्यते। परिक्रमणे पिण्डो यस्मिन् कक्षावृत्ते परिभ्रमति तस्य वास्तविकी सत्ता, परन्त्वक्षः केवलं काल्पनिकं ध्रुवयोर्लग्नं सूत्रम्।

## २.२१ अक्षभ्रमणस्य प्रमाणानि

प्राचीनकाले योरोपनिवासिनां मतेन पृथिवी अचलासीत्। 'कापर्निकस'-महोदयस्य पूर्वमिदमेव मतं सर्वैरङ्गीकृतमासीत्। दिनरात्रिविभागस्य विद्येते द्वौ विकल्पौ—(क) पृथिवी पश्चिमदिशः पूर्वदिशं भ्रमति, (ख) खगोल एव ससूर्यः प्रतिदिनं पूर्वस्मात् पश्चिमदिशं भ्रमति। प्राचीनानां विचारे प्रथमो विकल्पो न सम्भवः, परन्तु 'कापर्निकस' महोदयस्य मतेन प्रथमविकल्प एव सम्भवः। अधुना तु कापर्निकसमहोदयस्यैव मतं सर्वैः स्वीक्रियते। अर्थात् पृथिव्येव प्रतिदिनं पश्चिमदिशः पूर्वदिशं भ्रमति, अथवा अक्षभ्रमणं करोति।

अधो दीयन्ते मुख्यानि प्रमाणानि। एषां 'फूको' महोदयस्य दोलनप्रयोग एव सर्वप्रथममप्रत्याख्येयभौतिकप्रमाणम्।

(१) दिनरात्रिविभागस्य व्याख्यायामेकाकिन्याः पृथिव्याः पश्चिमदिशः पूर्वदिशि भ्रमणं सकलखगोलस्य प्रतिदिनं पूर्वदिशः पश्चिमदिशि भ्रमणस्यापेक्षया स्वाभाविकं सरलतरञ्च।

(२) सूर्यश्चन्द्रोऽन्ये ग्रहाश्च दूरदर्शकयन्त्रेणाक्षभ्रमणं कुर्वन्तो दरीदृश्यन्ते, अतएव पृथिव्या अप्यक्षभ्रमणं युक्तियुक्तम्।

(३) यदि सूर्योऽन्ये ग्रहाश्च सुदूरवर्तिनक्षत्रसमूहश्च (संक्षेपेण सम्पूर्णः खगोलः) प्रतिदिनं पूर्वस्मात् पश्चिमदिशं भ्रमेयुः, तर्हि तेषां मध्योत्सारिणी शक्तिः खलु महती भवेत्। इदन्तु न तथा। अत एव पृथिवी एव अक्षभ्रमणं करोति।

(४) 'न्यूटन' महोदयेन १६७९तमे खिस्ताब्दे एकः प्रयोगः कृतः। एकस्मादत्युच्चहर्म्यशिखरात् सोऽपातयदेकं लौहपिण्डम्। स लौहपिण्डो यथार्थाधोबिन्दोः किञ्चित्पूर्वमपतत्। किञ्चित्पूर्वपतनमिदं पृथिव्या अक्षभ्रमणादेव।

(५) रणक्षेत्रे उत्तरदिक्स्थलक्ष्याभिमुखमाक्षिप्तः शरो यथार्थलक्ष्यात् किञ्चित् पूर्वेण पतति, लक्ष्यात् किञ्चित् पश्चिमं साधितः शर एव लक्ष्ये पतति। एवमेव दक्षिणदिक्स्थलक्ष्ये साधितः शरो यथार्थलक्ष्यस्य किञ्चित् पश्चिमेन पतति। अत एव सिद्धं यद् भूपृष्ठमनु वस्तु पृथिव्या अक्षभ्रमणात् सव्यं व्यावर्तते। भूगोले अधीतो वातानां क्रमोऽपीदमेव समर्थयति।

(६) १८५१ तमे खिस्ताब्दे फ्रांसदेशवासी 'फूको'-महोदय एकं दोलकं ('पेण्डुलम्'त्ययन्त्रम्) परिभ्राम्य अक्षभ्रमणस्य समर्थनमकरोत्। एकस्मादत्युच्चहर्म्यशिखरस्य पटलस्य मध्यभागाद् एकेन २०० फिटमितलौहरज्ज्वा एको वृहद्लौहपिण्डोऽवलम्बितः। अयःपिण्डस्याधोभागे एका लौहसूचिका आसक्तासीत्। सा च बालुकापूर्णसमतलभाजनं स्पृशत्येव। तत्स्पर्शेन बालुकोपरि रेखा दृश्यते। तत्र सर्वाणि प्रयोगवस्तून्यनिलस्थानानि संघर्षविहीनानि। प्रयोगे दृष्टं यद् बालुकोपरि कृताया रेखाया दिशा शनैः शनैर्भिन्ना भवति। प्रतिहोरं दिग्भिन्नत्वं पञ्चदशगुणिताक्षांशज्यामितांशाः। अर्थाद् ध्रुवप्रदेशे कृते प्रयोगे दिग्भिन्नत्वं प्रतिहोरं

१५° भवेत्, निरक्षप्रदेशे च न किमपि दिग्भिन्नत्वमागच्छेत् । 'पेरिस'नगरस्य अक्षांशाः ४८°५०' मिताः, अक्षांशज्या ·७५, अत एव प्रतिहोर दिग्भिन्नत्वं ११$\frac{1}{4}$° भवेत् । प्रयोगे ( फूकोकृते प्रयोगे ) दिग्भिन्नत्वं ११$\frac{1}{4}$° एव आसीत् । यतो लोलकस्य सैव दिशा वर्तते ( प्रयोगवस्तूनामतिदलक्ष्यत्वात् ), रेखाया दिग्भिन्नता वर्तते, अतः स्वाभाविकोऽयं निष्कर्षो यद् वालुकापूर्णसमतलभाजनमेव परिभ्रमति, अर्थात् पृथिवी परिभ्रमति ।[1] 'फूको'दोलनप्रयोगस्य एकं कलाचित्रमधो दीयते ।



फूकोमहोदयस्य प्रयोगः

( ७ ) पृथिव्या ध्रुवनिम्नतापि भुवोऽक्षभ्रमणं प्रमाणीकरोति । यदा कोऽपि पिण्डोऽक्षभ्रमणं करोति तदा तस्मिन् मध्योत्सर्पिणी प्रवृत्तिर्जायते । यथा यथाक्षभ्रमणं शीघ्रतरं भवति तथा तथा मध्योत्सर्पिणी शक्तिः प्रबला भवति । मध्योत्सर्पिशक्त्या पिण्डस्य सर्वेषां कणानामक्षसूत्राद् दूरगमनप्रवृत्तिर्भवति । परन्त्वियं दूरगमनप्रवृत्तिर्निरक्षप्रदेशे सर्वाधिका, ध्रुवप्रदेशे न्यूनतमा शून्यसमा, अक्षसमीपत्वात् । अत एव पिण्डस्य निरक्षप्रदेशः किञ्चिद् बहिर्गमी स्थूलो वा भवति । यतः पृथिव्या एतादृशी स्थितिः, अत एव पृथिवी अक्षभ्रमणं करोति । गुरोः शनेश्च अतिशीघ्रतराक्षभ्रमणाद् ध्रुवनिम्नताया मानमधिकतरम् ।

२.२२ अक्षभ्रमणवेगः, अक्षभ्रमणकालश्च

पृथिवी प्रायः ६० घटिकायां निजाक्षं परितः एकं भ्रमणं करोति, अर्थात् पृथिव्या अक्षभ्रमणकालः घं २३ मि ५६ से ४·०९१ । यतः पृथिव्याः परिधेरासन्नमानं २५००० योजनानि,

[1] लोलकस्य 'आइरेकोप'पक्षमपि स्वदिशां न त्यजति । अत एवानेन पन्दे-शापि सरलतया पराभ्रमणं सिद्ध्यति ।

क्षणस्य प्रतिसेकिण्डं $\frac{२५०००}{२४ \times ६० \times ६०} = \frac{३}{१०} = ·३$ मितं कोणांशभागं भ्रमति, अथवा प्रतिपलं सप्तकोणांशानि भ्रमति।

## २.२३ अक्षभ्रमणवेगे अक्षभ्रमणकाले वा परिवर्तनानि

२६ जगति सर्वेषु कार्येषु कालनिश्चयस्यावश्यकता वर्तते। अधुना प्रायः सर्वेषु गण्यवित्त-पुरुषाणां गेहेषु दृश्यन्ते घटिकायन्त्राणि, परन्तु सर्वाणि घटिकायन्त्राणि सर्वदा समकाले सममेव समयं न प्रकटयन्तीति सामान्योऽनुभवः। प्रायस्तेषां भिन्नता जायते। भिन्नता चेयमादर्शघटिकाभिः 'रेडियो'कालसंकेतादिभिर्दूरीक्रियते यदा कदा जनैः। रेडियोसंकेताश्च वेधशालास्थसूक्ष्मसमय-मापकयन्त्रैः संशोध्यन्ते (वेधशालास्थसूक्ष्मघटिकायन्त्राणां विवरणं ६ दास्यते)। तानि वेधशाला-स्थयन्त्राणि च महता प्रयत्नेन सर्वथा दोषपरिवर्जितानि निर्मितानि, तथापि सम्भवन्त्येषु सूक्ष्मातिसूक्ष्मकालभेदाः। इदमपि परिहर्तुं ज्योतिर्विदो नक्षत्राणां याम्योत्तरवेधैरेव प्रतिदिनं दैनन्दिनयाम्योत्तरोल्लङ्घनसमयस्य पूर्वज्ञानात् कालं संशोधयन्ति। एवं कालसंशोधने याम्यो-त्तरोल्लङ्घनवेधः परमोपयोगी।

परन्तु याम्योत्तरोल्लङ्घनं नक्षत्राणां पृथिव्या अक्षभ्रमणादेव। यदि पृथिव्या अक्षभ्रमण-काले आगच्छेत् कश्चिद् भेदः, सर्वा कालसंशोधनव्यवस्था सदोषा भवेत्, अत एव अक्षभ्रमण-कालविकारः सर्वथा सूक्ष्मातिसूक्ष्मतया निश्चेतव्यः। विकारोऽयं निश्चीयतेऽन्यग्रहाणां वेधैः। चन्द्रकृतनक्षत्राच्छादनसमयः, गुरोरुपग्रहाणां परिभ्रमणसमयः, सूर्यबिम्बे बुधस्योल्लङ्घनसमयः— सर्वे एते गणनया गण्यन्ते पूर्वम् (एतेषां सर्वेषां पृथिव्या अक्षभ्रमणकालेन न कोऽपि सम्बन्धः, अत एव पृथिव्याः सत्यपि अक्षभ्रमणकालविकारे न दृश्यते एतेषां वेधेषु कश्चिद् भेदः), ततो वेधेन निश्चीयन्ते, ततो गणनागतसमय-वेधसमययोरन्तरं पृथिव्या अक्षभ्रमणकालविकार इति निर्धार्यते। एवमत्यल्पमितोऽपि कालभेदो निश्चीयते। अत एव ज्योतिर्विद्भिः साधितं यत् पृथिवी अचलतया अक्षभ्रमणं न करोति, काले काले अक्षभ्रमणकाले परिवर्तनं दृश्यते, परि-वर्तननियमाश्चैते—

(१) पृथिवी शनैः शनैरक्षभ्रमणानि मन्दीकरोति। फलस्वरूपं दिनस्य मानं प्रतिशतकं ·००१६ सेकिण्डमात्राधिकं भवति, अर्थात् यदि अद्य दिनमानं २३ हो ५६ मि ४·०९०५ से-मितं तर्हि संवत्सराणां शतकस्य अनन्तरं दिनं २३ हो ५६ मि ४·०९२१ से-मितं भविष्यति।

(२) अक्षभ्रमणगतौ अनियमितानि परिवर्तनानि दृश्यन्ते। अनियमितकालभेदस्य महत्तममानं ३० सेकिण्डमितं सम्भवम्। १७८४-तमे ख्रिस्ताब्दे पृथिव्या अक्षभ्रमणगतिरकस्मात् मन्दाभवत्, १८९९-तमे ख्रिस्ताब्दे चाकस्माद् द्रुता जाता।

(३) वार्षिकपरिवर्तनमपि गतौ दृश्यते। वसन्ते पृथिव्या गतिर्मन्दा भवति, शरदि द्रुता भवति। अस्मात् कारणाद् दिनमाने महत्तमकालभेदः ·००००२५ सेकिण्डमितः।

## २.२४ परिवर्तनकारणानि

समुद्रमध्ये समुद्राधस्तले आप्लावाना सङ्घर्षणम्, नदीभिः पृथिवीपृष्ठस्य एकस्माद् भागाद् भागान्तरं जल प्रस्तर कणकानां वहनम्, वायोः ऋतुसम्बन्धि प्रवाहः, समुद्राधस्तलस्योद्गमनमधोगमनञ्च, सर्वाण्येतानि कालभेदस्य मूले वर्तन्ते।

## २.२५ पार्थिवध्रुवयोः ( सुमेरुकुमेर्वोः ) प्रतीयमानविचलनम्

इष्टस्थानस्य अक्षांशनिर्णयो ध्रुवप्रदेशस्य वेधेनोन्नतांशानधिगम्य भवति, अत एव ज्योतिर्विदः काले काले ध्रुवोन्नतांशाना वेधान् कुर्वन्ति। अद्भुतं दृष्टं तैर्यद् उन्नतांशानां किञ्चिदतिसूक्ष्मातिसूक्ष्मान्तर दृश्यते काले काले। बहुकालपर्यन्त वेधान् विधाय तैर्निश्चितं यद् ध्रुवस्य विचलनं पार्थिवध्रुव ( सुमेरुकुमेरु )-विचलनाज्जायते। पार्थिवध्रुवयोर्विचलनमिदं अतिसूक्ष्मातिसूक्ष्मम्, अर्थात् प्रत्येको ध्रुवः ४० फिटपर्यन्तमेव विचलति। सर्वाधिकं विचलनमप्येतस्या पिकक्षाया न्यूनमेव। निम्नचित्रे विचलन प्रदर्श्यते—



१९१२–१९२० [illegible]

[illegible]

ध्रुवविचलनं सर्वप्रथमं 'चान्डलर'-महोदयेन गणितेनैव सूचितम्, पश्चाद् वेधेन निर्णीतम्। ध्रुवो नियतस्थानाद् द्विप्रकारेण गत्या विचलति। प्रथमगतेरन्दोलनं ०".१८, आवृत्तिकालः ४३२ दिनानि; द्वितीयगतेरन्दोलनं ०".०९, आवृत्तिकालश्च ३६५ दिनानि।

## २.३ पृथिव्याः परिक्रमणम्

प्राचीनकाले ज्योतिर्विदो भूस्थिरतावादिन आसन्, अर्थात् पृथिवी स्थिरा, सर्वे ग्रहाः ससूर्यचन्द्राः पृथिवीं परितो भ्रमन्ति, सूर्यस्य भगोले एकेन वर्षेण भुव एका पूर्णा प्रदक्षिणा करोतीति तेषां कथनमासीत्। अधुना तु सर्वैरिदं मतं निरस्तम्। हेतुप्रमाणपुरस्सरं सुनिश्चितं यत् पृथिवी एव सूर्यस्य परिक्रमां करोति, न तु सूर्यः पृथिव्याः।

### २.३१ प्रमाणानि

(१) प्रथमं तु दूरदर्शकयन्त्रैरिदं दृश्यते यत् सर्वे भौमादिग्रहाः सूर्यस्य प्रदक्षिणां कुर्वन्ति। पृथिवी अपि प्रदक्षिणां करोतीति निर्णयः स्वाभाविकः।

(२) अस्य गणितकं प्रमाणं केप्लर नियमेन लभ्यते। केप्लरनियमेन $\frac{(\text{ग्रहाणां मध्यमदूरत्वम्})^3}{(\text{प्रदक्षिणाकालः})^2}$ —निष्पत्तिः सदैव स्थिरो राशिः। अत्र बुधस्य भौमस्य गुरोस्य शनेश्च $\frac{(\text{मध्यमदूरत्वम्})^3}{(\text{परिक्रमणकालः})^2} = १$ समानो राशिरेव। अत आकर्षणसिद्धान्तेन अनुमानद्वयस्य सम्भावना (क) प्रथमं सर्वे ग्रहाः सूर्यं परितो भ्रमन्ति, (ख) द्वितीयं सर्वग्रहान् परितो सूर्यो भ्रमति। द्वितीयस्यासम्भवत्वात् प्रथमानुमानमेव युक्तियुक्तम्। यतो भुवः $\frac{(\text{मध्यमदूरत्वम्})^3}{(\text{परिक्रमणकालः})^2} = १$ अन्यग्रहपरिक्रमणगतस्थिरो राशिः, अत एव भूरपि सूर्यं परितो भ्रमति।

भुवमभितो भ्रमतश्चन्द्रस्य $\frac{(\text{मध्यमदूरत्वम्})^3}{(\text{परिक्रमणकालः})^2}$ = अन्यग्रहाणां परिक्रमणगतस्थिरराशेः भिन्नः, अत एव चन्द्रभुवोराकर्षणशक्तिर्भिन्ना। यदि सूर्यो भूगोलपरिक्रमणशाली भवेत्, तदा तस्यापि चन्द्रतुल्यः स्थिरराशिर्भवेत्। च तथा, अत एव सूर्यः पृथिव्याः प्रदक्षिणां न करोति। एवमन्वयव्यतिरेकाभ्यां गणितविधया भुवः सूर्यपरिक्रमणं सिद्धम्।

(३) नक्षत्राणां वार्षिकं लम्बनं दृश्यते (विशेषेण द्रष्टव्यः §११.२२) नक्षत्राणां भगोले प्रतीयमाना स्थितिः षण्मासानन्तरं किञ्चिद् भिन्ना भवति, पुनः षण्मासानन्तरं (अर्थात् प्रथमस्थितेर्वर्षानन्तरं) नक्षत्राणि तत्रैव दृश्यन्ते। अनेन भुवः परिभ्रमणं सूच्यते।

(४) नक्षत्राणां प्रकाशस्य किञ्चिद् मार्गच्युतिर्लभ्यते (विशेषेण द्रष्टव्यः § २.६५)। अनेन प्रकाशस्य सीमितगतिकस्य भुवः परिक्रमणञ्च सिद्ध्यति।

### २.३२ परिक्रमणमार्गः (भूकक्षा)

पृथिव्याः परिक्रमणकक्षा दीर्घवृत्ताकारा। अस्य दीर्घवृत्तस्य उत्केन्द्रितात्यल्पमिता। अन्यतरस्मिन्नाभौ तिष्ठति सूर्यः, अन्यो नाभी रिक्त एव। दीर्घवृत्तरचना एवं क्रियते—

द्वे शलाके किञ्चिदन्तरे दृढं स्थाप्येते, एकं सूत्रञ्च गृहीत्वा तस्य द्वे कोटी ग्रथित्वा प्रतिबध्यते, ततो यदि एका पेन्सिल (अथवा लेखिनी) गृहीत्वा, तया कर्षीकृतं सूत्रं तद्

आततत्या समन्ताद् भ्रामयेत्तदा सूत्रभ्रमणेन यः स्थित आकारो दीर्घवृत्तं कथ्यते। अत्र द्वे शलाके दीर्घवृत्तस्य द्वौ नाभी, सूत्रदीर्घत्वं = बृहदक्षव्यासः × ( १ + उत्केन्द्रिता )।


दीर्घवृत्त रचना

परिभ्रमणकक्षाया एष निश्चयः कृतः। सूर्यस्य प्रतीयमानबिम्बव्यासः पृथिव्या दूरत्वापेक्षी, अर्थाद् यथा यथा पृथिवी सूर्याद् दूरं गच्छति तथा तथा सूर्यबिम्बं लघुतरं प्रतीयते, यथा यथा च सूर्यस्य समीपं गच्छति तथा तथा सूर्यबिम्बं दीर्घतरं प्रतीयते। सूर्य-



भूकक्षाभ्यास

बिम्बस्य प्रतीयमानव्यासस्य च वैभेनोपलब्धिः, दूरदर्शकेनैव सुकरा। अतः प्रतिदिनं सूर्यस्य दूरत्वमपि गणनसुकरम्। दैनिकदूरत्वानां चित्रे आलेखनेन दीर्घवृत्ताकारं क्षेत्रं लभ्यते।

अस्य दीर्घवृत्तस्य उत्केन्द्रितात्यल्पमितैव। तस्य मानं केवलं $\frac{1}{६०}$ मितम् (सूक्ष्ममानं ·०१६७४)। अनया उत्केन्द्रितया लिखितं दीर्घवृत्तं केवलं नेत्राभ्यां वृत्तमिव दृश्यते।

दीर्घवृत्ते यो बिन्दुः सूर्यस्य समीपतमः स नीचबिन्दुः कथ्यते। दीर्घवृत्ते यो बिन्दुः सूर्यात् परमदूरत्वे स्थितः स उच्चबिन्दुः (उच्चं वा) प्रोच्यते। नीचबिन्दुः जनवरी-मासस्य प्रथमदिने, उच्चबिन्दुश्च जुलाई मासस्य प्रथमदिने भवति। नीचस्थपृथिव्याः सूर्याद् दूरत्वं ९,१४,००,००० क्रोशार्धमितम्। उच्चस्थपृथिव्याः सूर्याद् दूरत्वञ्च ९,४४,००,००० क्रोशार्धमितम्। सूर्यस्य प्रतीयमानबिम्बव्यासस्य क्रमशः ३२′ ३६″ कलादिकमितः, ३१″ ३१″ कलादिकमितश्च। सूर्यस्य मध्यमदूरत्वं ९,२९,००,००० क्रोशार्धानि।

## २.४ ऋतवः

वर्षे पाश्चात्त्यमतेन चत्वार ऋतवः—वसन्तो ग्रीष्मः शरत् शिशिरश्च। वसन्तो वसन्तसम्पातात् कर्कसंक्रान्तिपर्यन्तकालः, ग्रीष्मः कर्कसंक्रान्ति-शारदसम्पातमध्यवर्तिकालः, एवं शरदृतुः




शारदसंपाताद् मकरसंक्रान्तिपर्यन्तावधिः, शिशिरर्तुश्च मकरसंक्रान्ति-वसन्तसंपातमध्यवर्तिकालः।

## २.४१ ऋतूनां कालावयवः

यत पृथिव्या मन्दवर्ग समकाले समक्षेत्राण्यतिक्रामति, अत एव पृथिवी सूर्यसमीपप्रदेशेषु तीव्रगत्या परिभ्रमति। दूरप्रदेशे अर्थादुच्चे मन्दगत्या परिभ्रमति, अत एव सूर्यसमीपप्रदेशेषु ऋतवो लघुतरा, दूरप्रदेशेषु किञ्चिद्दीर्घतरा, शिशिरो लघुतम, शरद् किञ्चिद्दीर्घा, वसन्तो दीर्घतरो ग्रीष्मश्च दीर्घतम। सामान्यतया ऋतूना निम्नलिखितानि मानानि—

| | | | | | |
|---|---|---|---|---|---|
| वसन्त | — | ९२ | दिनानि | २०२ | होरा |
| ग्रीष्म | — | ९३ | दिनानि | १४४ | होरा |
| शरद् | — | ८९ | दिनानि | १८७ | होरा |
| शिशिर | — | ८९ | दिनानि | ०५ | होरा |
| आर्तववर्षमानम् | | ३६५ | दिनानि | ५८ | होराः। |

## २.४२ ऋतुकारणम्

ऋतूनाम् औष्ण्यस्य शैत्यस्य च कारण सूर्यसन्निधिर्न, यत शिशिरर्तौ भू सूर्यस्य समीपतम वर्तते (भूनीचबिन्दु जनवरीमासस्य प्रथमदिनाङ्के)। तथापि स एव काल शैत्यातिरेकस्य। पुन ग्रीष्मर्तौ भू सूर्यस्य दूरतम तिष्ठति (भुव उच्चबिन्दु जुलाईमासस्य प्रथमदिनाङ्के), तथापि न दूरत्वात् कापि न्यूनता औष्ण्यस्य।

तर्हि किं कारण ग्रीष्मे औष्ण्यस्य, शिशिरे च शैत्यस्य? अत्र पृथिव्या अक्षस्य प्रवणता मुख्यो हेतु। यदि पृथिवी स्थिरा भवेत् (अर्थात् भूपरिक्रमण न स्यात्) तदा न स्याद् ऋतुवैभिन्न्यम्। एकस्मिन् स्थाने सर्वदैक एव तापक्रमो भवेत्। यदि पृथिव्या अक्ष ऊर्ध्वाधर स्यात्तर्हि कश्चित् स्थानविशेष सर्वदा सूर्य प्रति एकाभेन प्रवणता भवेत—निरक्षप्रदेशेषु सर्वदा स्यौष्ण्यम्, ध्रुवप्रदेशेषु सर्वदातिशैत्यम्, अर्थात् स्थानविशेषे सर्वदैक एव तापक्रम। परन्तु वस्तुतो नैवम्। ध्रुवयोर्लग्न सूत्र (अर्थात्, अक्ष) क्रान्तिवृत्ततलस्योर्ध्वाधरात् २३½° मिता प्रवणता भवते। अक्षोऽयं भूकक्षाया सर्वदा समानान्तर एकबिन्द्वाभिमुखश्च, अर्थाद् महाकाशे अक्षस्य दिशा न परिवर्तते। अत एव स्थितोऽस्ति यद् ग्रीष्मर्तौ पृथिव्या उत्तरार्धं सूर्याभिमुख, शिशिरर्तौ दक्षिणार्धश्च सूर्याभिमुखो भवति।

अक्षस्य प्रवणत्वात् सूर्यस्य क्रान्तयो विभिन्ना। मकरसंक्रान्तौ सूर्य सुदूरदक्षिणे वर्तते, तस्य क्रान्त्यक्षाश्च—२३° ३०′ मिता। वसन्तसम्पात शारदसम्पातयो सूर्यो नाडीवृत्ते दृश्यते। कर्कसंक्रान्तौ सूर्य सुदूरोत्तरे, तस्य क्रान्त्यक्षाश्च + २३° ३०′ मिता। अत एव सूर्यस्य दृङ्मण्डल मसमम्। २५ पृ० प्रथमचित्रे सूर्यस्य विभिन्नदृङ्मण्डलानि प्रदर्शितानि।

यतो विविधर्तौ सूर्यस्य क्रान्त्यंशा विभिन्ना, अर्थात् भूमण्डले सूर्यकिरणाना विविधकोणेभ्य पातो दृश्यते, अतो विविधर्तौ सूर्यकिरणोपलब्धतापो विविध, सूर्यकिरणोपलब्धतापस्य सूर्यकिरणजनितकोणापेक्षित्वात्। यदि सूर्यकिरणा ऋजव, तर्हि सूर्यकिरणलब्धतापोऽधिक। यदि सूर्यकिरणा कुटिलास्तर्हि सूर्यकिरणलब्धतापो न्यून। इद २५ पृ० द्वितीयचित्रात् स्पष्ट भविष्यति—

कुटिल, ख—स्थाने वितता । ख—स्थानस्य क्षेत्रमन्त क—स्थानस्य क्षेत्रफलात् महत्तरम्। यत्त किरणाना तापयोग सम, अर्थात् क—स्थाने या तापप्राप्ति सा एव ख—स्थाने तापप्राप्ति, अत एव क—स्थानस्य भागविशेषस्य तापप्राप्ति ख—स्थानस्य तत्तुल्यभागविशेषस्य तापप्राप्तेरधिका। अर्थात् क—स्थाने ख—स्थानापेक्षया औष्ण्यमधिकतरम् ]

ग्रीष्मे सूर्यकिरणा ऋजव, शिशिरे च सूर्यकिरणा कुटिला भवन्ति, अत एव ग्रीष्मे औष्ण्य शिशिरे च शैत्य वर्तते। इदञ्च प्रथम कारणम्।

पुनश्च शिशिरे सूर्यकिरणास्तिर्यक्त्वात् वायुमण्डलस्य अधिकभागानुल्लङ्घयन्ति, वायुमण्डलोल्लङ्घने किरणाना तापो हीयते। इय हानिरुल्लङ्घनदैर्घ्याधीना। उल्लङ्घनदैर्घ्यञ्च शिशिरे अधिकम्। अत एव वायुमण्डलप्रतिरोधविनाशात् शिशिरे सूर्यकिरणा न्यूनमात्रया ताप ददति। इदञ्च द्वितीय कारणम्।

अस्त्येकमपरं कारणम्। शिशिरे दिनमानमल्पम्, ग्रीष्मे दिनमानमधिकम्। अर्थात् क्षेत्रविशेष सूर्यात् शिशिरेऽल्पकालपर्यन्त ताप लभते, ग्रीष्मर्तौ चाधिककालपर्यन्तम्। अत एव तत्र शिशिरे तापस्य न्यूनता, ग्रीष्मे च बहुलता दृश्यते।

एव किरणाना कुटिलपतनेभ्य (१) अधिकक्षेत्रे तापप्रसरणम्, (२) वायुमण्डलस्य अधिकोल्लङ्घनम्, (३) दिनमानस्य अल्पतरत्वञ्च शिशिरे शैत्यहेतव ।

## २.४३ कथ ऋतुविपर्ययो दृश्यते ?

यदि सूर्यकिरणोपलब्धताप एव औष्ण्यस्य मूले वर्तेत तर्हि सर्वाधिकौष्ण्ययुक्त दिन जूनमासस्य २२—तमदिनाङ्के भवेत्, सर्वाधिकशैत्ययुक्त दिनञ्च दिसम्बरमासस्य २२—तमदिनाङ्के भवेत्। परन्तु नैव दृश्यते। किमत्र कारणम् ? पृथिवीं परितो वायुमण्डल वर्तते। वायुमण्डलमिद तत्पृथिव्यास्ताप बहिरागमनात् प्रतिरुणद्धि। नूनं २२—तमे जूनमासस्य दिनाङ्के पृथिवी सर्वाधिक ताप गृह्णाति, परन्तु तदा तस्या कोषे तावन्मात्रस्तापसञ्चयो न विद्यते यावन्मात्रः प्राय पक्षान्तरे। अनेनैव हेतुना महाशैत्यमनुभूयते जनवरीमासमध्ये।

सिद्धान्तोऽयं दैनिकशैत्यौष्ण्याना सम्बन्धेऽपि सत्यम्। सर्वाधिकोष्णकालोऽपराह्णे भवति न तु मध्याह्ने, एवमेव सर्वाधिकशीतलकालो रात्र्याश्चतुर्थप्रहरे भवति, न तु द्वितीयप्रहरान्ते।

## २.४ वायुमण्डलम्

अदृश्यरूपेण परमलघुभारेण वायुना सर्वे प्राणिन प्राणन्त इति सनातनोऽनुभव। वायुश्च वस्तुतो वाष्पाणा मिश्रणमस्ति, पृथिवीमभितो द्विशतक्रोशार्धपर्यन्त मण्डलाकारवायुमण्डले च लभ्यते। वायुमण्डले निम्नलिखितवाष्पाणामुपस्थितिर्दृश्यते—

| | |
|---|---|
| नाइट्रोजनम् | ७७ १६ % |
| आर्गोजनम् | २० ६ % |

| | |
|---|---|
| जलीयबाष्पाणि | १·४ % |
| आरगन-हिलियम-नियन-क्रेप्टन-जेननादयः | ०·८ % |
| कार्बनडाइआक्साइडम् | ०·०४ % |
| | १००·०० % |

## २.४१ वायुमण्डलस्य त्रयः स्तराः

वायुमण्डलं पृथिव्या उपरि ५०० क्रोशार्धपर्यन्तं विततमस्ति। अस्मिन् त्रयः स्तरा दृश्यन्ते—(१) दशक्रोशार्धपर्यन्तम् उष्णमण्डलम्, (२) दशक्रोशार्धात् पञ्चाशत्क्रोशार्धपर्यन्तं स्थिरमण्डलम्, (३) पञ्चाशत्क्रोशार्धात् पञ्चशतक्रोशार्धपर्यन्तञ्च 'आयन'मण्डलम्।

उष्णमण्डले विभिन्नोच्छ्रयेषु विभिन्नास्तापक्रमाः। पृथिवीपृष्ठस्य समीपे उच्चतमः, दशार्धक्रोशोच्छ्रये निम्नतमः केवलं—५५·६ सेन्टीग्रेडमितः। अत्रैव मेघा अवलोक्यन्ते, अत्रैव च वायुप्रवाहाः स्वोर्ध्वाधोगतिभिः संक्षोभान् उत्पाद्य दूरदर्शकपतितबिम्बे किञ्चिद् धूमिलत्वं जनयन्ति।

स्थिरमण्डले मेघा न सन्ति। अत्र च जलीयबाष्पाण्यपि विरलतया विद्यन्ते। मेघहीनेऽस्मिन् स्तरे केवलमृजुक्षैतिजवायुप्रवाहाः प्रवहन्ति। अत्र बाष्पाणि प्रायो मुक्तावस्थायामेव लभ्यन्ते।

आयनमण्डले केवलं नाइट्रोजनम् आक्सीजनञ्च लभ्येते। अस्मात् स्थानाद् रेडियो तरङ्गाः पृथिवीं प्रति परावर्तन्ति। आयनमण्डलस्य विवरणं § ५.३१५ तमेऽपि दास्यते।

## २.४२ प्रकाशकिरणानां वर्तनक्रिया

सर्वे खगोलीयपिण्डप्रक्षिप्तप्रकाशकिरणा वायुमण्डलं भित्त्वा पृथिवीपृष्ठस्थदूरदर्शकयन्त्रे पतन्ति। अत एव ज्योतिर्विद्भ्यो वायुमण्डलस्य प्रकाशकिरणानां विकारस्य चाध्ययनं परममहत्त्वपूर्णमस्ति।

प्रकाशकिरणा विभिन्नघनत्ववतां वस्तूनां माध्यमेन निस्सृत्य काञ्चिद् वक्रतां भुग्नतां नतिं वा भजन्ते। इयं वक्रता, भुग्नता, नतिर्वा किरणवक्रीभवनं किरणवर्तनं वर्तनं वा कथ्यते।

अस्य वर्तनस्य नैकानि परिचितोदाहरणानि सन्ति।

(१) जलपात्रे अर्धनिमग्नस्य एकस्य सरलकाष्ठदण्डस्य जलमग्नभागो जलाद् बहिर्वर्तिभागश्च एकस्यां रेखायां न दृश्येते। जलान्ते दण्डः किञ्चिद् भुग्नो दृश्यते।

(२) एकस्मिन् जलविहीनपात्रे अधस्तले एकां रूप्यकमुद्रां स्थापयेत्, पात्रस्य पार्श्वे एवं तिष्ठेद् यद् मुद्रा न दृश्यते। यदि कोऽप्यन्यो जनस्तस्मिन् पात्रे जलं पातयति, मुद्रा शनैः शनैर्दर्शनीया भवति (चित्रं २ द्रष्टव्यम्)।

अत्र उभयोरुदाहरणयोर्जलस्य वर्तनशक्तिः प्रयुक्तासीत्। जले वर्तनशक्तिर्विद्यते, तया शक्त्या जलनिमग्नप्रकाशकिरणाः किञ्चिद् भुग्नता भजन्ते।

वर्तनस्य उदाहरणे

विवरणपूर्णविशेषाध्ययनाय भौतिकशास्त्रग्रन्था अवलोकनीयाः। अत्र दिग्दर्शनार्थमेव वर्तननियमाः संक्षेपेण दीयन्ते—

(१) प्रकाशकिरणा यदा जलम् अन्यपारदर्शकवस्तु वा भित्त्वा प्रविशन्ति तदा तेषां मार्गे किञ्चिद् भिन्नता आयाति, अर्थाद् आपतितकिरणानां दिशा वर्तितकिरणानां दिशया किञ्चिद् भिन्ना दृश्यते। भिन्नतेयं वस्तुतत्त्वेषु निर्भरा। निष्पत्तिः $\frac{\text{आपतितकोणज्या}}{\text{वर्तितकोणज्या}}$ वस्तुनो वर्तनाङ्कः कथ्यते। जलस्य वर्तनाङ्कः १·३३ मितोऽस्ति।



वर्तनम्

( २ ) यदि किरणा विरलमाध्यमात् सघनमाध्यमं प्रविशन्ति, तर्हि तेऽभिलम्बानुकूल



विरलमाध्यमात् सघनमाध्यमे प्रवेश.



सघनमाध्यमाद् विरलमाध्यमे प्रवेश

दिशायां भुग्नता भजन्ते । यदि च सघनमाध्यमाद् विरलमाध्यमं प्रविशन्ति, तर्हि तेऽभिलम्ब प्रतिकूलदिशायां भुग्नता भजन्ते ।

## २४३ वेधेषु वर्तनजनितसंस्कारा.

उपरि वर्णितं यत् किरणा विरलमाध्यमात् सघनमाध्यमं प्रविश्य अभिलम्बानुकूलदिशायां नतिं प्राप्नुवन्ति । वायुमण्डले उपरिभागे विरलवायवः सन्ति, निम्नभागे च सघनवायवः सन्ति,




वेधे वर्तनजनितसंस्कारा. क्रियन्ते ।

अत एव किरणा निरन्तरमभिलम्बानुकूलदिशायां नमन्ति । एवं वस्तुत क-स्थाने स्थितं नक्षत्रं ख-स्थाने दृश्यते, यथा उपर्याचे क-स्थितमुडु ख-स्थाने प्रदृश्यते । अत एव किरणवर्तनाद्

इष्टनक्षत्रस्य प्रतीयमाननतांशा वास्तविकनतांशेभ्योऽल्पाः, उन्नतांशेन प्रतीयमानोन्नतांशा वास्तविकोन्नतांशेभ्योऽधिका भवन्ति। वर्तनजनितमिदमंशान्तरं विभिन्नेषु उन्नतांशेषु नतांशेषु वा विभिन्नम्। खस्वस्तिकस्थनक्षत्रे किमप्यन्तरं न जायते; क्षितिजस्थनक्षत्रे च सर्वाधिकमन्तरं जायते। निम्नलिखितसारिण्यां विभिन्नोन्नतांशेषु वर्तनजनितमंशान्तरं दीयते। वेधोपलब्धनतांशेष्विदं संकलय्य, वेधोपलब्धोन्नतांशेभ्यश्चेदं विकलय्य यथार्थनतांशाः प्राप्यन्ते। अर्थात्

यथार्थनतांशाः = वेधोपलब्धनतांशाः + वर्तनान्तरम्

यथार्थोन्नतांशाः = वेधोपलब्धोन्नतांशाः — वर्तनान्तरम्।

२.४३ सारिणी

| प्र. उ. | वर्तनान्तरं | प्र. उ. | वर्तनान्तर | प्र.उ. | वर्तनान्तर | प्र.उ. | वर्तनान्तर | प्र.उ. | वर्तनान्तरं | प्र.उ. | वर्तनान्तर | प्र.उ. | वर्तनान्तरं |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ०°०' | ३३'०" | ५°० | ९'५४' | १०° | ५'१५" | २०° | २'३५ | ३०° | १'३८" | ४०° | १'०८" | ५०° | ०४८' |
| ०°३०' | २८'२३" | ५°३०' | ९'०८' | ११° | ४'४७" | २१° | २'२७" | ३१° | १'३५" | ४१° | १'०५" | ५५° | ०४०" |
| १°०' | २४'२९" | ६°०० | ८'२८ | १२ | ४'२३ | २२° | २'२०" | ३२° | १'३१" | ४२° | १ ०३" | ६०° | ०३३" |
| १°३०' | २१'१५" | ६°३०' | ७'५१" | १३° | ४'०३" | २३° | २'१४" | ३३° | १'२८" | ४३° | १'०१" | ६५° | ०२६" |
| २°००' | १८'३५" | ७°०० | ७'२०" | १४° | ३'४५' | २४° | २'०८" | ३४° | १'२४" | ४४° | ० ५९" | ७०° | ०२१" |
| २°३० | १६'२४" | ७°३०' | ६'५३" | १५° | ३'३०" | २५° | २'०२" | ३५° | १ २१" | ४५° | ० ५७" | ७५° | ०१५" |
| ३°०० | १४'३६" | ८°०० | ६'२९" | १६ | ३'१७" | २६ | १'५६" | ३६° | १'१८" | ४६° | ० ५५" | ८०° | ०१०" |
| ३°३०' | १३'०६' | ८°३० | ६'०८" | १७ | ३'०४" | २७° | १'५१" | ३७° | १'१६" | ४७° | ० ५३" | ८५° | ० ५" |
| ४°०० | ११'५१" | ९°०० | ५'४८" | १८° | २'५४" | २८° | १'४७" | ३८° | १ १३" | ४८° | ० ५१" | ८९° | ० १" |
| ४°३० | १०'४८" | ९°३०' | ५'३२" | १९° | २'४४" | २९° | १'४२" | ३९° | १ १०" | ४९° | ० ४९" | ९०° | ० ०" |

प्र. उ. = प्रतीयमानोन्नतांशाः तापमानं ५०° वायुपीडनम् २९"६

[ चैम्बर्स मैथेमेटिकल टेबेल्स ]

२.४४ वायुमण्डले किरणवर्तनस्य प्रभावाः

(१) आकाशो नीलवर्णो दृश्यते—वायुमण्डले असंख्यरजःकणाः सन्ति। प्रकाशकिरणतरङ्गास्तैः समाहता विकीर्णा भवन्ति। विकरणे च ह्रस्वतरङ्गाः बाहुल्यतया, दीर्घतरङ्गाश्च कृच्छ्रेण प्रकाशकिरणेभ्यः पृथग् भवन्ति। श्यामवर्णस्य (नीलवर्णस्य) किरणतरङ्गा अतिह्रस्वकाः, इतीति न विकीर्णाः सन्त आकाशं नीलवर्णेन रञ्जयन्ति।

(२) सान्ध्यप्रकाशो रक्तवर्णो दृश्यते—सूर्यस्य क्षितिजस्थस्य प्रकाशकिरणा वायुमण्डलस्य अधिकभागानुल्लङ्घ्यास्माकं समीपमागच्छन्ति। सुदीर्घमार्गोल्लङ्घनाद् ह्रस्वतरङ्गा नीलवर्णकिरणा विकीर्णा भूत्वा नश्यन्ति, रक्तवर्णस्य तरङ्गा अतिदैर्घ्यादस्माकं समीपमागमने समर्था भवन्ति, अत एव सूर्यचन्द्रौ वा रक्तवर्णौ दृश्येते, सान्ध्यप्रकाशोऽपि रक्तवर्णो भवति।

(३) रात्रावप्युष्णता वर्तते—दिवा दिवाकरः पृथिवीं तपति, परन्तु दिवाप्राप्ततापो रात्रावपि वर्तते। अत्र वायुमण्डलस्यैव वयं कृतज्ञा यतो वायुमण्डलं कम्बलमिवाचरति पृथिवीलब्धतापनिरोधने। वायुमण्डलरजःकणास्तापस्य बहिरनन्ताकाशे विलयनं रुन्धन्ति।

(४) सान्ध्यप्रकाशो भवति—वायुमण्डलोपस्थितेः प्रभातकाले सायंकाले वा सान्ध्यप्रकाशो वर्तते। सूर्यो यथार्थसूर्यास्तानन्तरं किमपि कालं क्षितिजलग्नो दृश्यते, (अत्रावधारणीयं ज्योत्स्नास्थापितमुद्रादर्शनम्—§ २५२ तमे दत्तं चित्रम्) पुनश्च सूर्ये वस्तुतोऽस्तंगतेऽपि सूर्यकिरणा वायुमण्डले पतन्ति, यतो वायुमण्डलं पृथिव्यपेक्षया उच्चवर्ति (सायंकाले उच्चस्थाने निम्नस्थानापेक्षया विलम्बेन सूर्यकिरणा दृश्यन्ते)[1]। एवं दिवारात्रिसङ्गमकाले सान्ध्यप्रकाशो भवति।



(५) सूर्यश्चन्द्रो वा उदयास्तकालयोर्दीर्घवृत्ताकारो दृश्यते—अत्रापि किरणवर्तनं हेतुः। चित्रे सूर्यबिम्बस्य निम्नतमो भागः क्षितिजलग्नः, सूर्यबिम्बस्य उच्चतमभागस्य यथार्थोन्नतांशा ३२-कलामिता, सूर्यबिम्बव्यासस्य ३२ कलापरत्वात्। परन्तु प्रतीयमानोन्नतांशा यथार्थोन्नतांशेभ्यो भिन्नाः। निम्नतमभागस्य उन्नतांशा (यथार्थोन्नतांशा + वर्तनान्तरम्) = ०°+३३ = ३३ कलामिता, उच्चतमभागस्य प्रतीयमानोन्नतांशा (यथार्थोन्नतांशा + वर्तनान्तरम्) = ३२′+२८′ = ६०′ कलामिता। एवं प्रतीयमानसूर्यबिम्बस्य व्यासस्य



---

1 "विहाय अरविन्दखण्डमुल्लम्भूय कमलिनीवनानि मधुकर इव दिवसावसाने लोहितो तरुशिखरेषु पर्वताग्रेषु च रविकिरणाः स्थितिमबध्नन्"—कादम्बरी।

ऊर्ध्वाधरमानं ६०′ − ३३ = २७′ परन्तु क्षैतिजमानं पूर्ववत् ३२′ मितम् । अत एव सूर्यबिम्बं दीर्घवृत्ताकारं दृश्यते, दीर्घवृत्तस्य महाक्षस्य मानं $\frac{३२'}{२}$ = १६′, अल्पाक्षस्य मानं $\frac{२७'}{२}$ = १३′.५ कलादिकम् । चन्द्रोऽप्येवमुदयास्तकालयोर्दीर्घवृत्ताकारो भवति ।

( ६ ) दूरदर्शके नक्षत्राणां बिम्बे कम्प्रभावत्वं दृश्यते

वायुमण्डले वायुविक्षोभा दृश्यन्ते । वायुविक्षोभेषु विभिन्नस्तरेषु विभिन्नतापक्रमा विद्यन्ते । विभिन्नेषु तापक्रमेषु विभिन्ना वर्तनाङ्का भवन्ति । नक्षत्राणां प्रकाशकिरणा विभिन्नैर्वर्तनाङ्कैर्विचलिता भवन्ति, किरणानां प्रभा कम्पमाना दृश्यते दूरदर्शकयन्त्रे । काले काले नक्षत्राणां स्थानच्युतिः नैकवर्णत्वञ्च लभ्येते ।

( ७ ) ध्वनिसृष्टिर्भवति

अस्य वायुमण्डलस्योपस्थितेरेव वयं परस्परं समालपितुं समर्थाः । ( वायुमण्डलविहीनचन्द्रे सदैव पूर्णा निःशब्दता वर्तते )। वायुर्ध्वनिःसृतशब्दतरङ्गान् अपरजनस्य कर्णौ प्रापयति । वाय्वभावे ध्वनिसृष्टिरसम्भवा भवेत् ।

२.६ अयनगतिः

सूर्यो यदा मेषराशेः प्रथमं बिन्दुं स्पृशति तदा वर्षारम्भो भवति । मेषराशेः प्रथमबिन्दुर्मेषसम्पातनाम्ना प्रसिद्धः, यतोऽत्र नाडीचक्रस्य क्रान्तिवृत्तस्य च सम्पातो विद्यते । अयं वसन्तसम्पातनाम्नापि प्रसिद्धः, वसन्तस्य प्रारम्भे स्थितत्वात् । अस्य मेषसम्पातस्य विचित्रा गतिर्दृश्यते । यद्यस्मिन् वर्षे मेषसम्पातो मेषराशिस्थस्य कस्यचिन्नक्षत्रस्य समीपं दृश्यते, तर्हि आगामिवर्षारम्भे मेषसम्पातः पूर्वनक्षत्रात् कञ्चित् पश्चिमदिशायां दृश्यते, अर्थात् मेषसम्पातः प्रतिवर्षं किञ्चित् पश्चिमदिशां प्रति विचलति । विचलनमिदं प्राचीनैर्ज्योतिर्विद्भिरपि विदितम् । अस्य विचलनस्य हेतुः पृथिव्या अयनगतिरेव ।



२.६१ पृथिव्या अयनगतिः

एकस्य घूर्णमानस्य भ्रमरकस्य ( क्रीडनकविशेषस्य ) तिस्रो गतयो दृश्यन्ते—( १ ) तद् अक्षभ्रमणं करोति, ( २ ) तस्य अक्षस्य भूस्थिता कोटिः ( कीलस्य भूलग्नो बिन्दुः ) काले काले भुवि ईषद्वृत्ताकारे मार्गे भ्रमति, ( ३ ) भ्रमरकाक्षस्य भूस्थिता कोटिस्तु भुवि वर्तते एकस्मिन्नेव बिन्दौ, परन्तु अक्षस्य ऊर्ध्वस्था कोटिरेकस्मिन् वृत्ते परिभ्रमति । पृथिव्या अपि

भ्रमरकस्येव तिस्रो गतयो वर्तन्ते—(१) प्रथमा गतिः पृथिव्या अक्षभ्रमणम्, (२) द्वितीया गतिर्भुवः सूर्यं परितो भ्रमणम्, (३) तृतीया च गतिरयनगतिरुच्यते। इयमेवात्र विचार्यते।



पृथिवी भ्रमरकवद् अक्षे भ्रमति।

अस्यां गत्यां पृथिव्या अक्षस्तु सदैव ऊर्ध्वाधररेखातः २३½° मितां प्रवणतां भजते, परन्तु ऊर्ध्वस्था पार्थिवाक्षकोटिः (सुमेरुः) वृत्ताकारे भ्रमति। तदनुसारं भूमध्य सुमेरु लग्नरेखा खगोलं यत्र स्पृशति स काल्पनिकबिन्दुरपि परिभ्रमति। (अस्य काल्पनिकबिन्दोः समीपतमं नक्षत्रं



उत्तरध्रुवस्थानस्य अयनचलने चलनम्।

तत्कालीनो ध्रुवः प्रोच्यते )। ध्रुवस्य परिक्रमणकालः २५,८०० वर्षमितोऽस्ति। यतो ध्रुवपरिभ्रमणाद् मेषसम्पातोऽपि भ्रमति, अतो मेषसंपातस्य नाडीवृत्ते पूर्णपरिक्रमणं २५,८०० वर्षैः भवति। अर्थादेकस्मिन् वर्षे $\frac{\text{३६०} \times \text{६०} \times \text{६०}}{\text{२५८००}} = \text{५०}''$ २५६४ विकलामितं चलनं लभ्यते।

उपर्युक्तं यद् भूमध्य सुमेरु लम्बरेखा रागोलं यत्र स्पृशति तस्य काल्पनिकबिन्दोः समीपतमं नक्षत्रं तत्कालीनं ध्रुवस्थानं कथ्यते। ध्रुवस्थानं २५,८०० वर्षैकं परिक्रमणं करोति। अधुना ध्रुवस्थानं α—लघुऋक्ष नक्षत्रस्य ( उत्तरध्रुवस्य ) समीपे वर्तते, α—लघुऋक्ष-नक्षत्रमस्माकं ध्रुवः कथ्यते। ईसापूर्वम् ३००० अब्दे ध्रुवः α—कालिय-नक्षत्रस्य समीपमासीत्। खिस्ताब्दे ७,५०० तमे α वृषपर्वं नक्षत्रम्, खिस्ताब्दे १४,००० तमे अभिजिद् ( α—वीणा ) नक्षत्रं ध्रुवो भविष्यति।

## २.६२ अयनगतेः कारणम्

अयनगतेः कारणव्याख्या सरलविषयो नास्ति, तथापि संक्षेपेण किञ्चिद् व्याख्यायते। भ्रमरकस्य तृतीयाया गत्याः हेतुर्गुरुत्वाकर्षणशक्तिरेव। गुरुत्वाकर्षणशक्तिर्निरन्तरं भ्रमरकमध्यभागं पृथिवीकेन्द्रं प्रति आकर्षति, घूर्णनञ्च भ्रमरकस्य भूमिपतनं निवारयति। परन्तु सद्यः अस्मिन् समतुलितगतिस्तदैव भवति यदा भ्रमरकस्य अक्षः ऊर्ध्वाधरस्थितिं विहाय काञ्चित् प्रवणतां भजते। अत एव अक्षस्य ऊर्ध्वस्था कोटिः परिभ्रमणं करोति।

पृथिवीगतिविषये गुरुत्वाकर्षणशक्तिस्तु न विद्यते। केवलं चन्द्रसूर्यग्रहाणामाकर्षणशक्तिः प्रयुज्यते। अक्षभ्रमणात् पृथिव्या विषुवप्रदेशाः स्फीताः ( बहिर्निर्गताः ) भवन्ति। चित्रे यावद् उपान्तरालिकाः पृथिवी प्रदर्श्यते। सूर्यः पृथिवीमाकर्षति, परन्तु अ १ स्थाने सूर्याकर्षणं अ २




अयनचलनस्य कारणं सूर्याकर्षणम्।

स्थानापेक्षया अधिकम्, अत एव विषुवरेखायाः क्रान्तिवृत्तकेन्द्रीभूतत्वे प्रवृत्तिर्दृश्यते। यदि पृथिव्या

अयनभ्रमणं नाभविष्यत्, विषुवरेखा क्रान्तिवृत्तसमवर्तिनी अभविष्यत्। परन्तु एवं न। अत एव भ्रमरकाक्षस्येव पृथिव्या अक्षस्य ऊर्ध्वस्था कोटिर्वृत्ते परिभ्रमति।

चन्द्रोऽपि पृथिव्या विषुवरेखां निजकक्षातलं प्रति आकर्षति। सूर्यचन्द्रजनिताकर्षणं सूर्यचन्द्रविषयकायनं कथ्यते। एवमेव ग्रहविषयकायनमपि वर्तते। सर्वेषामयनानां समूहेन जनिता गतिः पृथिव्या अयनगतिः कथ्यते।

## २.६२ अयनगतेः परिणामाः

मूलमेषसम्पातप्रातिवर्षिकमेषसम्पातयोरन्तरं वर्तते। सर्वप्रथमं मेषसम्पातोऽश्विनी नक्षत्रेऽदृश्यत, परन्तु गणनारम्भाद् द्वितीये वर्षेऽयमश्विनीनक्षत्रात् ५०″.२५६४ मितपश्चिममतिष्ठत्, तृतीयवर्षे १′४०″.५१२८ मितं पश्चिमम्, एवमधुना मेषसम्पातस्य अश्विनीनक्षत्रादन्तरं २३°६ मितमस्ति। इदमन्तरं भारतीयज्यौतिषशास्त्रे 'अयनांश' कथ्यते।

भारतीयज्योतिर्गणिते ग्रहाणां सूर्यचन्द्रयोश्च गणना मूलमेषसम्पातात् क्रियते। अर्थाद् एतस्याः गणनाया ग्रहाणां भोगादीनां निरयनांशा दीयन्ते। पाश्चात्यज्योतिर्गणिते तेषां गणना दृश्यमानमेषसम्पातात् क्रियते। अत एव तेषां गणनया ग्रहाणां भोगादीनां सायनांशा दीयन्ते। अत्र पाश्चात्यगणनागतभोगादिभ्योऽयनांशान् व्यवकल्य भारतीयगणनानुसारं भोगादयो लभ्यन्ते।

अयनगतेर्निम्नलिखितपरिवर्तनानि भवन्ति—

( १ ) राशिनाम नक्षत्रमण्डलनाम्नोर्भेदो दृश्यते। पुरा गणनारम्भे मेषराशि मेषनक्षत्रमण्डलयोः किमप्यन्तरं नासीत्, एवमेव वृषराशि वृषनक्षत्रमण्डलयोः, मिथुनराशि मिथुननक्षत्रमण्डलयोः। अधुना अन्तरं वर्तते। अद्यतनीयमेषराशिर्मेषनक्षत्रपुञ्जे न दृश्यते, स मीननक्षत्रमण्डलसमीपे दृश्यते।

( २ ) ऋतवः शनैः शनैः परिवर्तन्ते। ऋतुविषयकवर्षस्यारम्भो दृश्यमानमेषसम्पाताद् भवति। अस्य मानञ्च नाक्षत्रवर्षकालादल्पम्, (यतो मेषसम्पातः स्वयं वक्रगत्या सूर्यं प्रति ५०″.२५६४ मितान्तरमागच्छति)। इदमन्तरं २०′ २४″ मितकालविभितम्। ७२ वर्षेषु दिनैकमितमन्तरं भवति, ७२० वर्षेषु १० दिनानामन्तरं भवति। अनेनैव कारणेन वसन्तोत्सवादयः शीतकालेऽधुना दृश्यन्ते।

( ३ ) शनैः शनैर्नूतननक्षत्रमण्डलानि दृष्टिगोचरतां यान्ति। अयनगतेर्नक्षत्राणां क्रान्त्यंशा अपि परिवर्तन्ते। अत एव नूतननक्षत्रमण्डलानि दृष्टिपथमवतरन्ति। अधुना ३० मिताक्षांशवर्तिदेशेषु ध्रुवस्योन्नतांशा ३० मिता सन्ति, तत्र ─६०° मितक्रान्त्यंशवर्तिनक्षत्राणि दृश्यन्ते, परन्तु १२,००० वर्षानन्तरं यदा उत्तरध्रुवोऽभिजित् समीपे वर्तिष्यते, तस्मादेव स्थानादाधुनिकदक्षिणध्रुवोऽपि दृश्यते।

(४) प्रतिवर्षं मेषसम्पातः ५०″.२५६४ मितं पश्चिमं गच्छति। तदनुसारं मेषसम्पात विषुवांशेषु ४६.१० विकलामितं प्रतिवर्षमन्तरं दृश्यते, क्रान्त्यंशेषु च २०.०४ विकलामितमन्तरं



दृश्यते। यतो नक्षत्राणां मेषसम्पातमूलकनियामका दीयन्ते, अत एव नक्षत्राणां नियामकसूची विशेषकालार्थेन निर्मीयते। कालान्तरे तेषां नियामकानां प्रातिवर्षिकपरिवर्तनानि संस्कृत्य भवति।

## २.१४ अक्षविचलनम्

पूर्वानुच्छेदेषु व्याख्यातं यदयनगत्या खगोले उत्तरध्रुवस्थानं किञ्चित्परिवर्तनं लभते। उत्तरध्रुवस्थानं कदम्बस्थानात् २३½° मितज्यया लिख्यते वृत्ते २५,८०० वर्षैः परिभ्रमणमेवं करोति। परन्तु 'ब्रेडले'महोदयेन दृष्टं यद् नक्षत्राणां यथार्थक्रान्त्यप्राप्तये केवलमयनसंस्कार-



अक्षविचलनम्

मार्गच्युतिसंस्कार वर्तनसंस्कारा न समर्थाः। तेन सततनिरीक्षणैर्दृष्टं यद् ध्रुवस्थानमयनवृत्ते (कदम्बस्थानं केन्द्रं कृत्वा २३½° मितज्यया लिखिते वृत्ते) तरङ्गवद् गच्छति, अर्थात् तेन

स्थितो मार्गो दन्तुरितवृत्ताद् दृश्यते ( द्रष्टव्य ३६ पृष्ठचित्रम् ) । प्रत्येकस्या तरङ्गस्यावृत्तिकालो १९ वर्षमितः । उत्तरध्रुवस्थानस्य अयनवृत्ताद् विचलनमिदमक्षविचलनं कथ्यते ।

## २.६५ मार्गच्युतिः ( Aberration )

वर्षाकाले सामान्योऽनुभवः सर्वेषां यद् यथा यथा वृष्टौ मार्गे गच्छन् छत्री जनः स्वगतिं वर्धयते तथा तथा वृष्टिबिन्दव ऊर्ध्वाधरतो नापत्य किञ्चित् सम्मुखाद् आगच्छन्तो दृश्यन्ते, तथा तथा च स छत्रं तिर्यक् करोति । ( द्रष्टव्य चित्रम् ) । यदि स छत्री जनोऽत्यधिकवेगेन धावति तर्हि वृष्टिबिन्दवः प्रायेण सम्मुखात् क्षैतिजा भूत्वा आगच्छन्तः प्रतीयन्ते । ऊर्ध्वाधरपतनशीलबिन्दूनामिव तिर्यगागमनप्रतीतिर्मार्गच्युतिसिद्धान्तेन व्याख्यायते ।



वर्षाकाले छत्रासनरक्षा मार्गच्युति

पृथिव्यपि प्रतिसेकिण्ड १८३ मीलवेगेन निजकक्षायां भ्रमति । अत एव नभसाणां प्रकाशरश्मयो वृष्टिबिन्दुवत् तिर्यग् दूरदर्शने यन्त्रे प्रविशन्ति । अत एव वेधोपलब्धनक्षत्रस्थानानि यथार्थस्थानेभ्यः किञ्चिद् भिन्नानि । मार्गच्युतिजनितमन्तरमिदं निरीक्षणेन २०.५ विकलामितं प्राप्तम् । इदं मार्गच्युतिजनितान्तरं सर्वप्रथमं १७२९ तमे खिस्ताब्दे 'ब्रैडले'महोदयेन दृष्टम् ।

मार्गच्युतिजनितान्तरेण सूर्याद् दूरत्वं निर्धार्यते ( द्रष्टव्यम् § ५·१५ ) । अनेन सिद्धान्तेन भूपरिभ्रमणमपि प्रमाणीक्रियते । यतो विचलनमिदमपेक्षते—( १ ) पृथ्व्याः वेगम्, ( २ ) प्रकाशगतिवेगम्, ( ३ ) नक्षत्रस्य स्थितिं च । यदि पृथिवी अचलाऽभविष्यत् तर्हि प्रकाशमार्गच्युतिरभविष्यत् । यदि पृथिवी समगत्या परिभ्रमणमकरिष्यत् तर्हि नक्षत्राणां मार्गच्युतिः सदैव समा, अत एवानिरीक्ष्याऽभविष्यत् । यदि पृथिवी असमगत्या परिभ्रमणं कुर्यात् तर्हि नक्षत्रप्रकाशस्य मार्गच्युतिर्निरीक्ष्या भवेत् । इदमेवास्ति, अत एव पृथिवी असमगत्या सूर्यं परितो भ्रमति ।

### २.७ पृथिव्या आयुः

पृथिव्या आयुषो यथार्थमानानिर्धारणेऽपि ज्योतिर्विदां विवादोऽस्त्येव । 'हैमहोल्ट्ज'-महोदयेन एतस्या आयुः पूर्वं २,५०,००,००० वर्षेभ्यो न्यूनमिति निर्णीतम्, परं भूगर्भशास्त्रि

1 ( वर्षाणि निश्चितम् । पृथिवी सूर्यतनयैव, अत एव तस्या आयुः २,२०,००,००० ) ।

मतेन पृथिव्या आयु २,५०,००,००० वर्षेभ्योऽप्यधिकमस्ति । भूगर्भशास्त्रिणामायुर्निर्णयो त्रयो विषय ।

( १ ) स्तरोच्छ्रयविधि

पृथिव्या शिलाना नानास्तरा सन्ति । भूगर्भशास्त्रिणो भूखनन विधाय स्तराणा गणन कृत्वा पृथिव्या आयुषो निर्णय कुर्वन्ति । एकस्मिन् वर्षे नदीनादाय एतावन्मात्रया कल्पनिर्मि कुर्वन्ति, एतावन्मात्रस्तरनिक्षेप कियत्सु वर्षेषु कृत इति त्रैराशिकेन विधिना गणना क्रियते ।

( २ ) समुद्रलावण्यमात्राविधि

समुद्रेऽधुना ३५ प्रतिशत लवण वर्तते । भूगर्भशास्त्रिणा प्रतिवर्षं कियत्या मात्र सरित्प्रवाहनिक्षिप्तलवण समुद्रमागच्छतीति गणयित्वा त्रैराशिकेन समुद्रस्य आयुर्गणयन्ति समुद्र पृथिव्या समकालोनोऽस्ति, अत एव पृथिव्या आयुरपि गणित भवति ।

( ३ ) रेडियो एक्टीविटी विधि

स्तरोच्छ्रयविधौ लावण्यमात्राविधौ च दोष एको महान् । न वर्तते किमपि प्रमा यत् पुरातनकालेऽप्यनेनैवानुपातेन ( अनयैव मात्रया वा ) स्तरवृद्धिर्लावण्यवृद्धिर्वा आसीत् पर विज्ञानविद्भि खिस्ताब्दे १९२७ तमे एको दोषहीनो विधि प्राप्त । यूरेनियमधातु शनै 'सीस'धातुर्भवति । इयम्र परिणति स्थिरवेगेन भवति । रेडियो एक्टीविटी सिद्धान्ते सर्वप्रथम परमाणूनामस्थिरत्व प्रतिपादितम् । परमाणव शनै शनैस्त्रिविधानदृश्यकिरणा निष्कीर्णयन्ति । एतेऽदृश्यकिरणा α किरणा, β किरणा, γ किरणा इति नाम प्रसिद्धा । अनेन सिद्धान्तेन 'यूरेनियम' धातु ( यस्य परमाणुभार २३८ ), थोरियमधातु ( यस्य परमाणुभार २३२ ) वा शनै शनैर्गुरुत्व विहाय सीसत्व ( सीसस्य परमाणुभा २०७ ) भजन्ति । अत्र परिवर्तनवेग प्रयोगशालाया सदैव सम एव दृश्यते । १% परिवर्त ७,६०,००,००० वर्षे भवति । भूगर्भशास्त्रिण शिलाया वर्तमान यूरेनियममिश्रित सीस रेडियो एक्टिविटीविषयकविश्लेषण विधाय शिलानामायुर्गणयन्ति । प्राचीनतमशिलाया आ १,८५,००,००,००० वर्षाण्यस्ति । अत एव पृथिव्या आयु १,८५,००,००,००० वर्षेभ्यो धिकम्, पर कदाचित् ३,००,००,००,००० वर्षेभ्यो न्यूनमस्ति ।[1]

२८ कालविभाग

सत्यारे सर्वकार्येषु यथार्थकालज्ञानापेक्षा वर्तते, विशेषतस्तु यन्त्रप्रधानाधुनिकसंसारे कालगणना कालनिश्चयो वा ज्योतिषशास्त्रस्य प्रथम प्रयोजनमासीत्, अस्ति च ( द्रष्टव्य § ) । कालनिर्णये देशविस्तारस्य अपेक्षा दृश्यते । साधारणघटिकाया द्वे सूचि

1. जेम्सजीन्स महोदयस्य मतेन पृथिव्या आयु २,००,००,००,००० वर्षमितमस्ति सर्वप्रथम प्राणिनामुत्पत्ति ३०,००,००,००० वर्षेभ्य पूर्वमभवत्, मानवोत्पत्ति केवलं ३,००,००० वर्षेभ्य पूर्वम् ।

देशविस्तारे परिभ्रमत्स्वात्वेन कालं सूचयतः। पुरा शङ्कुच्छाया समयं प्राकटयत्, परन्तु साऽपि देशविस्तारे पर्यभ्रमत्।

सामान्यघटिकायन्त्रे सूचिकाद्वयं वर्तते। लघुसूचिका होरां वर्णयति, महासूचिका च होरायाः षष्ट्यंशान् (मिनटास्थान्) प्रदर्शयति। वैज्ञानिकदृष्ट्या महती सूचिका व्यर्था, यतो लघुसूचिका एकला एव होरां सूचयितुमलम्। महती सूचिका केवलं होरांशान् सुस्पष्टतया व्यक्तानेव करोति। अत एव समयप्रदर्शनप्रक्रिया लघुसूचिकाया एव द्रष्टव्या। लघुसूचिकायाः १२ अङ्काङ्कितस्थानप्रोताया ऊर्ध्वाधररेखाया कोणीयमानमेव समयं प्रदर्शयति। अतो विश्लेषणेन ज्ञायते यत् समयमापने द्वयोर्वस्तुनो रपेक्षा—



घटिका

(१) एका स्थिरा रेखा वर्तते यस्याः कोणीयदूरत्वं मीयते। रेखेयं प्रमाणरेखा कथ्यते। सामान्यघटिकायामियं द्वादशाङ्काङ्कितस्थान सूचिकाकेन्द्र प्रोत रेखा प्रमाणरेखा।

(२) एकं गतिशीलं वस्तु वर्तते, यस्य प्रमाणरेखायाः कोणीयान्तरं मीयते। इदं कालमापकमुच्यते। घटिकायन्त्रे इदं लघ्वी सूचिका।

### खगोलस्य समयमापकत्वम्

ज्योतिर्विदां खगोल एव सर्वथा शुद्धं समयमापकयन्त्रम्। खगोलसमयमापकयन्त्रे मिता याम्योत्तररेखा प्रमाणरेखा, खगोलीयबिन्दुविशेषश्च समयमापकः। याम्योत्तररेखाया समयमापकस्य कोणीयमानमेव समयः। यथा—याम्योत्तरं यदा उत्तरदिशि समयमापकमुल्लङ्घयति तदा मध्याह्नकालः, यदा दक्षिणदिशि उल्लङ्घयति तदा निशीथकालः, अहश्च आनुक्रमिकोल्लङ्घनद्वयमध्यवर्तिकालोऽपि।

साधारणतया त्रीणि समयमापकानि उपयुज्यन्ते—

| समयमापकानि | काललनामानि | अहनि होराणां संख्या |
|---|---|---|
| (१) मेषसम्पातः | नाक्षत्रकालः | नाक्षत्रदिनम् = २३ ५६ ०४.०९०५४ (हो मि से) |
| (२) स्पष्टः सूर्यः | स्पष्टसौरकालः | प्रतिदिनं भिन्ना भिन्ना |
| (३) मध्यमः सूर्यः | मध्यमसौरकालः (लोकव्यवहारकालः) | दिनम् = २४–०–० (हो मि से) |

### २.८१ नाक्षत्रकालः

नाक्षत्रकालो मेषसम्पातस्य घण्टाकोणोऽस्ति, अर्थात् मेषसम्पातस्य याम्योत्तर

वृत्तोल्लङ्घनसूत्राद् मेषसम्पातजनितो होरात्मककोण । नाक्षत्रकालस्य प्रारम्भो मेषसम्पातस्य याम्योत्तरवृत्तोल्लङ्घनकालाद् गण्यते ।

कालोऽयमत्यन्तमुपयोगी ज्योतिर्विद्भ्यो यतोऽयं नक्षत्रसम्बन्धी कालः । नक्षत्राणामुदयकालो याम्योत्तरवृत्तोल्लङ्घनकालोऽस्तकालश्च नाक्षत्रकालमानेन एकस्मिन् प्रदेशे ( स्थानविशेषे ) सर्वदा सर्वथा एक एव । लोकव्यवहारकाले नेयमुपयोगिता यतो यदि किञ्चिद् नक्षत्रमद्य रात्रौ

हो मि से

दशहोरायामुदेति, श्व तत् ९ ५६ ४—समये उदेष्यति । एवमेव यदि किमपि नक्षत्र जनवरी मासस्य प्रथमदिनाङ्के ११ होरायां याम्योत्तरवृत्तमुल्लङ्घयति, तदेव फरवरीमासस्य प्रथमदिनाङ्के प्राय ८ होरायां याम्योत्तरवृत्तोल्लङ्घन करिष्यति ।

अत एव समस्तज्योतिषकार्येषु नाक्षत्रकालमानेन कालो निश्चीयते, वेधशालासु च नाक्षत्रकालसूचनघटिका अवश्य दृश्यते । पाश्चात्यपञ्चाङ्गेषु च प्रतिदिन लोकव्यावहारिकमध्याह्नस्य नाक्षत्रकालमानेन कालो दीयते ।

## २०८११ नाक्षत्रकालानयनम्

नाक्षत्रकालस्य आनयन सदा वेधेनैव भवति । कस्यचिन्नक्षत्रस्य याम्योत्तरवृत्तोल्लङ्घनकालिक-विषुवांश एव होरात्मकमानेन तस्य नक्षत्रस्य नाक्षत्रकाल उच्यते । यदि विषुवांशा

हो मि से　　　　　　　　हो मि से

होरात्मकमाने १० १० १५ २ मिता सन्ति तर्हि नक्षत्रस्य नाक्षत्रकाल १० १० १५ २ मितोऽस्ति । याम्योत्तरवृत्तस्य इष्टनक्षत्रेण उल्लङ्घनकालो वेधशालासु 'याम्योत्तरयन्त्रेण', फोटोग्राफिक जेनिथ ट्यूब यन्त्रेण वा निश्चीयते ( अनयोर्यन्त्रयोर्वर्णन § १३ तमे द्रष्टव्यम् ) । नाक्षत्रकालघटिकापि याम्योत्तरवृत्तोल्लङ्घनेन शुध्यति[1] । यथा उपर्युक्तनक्षत्रस्य याम्योत्तरोल्लङ्घन

हो मि से

काले यदि वेधशालास्थनक्षत्रघटिकायन्त्रे १० १० १६ ४ मित कालो दृश्यते तर्हि नाक्षत्रकालघटिका १ २ सैकिण्डमित द्रुततरेति निश्चीयते ।

सितम्बरमासस्य २१ तमे दिनाङ्के नाक्षत्रकालेन समो लोकव्यवहारकाल । पश्चाद् लोकव्यवहारकाल प्राय ४ मेकिण्ड प्रतिदिनमग्र चलति । मध्याह्नस्य नाक्षत्रकाल पाश्चात्यपञ्चाङ्गेषु लिखितो विद्यते ।

## २०८१२ नाक्षत्रदिनम्

नाक्षत्रदिनस्य समयमापको मेषसम्पात, नाक्षत्रदिनञ्च मेषसम्पातानुक्रमिकोल्लङ्घनद्वयमध्यवर्तिकालावधि । परन्तु इदमहो मध्यमसौराहात् किञ्चिदल्पमर्थाद् यत्र मेषसम्पातो याम्योत्तरवृत्त मध्यमसौरमध्याह्ने उल्लङ्घयति तर्हि श्व स याम्योत्तरवृत्त मध्यमसौरमध्याह्नात् किञ्चित् पूर्वमुल्लङ्घयिष्यति । इदञ्च वेधेन निर्णीयते । भिन्नतेय गुरु पर्ये परित परिभ्रमणात् । ४१ प्रकरणे चित्रे इद स्पष्टीकृतमस्माभि ।

1 स्थूलगणनार्थे रेडियोसकेतरेव घटिका शुध्यन्ति । रेडियोसंकेता मध्याह्ने ११ यावद् रेखाया रात्रौ ६॥ होरायाञ्च दीयन्ते ।

चित्रे अ—स्थानाय अत्र नाक्षत्रमध्याह्न-सौरमध्याह्नसम, अर्थात् सूर्यं प्रति रेखा, मेषसम्पात प्रति रेखा एकैव। इतो भुन-सूर्यं परितो भ्रमणशीलत्वात्, कोणीयगतेश्च प्रतिदिनमे



कांशमितत्वाद् अर्धैकमितकोणीयान्तरे भविष्यति, अर्थात् सूर्यं प्रति कल्पिता रेखा मेषसम्पात-प्रोतरेखाया अर्धैकमितकोणीयान्तरे भविष्यति (द्वे मेषसम्पातप्रोतरेखे समानान्तरे एव,

मेषसम्पातबिन्दोः सुदूरवर्तित्वाद् )। अत एव अस्मान् सौरमध्याह्नं नाक्षत्रमध्याह्नात् पश्चाद् लभ्यते। अर्थाद् नाक्षत्रमध्याह्नः सौरमध्याह्नात् पूर्वं भवति।

यतः पृथिवी अनेकांश स्वाक्षभ्रमणे प्राय $\frac{२४ \times ६०}{३६०} = ४$ मिनटकालेन गच्छति, अत एव नाक्षत्रदिनं सौरदिनात् ४ मिनटमितमल्पम्। नाक्षत्रमध्याह्नश्च सौरमध्याह्नात् ४ मिनट मितकालेन पूर्वं भवति।

एवम्—

होरा मि
नाक्षत्रदिनमानम् = २३ ५६ ०.४ ०९०५४ मध्यमसौरमानेन।
होरा मि
मध्यमसौरदिनमानम् = २४ ३ ५६.५५५३६ नाक्षत्रमानेन।

## २ ८२ स्पष्टसौरकाल

नाक्षत्रकालो वेधकार्येषु महत्त्वपूर्णः, परन्तु व्यवहारे स नोपयोगी; यतो नाक्षत्रकाल प्रत्यह दिनमानात् प्राय ४ सेकिण्डमितकालेन विलम्बते ( २३ दिनाङ्के मार्चस्य नाक्षत्रमध्याह्नो निशीथे दृश्यते )। अत एव व्यवहारे सौरकाल एव प्रचलित। अस्माकं सर्वाणि कर्माणि सूर्य प्रकाशे भवन्ति, सूर्य एव सविता, अत एव सौरकालस्य प्रचलनं स्वाभाविकमेव।

परन्तु वर्तते एका बाधा स्पष्टसौरगणनायाम्। स्पष्टसूर्यस्य गतिर्न समा। सा कदाचिद् मान्द्यं भजते, कदाचिच्च शैघ्र्यं भजते। अनेन गतिभेदेन ३० सेकिण्डमित दिनमानेऽन्तर लभ्यते। गतिभेदस्य कारणान्यधो दीयन्ते—

( १ ) 'केप्लर'महोदयस्य प्रथमसिद्धान्तेन भूकक्षा दीर्घवृत्ताकारा। द्वितीयसिद्धान्तेन भू ( भुज कर्णः ) समकाले समानं क्षेत्रमाक्रामति। अत एव नीचसमीपवर्तिभूर्दैनिके यावन्मात्रकं परिभ्रमणमार्गस्य भागं गच्छति, तावन्मात्रकं परिभ्रमणमार्गभागं तत्रैव निर्नैर्गच्छति। पर



कक्षायां भूपरिभ्रमणम्

स्वरूपः भुवो गतिर्नीचे शैघ्र्यं भजते, उच्चे च मान्द्यम्। पुनश्च यतः सूर्यो भूगतिहेतोरेव भ्रमणं कुर्वन् दृश्यते, अत एव सूर्यस्य गतिरसमा। अस्माद् हेतोर्जनितं दिनमानान्तरं प्रतिवर्षं द्विवारं ( २१ दिसम्बरे, १ जुलाई मासे च ) शून्यमितं भवति, मार्चमासे मिनटमाग सेद् शतमिनटमितम्।

( २ ) यदि सूर्यस्य दैनिकी गतिः समापि भवेत् तदापि स्पष्टसौरदिनमानमसमं स्यात्,

यतः सूर्यः क्रान्तिवृत्ते भ्रमति, क्रान्तिवृत्तञ्च नाडीवृत्ताद् भिन्नम्, तयोः कोणीयान्तरञ्च २३° ३०′ मितम् । अत एव नाडीवृत्ते क्रान्तिवृत्तस्य समभागानामपि छेदका असमा भवन्ति, अर्थात् सूर्यस्य समगतिचलितक्रान्तिवृत्तीयसमभागा अपि नाडीवृत्ते असमभागान् रचयिष्यन्ति । दिनमानञ्च नाडीवृत्ताद् गण्यते, अत एव समगत्या चलन्नपि स्पष्टसूर्योऽसमदिनमानं कल्पयिष्यति । पार्श्वचित्रेणेदं स्पष्टीभविष्यति । अस्माद् हेतोर्जनितं दिनमानान्तरं चतुर्वारं वर्षे शून्यं भवति (२२ दिनाङ्के मार्चस्य, २२ दिनाङ्के जूनस्य, २३ दिनाङ्के सितम्बरस्य, २२ दिनाङ्के दिसम्बरस्य )। अधिकाधिकमानञ्च दशमिनटमितम् ।



प्राणकलान्तरम्

( ३ ) उपर्युक्तयोर्हेत्वोः सम्मेलनेन कालसमीकरणमधिगम्यते । कालसमीकरणं प्रथमान्तर द्वितीयान्तर-योगेन भवति । ( विशेषेण द्रष्टव्यः § २.८३ )।

**२.८३ मध्यमसौरकालः**

कालोऽयं लोकव्यवहारकालः । अस्य कल्पनं स्पष्टसौरदिनमानस्य मिश्रणात् कृतम् । अथ एकः काल्पनिकः सूर्यः कल्प्यते, यो नाडीवृत्ते समगत्या भ्रमति, यस्य भगणकालश्च वास्तविकसूर्यभगणकालसमः । मध्यमसौरदिनं मध्यमसूर्यानुक्रमिकोत्तरद्वयमध्यगतिकालावधि । इदं २४–होरात्मकम् ।

**कालसमीकरणम्**



कालसमीकरणम्

मध्यमसौरकाल स्पष्टसौरकालयोरन्तरं कालसमीकरणं कथ्यते। कालसमीकरणम् ऋणं यदि मध्यमसौरकालः स्पष्टसौरकालादधिकः, धनं यदि मध्यमसौरकालः स्पष्टसौरकालान्न्यून। अर्थात्—

स्पष्टसौरकालः–मध्यमसौरकालः = कालसमीकरणस्य मानम्। यतो मध्यमसौरकालः सामान्यघटिकायन्त्रेण मीयते, स्पष्टसौरकालः शङ्कुना ज्ञायते। अतः—

शङ्कुदत्तकालः—सामान्यघटिकागतकालः = कालसमीकरणमानम्।

## २.८३१ पूर्वाह्णकालावधिरपराह्णकालावधिश्च

पूर्वाह्णकालावधिः ( सूर्योदयाद् मध्याह्नपर्यन्त कालः ) अपराह्णकालावधिः ( मध्याह्नात् सूर्यास्तपर्यन्त कालः ) सर्वथा न सममितः, अर्थाद् मध्याह्नो न सूर्योदय सूर्यास्त मध्यकालः। तयोर्विभिन्नता कालसमीकरणमानापेक्षिणी। अपराह्णकालात् पूर्वाह्णकालस्यान्तर द्विगुणितकालसमीकरण मानम्। अर्थात्—

पूर्वाह्णकालः–अपराह्णकालः = २ × कालसमीकरणमानम्, अथवा पूर्वाह्णकालः = अपराह्णकाल. + २ कालसमीकरणमानम्। अत एव पूर्वाह्णकालावधिस्तावद् अपराह्णकालावधेर्महान्, यावत् कालसमीकरण धनात्मक विद्यते।

यदि दिनमान विदितमस्ति तर्हि सूर्योदयः सूर्यास्तकालश्च एव ज्ञायेते—

$$\text{सूर्योदयकाल.} = १२^{\text{हो}} - \frac{\text{दिनमान} + २\ \text{कालसमीकरणमानम्}}{२}$$

$$\text{सूर्यास्तकालः} = १२^{\text{हो}} - \frac{\text{दिनमान} - २\ \text{कालसमीकरणमानम्}}{२}$$

## २.८३२ कालसमीकरणफलम्

मकरसंक्रान्तिदिवसे दिनमानं लघुतम रात्रिमानञ्च दीर्घतमम्। तदपरेद्युर्दिनमान पूर्वं दिवसदिनमानात् किञ्चिद् दीर्घतरम्। यदि अपरेद्युर्दिनमान पूर्वदिवसदिनमानात् २ सेकिण्ड मितदीर्घतर तर्हि पूर्वाह्णकाले अपराह्णकाले उभयोरपि सेकिण्डैकमितदीर्घतरत्वं भविष्यतीति सामान्यधारणा जनानाम्। परन्तु न तथा। अपराह्णकालस्तु शनैः शनैर्दीर्घतरता भजते, पूर्वाह्णकालः पूर्वसमोऽथवा पूर्वाल्पतरः। घटनावैचित्र्यमिद कालसमीकरणादेव। मकरसंक्रान्तिसमीपे सूर्यस्य गतिः कतिपयदिवसानि समैव, तस्मात् स्पष्टापराह्णकालाः सममिताः; परन्तु कालसमीकरणं शनैः शनैर्भवते। अत एव मध्यममध्याह्नः प्रतिदिन स्पष्टमध्याह्नात् पूर्वं पूर्वतरं याति, अर्थात् सूर्यास्तस्य मध्यमसौरकालो वर्धते प्रत्यहम्, अर्थादपराह्णकालो दीर्घतरता भजते।

## २.८४ स्थानीयकालः

पृथिवी स्वाक्ष परितः पश्चिमतः पूर्वदिशं भ्रमति, अत एव पूर्वदिग्वर्तिदेशेषु सूर्योदय पूर्वं भवति सूर्यास्त पूर्वं भवति, सूर्यस्य याम्योत्तरवृत्तोल्लङ्घनमपि पूर्वं भवति। एवं स्थानीयमध्याह्न

कालस्य समये पूर्वंभूतत्वात् तत्स्थानीयकालः पश्चिमदिग्वर्तिदेशीयकालापेक्षया अग्रे भवति।[1] इद-मपरत्वं देशान्तराधीनम्। यतः ३६०° अंशमितं भचक्रं पृथ्वी ६० घटिकासु भ्रमति, अत एव अंशैकमितदेशान्तरे सति समयान्तरं $\frac{६०\times६०}{३६०}$ = १०′ पलमितं (४ मिनटमितं) दृश्यते।

### स्थानीयकालानयनपद्धतिः

देशान्तराङ्कयोरन्तरं दशघ्नं क्रियते। इदं पलमानेन लिख्यते। पुनः प्रथमस्थानस्य काले इदं संयोज्य (यदि द्वितीयस्थानं पूर्ववर्ति) विशोध्य (यदि द्वितीयस्थानं पश्चिमवर्ति) वा द्वितीयस्थानस्य स्थानीयकालो ज्ञायते।

यदि प्रत्येकनगरस्य वासिनः स्वस्थानीयकालेनैव व्यवहारं प्रारभेरन् तर्हि अव्यवस्था स्यात्। अतः किञ्चित्स्थलं निश्चीयते यतो रेखांशानां प्रवृत्तिर्भवति। पाश्चात्यज्यौतिषशास्त्रे 'ग्रिनिच'नाम नगरं ख्रिस्ताब्द १८८४ पश्चात् प्रमाणनगरम्। तत एव रेखांशानां प्रवृत्तिः प्रारभ्यते। प्राचीनभारतीयसिद्धान्तग्रन्थेषु गौरवमिदमुज्जयिनी नामकनगरस्य।

पाश्चात्यपञ्चाङ्गेषु 'ग्रिनिच'स्थानीया ग्रहाणां भोगांशादयो दीयन्ते। ततो निजस्थानस्य ग्रहस्थानानि लभ्यन्ते। 'ग्रिनिच'कालापेक्षया स्थानीयकालो यद्यधिकस्तर्हि रेखान्तरं पूर्ववर्ति, अन्यथा पश्चवर्ति।

### २.८५ प्रामाणिककालः

पूर्वानुच्छेदे वर्णितं यद् यदि प्रत्येकनगरस्य वासिनः स्वस्थानीयकालेनैव व्यवहारं प्रारभेरन् तर्हि अव्यवस्था स्यात्। इमामव्यवस्थां परिहर्तुं प्रायेण एकस्मिन् राज्ये एक एव कालः प्रवर्तते, स तस्य राज्यस्य राष्ट्रस्य वा प्रामाणिकः कालः प्रोच्यते। भारतवर्षे सर्वकार्याणि भारतीयप्रामाणिक कालेन कुर्वन्ति जनाः, चीनवासिनः सर्वकर्माणि चीनीयप्रामाणिककालेन विदधति, एवमेव सर्वे नेपालीयास्त प्रामाणिककालेन कर्माणि कुर्वन्ति। भारतीयप्रामाणिककालो 'ग्रिनिच'कालात् ५½ होरामितेन अग्रेचरः, अर्थाद् यदा ग्रिनिचनगरे रात्रेः द्विवादनवेला भवति, अत्र ७½ होरा वादनवेला भवति।

### २.८६ अन्ताराष्ट्रियदिनाङ्करेखा

ग्रिनिचनगरात् १८० अंशमितदेशान्तरे अद्भुता स्थितिर्विद्यते। तस्मात् स्थानात्

---

१. कल्प्यते यत् सूर्योदयः ६ होरावादने भवति। एकस्मिन्नेव अक्षांशे ख. है क प्र-स्थाने। क-स्थाने वयं स्थिताः, ख-स्थानं च पूर्वदिग्वर्ति। ख-स्थाने यदा सूर्योदयो भवति तदा तस्य खस्य स्थानीयकालः ६-होरावादनकालः, परन्त्वस्माकं सूर्योदयः पश्चाद् भविष्यति, अस्माकं ६-होरावादनकालोऽपि पश्चाद् भविष्यति। अर्थाद् यदा तत्र ख-स्थाने ६-होरावादनकालः, अत्र ६-होरावादनपूर्वकालः। अतः ख-स्थानीयकालः क-स्थानीयकालाद् अग्रेचरः।

किञ्चित् पूर्ववर्तिस्थानस्य कालो ग्रिनिचकालात् प्रायः १२ होराभितमग्रे तिष्ठति, किञ्चित् पश्चवर्तिस्थानस्य कालो ग्रिनिचकालात् प्रायः १२ होरामितं पश्चात्तिष्ठति। एवं स्वल्पान्तरवर्तिस्थानयोः काल्योः प्रायेण २४ होराणामन्तरं दृश्यते, अर्थाद् दिवसैकस्य अविच्छिन्नत्वञ्च वर्तते। अत एव दोषमसुं परिहर्तुमत्र अन्ताराष्ट्रियतिथिरेखा कल्प्यते, यत्र सर्वे नाविका दिनाङ्कपरिवर्तनं कुर्वन्ति[1]।

## विशेषद्रष्टव्यानि

### § २.१ पृथिव्या आकारः

पृथिवी गोलाकारेत्यतिप्राचीनं मतम्। ऋग्वेदसंहितायामिद सप्रमाणं व्याख्यातम्। यथा—

> चक्राणासः परीणाहं पृथिव्या हिरण्येन मणिना शुम्भमाना।
> न हिन्वानासस्तितिरुस्त इन्द्रं परि स्पशो अदधात् सूर्येण ॥
> (ऋ-सं० १-३३-८)

§ २.१ भाग: 'आ'वर्त्तनापि सूर्योदयस्य अवगमकाल्पनात् पृथिव्याः समतलत्वं निराकृतमस्ति। यथा—

> धा प्रा रजांसि दिव्यानि पार्थिवा श्लोकं देवः कृणुते स्वाय धर्मणे।
> प्र बाहू अस्राक् सविता सवीमनि निवेशयन् प्रसुवन्नक्तुभिर्जगत् ॥
> (ऋ-सं० ४-५३-३)

एवमेव गोपथब्राह्मणग्रन्थेऽपि (१.१०) नैकानि वाक्यानि दृश्यन्ते।

पश्चात् सर्वैरेव ज्योतिर्विद्भिर्गोलाकारत्वं प्रमाणपुरस्सरं निजग्रन्थेषु प्रदर्शितम्। 'भूगोल' इति शब्द एव भुवो गोलत्वं प्रकटयति। भास्कराचार्येण भूवर्तुलत्वमत्र (वृत्तो ध्रुवः) कथितम्—

> भूमेः पिण्डः शशाङ्कज्ञकविरविकुजेज्यार्किनक्षत्रकक्षा
> वृत्तैर्वृत्तो वृतः सन् मृदनिलसलिलव्योमतेजोमयोऽयम्।
> नान्याधारः स्वशक्त्यैव वियति नियतं तिष्ठतीहास्य पृष्ठे
> निष्ठं विश्वं च शश्वत् सदनुजमनुजादित्यदैत्यं समन्तात् ॥

श्रीपतिना मतान्तराणि प्रदर्श्य भूमेः स्वरूपं सदृग्गपुष्पनिचयग्रन्थिसमं कथितम्—

> आदर्शोदरसन्निभा भगवती विश्वम्भरा कीर्तिता
> कैश्चित् कैश्चन कूर्मपृष्ठसदृशी कैश्चित् सरोजाकृतिः।

---

1. कल्प्येते द्वे क ख स्थाने यान्ताराष्ट्रिकदिनाङ्करेखासमीपवर्तिनी क—स्थानं पूर्वदिशायाम्, ख—स्थानं पश्चिमदिशायाम्। यदि 'ग्रिनिच'नगरे सोमवासरस्य मध्याह्नस्तदा क—स्थाने सोमवारस्य अर्धरात्रिः, ख—स्थाने रविवारस्य अर्धरात्रिः।

अस्माकं तु कदम्बपुष्पनिचयग्रन्थेः समा सम्मता
सर्वत्रासुमता चयेन निचिता तोयस्थलस्थायिनाम् ॥

भूगोलस्य समतलतां निराकुर्वन् वर्णयति स एव—

मुकुरतलसमा चेत् सर्वतो मेदिनीयं
कनकगिरिरिव तद्दृष्टियोग्यो भवेत्कः ।
इदमपि खलु मिथ्याच्छादकास्तस्य शैलाः
सकलकुलगिरिभ्यो नूनमुच्चैः सुमेरुः ॥
किञ्च राक्षसपुरस्थितैर्नरै-
र्दृश्यते नियतमुन्नतो ध्रुवः ।
येन काञ्चनगिरीन्द्रमस्तका-
देव दूरमुपरि व्यवस्थितः ॥

प्राचीनज्योतिर्विदा § २.१. ( ३ ) वर्णिततथ्यस्य ज्ञानमासीत् ( द्रष्टव्या विशेषटिप्पणी § तत्र ), परन्तु तैस्तत्तथ्येन गोलाकारत्वं न प्रमाणीकृतं कदाचित्, पृथिव्या गोलाकारत्वस्य सर्वसम्मतत्वात् ।

### § २.१२ पृथिव्या व्यासः

अधुना पृथिव्या व्यासः पृथिव्याः परिधिमानं प्रत्यक्षविधिना गणयित्वा निश्चीयते । इयमेव पद्धतिरस्माकमाचार्यैरङ्गीकृतासीत् । व्यास परिधि सम्बन्धस्तैरतिसूक्ष्मतया विदितः । यथा निम्न सारिण्या स्पष्टीभविष्यति । [ परिधिः = व्यास × π — अत्र 'π' स्थिराङ्कस्य मानं दीयते ]

| | | |
|---|---|---|
| सूर्यसिद्धान्तः, ब्रह्मगुप्तः, द्वितीय आर्यभटः | $\sqrt{१०}$ | ३·१६२२ |
| प्रथम आर्यभटः | $\frac{६२८३२}{२००००}$ | ३·१४१६ |
| भास्करानार्यः | $\frac{२२}{७}$ अथवा $\frac{३९२७}{१२५०}$ | ३·१४२८ स्थूलमानम्<br>३·१४१६ सूक्ष्ममानम् |
| अन्यसिद्धान्तेषु | $\frac{२१६००}{६८७६}$ | ३·१४१३६ |
| आधुनिकगणितशास्त्रे | | ३·१४१५९२७ |

[ अत्र भास्कराचार्यस्य सूक्ष्ममानं पूर्णतया आधुनिकगणितशास्त्रसमम् ]

भूपरिधिमानाय निम्नो विधिर्भास्कराचार्येण दत्तः—

पुरान्तरं चेदिदमुत्तरं स्यात् तदक्षविश्लेषलवैस्तदा किम् ।
चक्रांशकैरित्यनुपातयुक्त्या युक्तं निरुक्तं परिधेः प्रमाणम् ॥

निरक्षदेशः स्वदेशाद् यथा यथा दक्षिणतो भवति स्वस्वाक्षांशाधिपुनरुद्धृत्त नतम् । तयोरन्तरेऽक्षांशाः । ते च निरक्षदेशादपसारयोजनैरनुपातेनोत्पद्यन्ते । अतः यस्मिंश्चित् पुरेऽ-

क्षांशान् ज्ञात्वा तस्मात् पुराद्दुत्तरतोऽन्यस्मिन् पुरे ज्ञेया । ततस्तेषामन्तरांशै पुरान्तरयोजनै श्चानुपात । यदि अन्तरांशै पुरान्तरयोजनानि लभ्यन्ते तदा चक्रांशै ३६० किमिति । फल भूपरिधियोजनानि'' इति [ अयमेव विधिरधुनापि स्वीक्रियते, केवल सूक्ष्मय न्त्रसाहाय्येन माना नयनेऽधिक यथार्थत्व लभ्यते ] । अनेन विधिना लब्ध व्यासमानमधो दीयते—

| | | |
|---|---|---|
| पञ्चसिद्धान्तिकामतेन | १०१८ $\frac{६}{१०}$ | योजनानि |
| आर्यभट लल्लमतेन | १०५० | ,, |
| सूर्यसिद्धान्तमतेन | १६०० | ,, |
| सिद्धान्तशिरोमणौ भास्कराचार्यमतेन | १५८१.$\frac{२}{४}$ | ,, |
| महासिद्धान्तमतेन | २१०९ | ,, |
| | ( क्रोशार्धानि ) | |
| पाश्चात्यार्वाचीनमतेन | ७९२६ ६८ | विषुवद्वृत्तीयमानम् |
| | ७८९९ ८८ | ध्रुवीयमानम् |

योजनक्रोशार्ध( मील )यो र्वो निर्णीतो नास्ति, अत एव तुलना नात्र सुकरा ।

## § २२ पृथिव्या अक्षभ्रमणम्

पृथिवी अचला एवेति प्राय प्राचीनाचार्याणा मतम् । केवलमार्यभटाचार्यो भपञ्जर सुस्थिर पृथिवीञ्च चलाममन्यत । यथा नौकाधिरूढो जनोऽनुलोमगमनात् स्थिरान् तटवर्तिवृक्षादीन् विपरीतदिग्गामिन इव मन्यते, तथैव पृथिव्या भ्रमणेन सुदृढ भचक्र लङ्कात समानान्तरगतयोर्याम्योत्तरदिशो समया गत्या भ्रमद् दृश्यते ।

अनुलोमगतिर्नौस्थ पश्यत्यचल विलोमग यद्वत् ।
अचलानि भानि तद्वत् समपश्चिमगानि लङ्कायाम् ॥ ( गोलपादे )

पर इत्त्थ । वराहमिहिरेण तत्परवर्तिभिर्ब्रह्मगुप्तलल्लश्रीपत्यादिभि र्यैर्ज्योतिर्विद्भि खण्डितम् । यथा—

भ्रमति भ्रमस्थितेव क्षितिरित्यपरे वदन्ति नोडुगण ।
यद्येव श्येनाद्या न खात् पुन स्वनिलयमुपेयु ॥
अन्यच्च भवेद् भूमेरह्ना भ्रमणं ध्वजादीनाम् ।
नित्य पश्चात् प्रेरणमथाल्पगा स्यात् कथं भ्रमति ॥
( वराहमिहिर )

यत्राभ्रमम्बरा विहगा स्वनीडमासादयन्ति न खलु भ्रमणेन धात्र्या ।
नित्याम्बुदा अपि न भूरिपयोमुच स्युर्देशस्य पूर्वगमनेन चिराय हन्त ॥
भूगोलवेगजनितेन समीरणेन केत्वादयोऽप्यपरदिग्गमना सदा स्यु ।
प्रासादभूधरशिरांसि च सम्पतेयुस्तस्माद् भ्रमत्युडुगणाम्बरचक्रमेव ॥

कदाचिदपि नैतदन्यथा यद् वायुमण्डलमपि भुवा सह भ्रमति ।

---

१ 'भूमिरचलाऽनन्ता' इति कोश ।

### § २.३ पृथिव्याः परिक्रमणम्

पृथिवी सूर्यं परितो भ्रमतीति तथ्यस्य निरीक्षणं पुरा प्रायेणासम्भवमासीद् यत् सूर्यपरिक्रमणरतायाः पृथिव्या जनिता दृग्विपर्ययाः पृथिवीपरिक्रमणरतसूर्याद् जनितेभ्यो दृग्विपर्ययेभ्योऽभिन्ना एव ।

### § २.४ ऋतवः

ऋतवो भारतीयगणनायां षट् ( पञ्च वा ) सन्ति । 'ऋतु'शब्द ऋग्वेदे विरलमेव दृश्यते, परन्तु शरद्हेमन्तादिशब्दाः पुष्कलमात्रया तत्र प्रयुक्ताः सन्ति । तथापि यजुर्वेदादिषु ऋतुशब्दः, ऋतूनां नामानि, ऋतुसंख्याविषयकवचांसि च पर्याप्तमात्रया विद्यन्ते । कदाचित् षट्संख्याकऋतवोऽधिकं प्रचलिता आसन् । तैत्तिरीयब्राह्मणे ( २,७,१० )—

पञ्चशारदीयेन यजेत ॥·········पञ्च वा ऋतवः संवत्सरः ॥

ऐतरेयब्राह्मणे च—

द्वादशमासाः पञ्चर्तवो हेमन्तशिशिरयोः समासेन ॥ (१.१)

एवंविधा उल्लेखाः सन्ति । संवत्सरस्य कल्पनया पक्षिरूपं दत्त्वा तैत्तिरीयब्राह्मणे (१.१०.४१) ऋतूनां वर्णनमतिसुन्दरमस्ति—

"तस्य ते ( संवत्सरस्य ) वसन्तः शिरः ॥ ग्रीष्मो दक्षिणः पक्षः ॥ वर्षाः पुच्छम् ॥
शरदुत्तरः पक्षः ॥ हेमन्तो मध्यम् ॥" इति ।

एवं वर्षारम्भो वसन्तादासीत् ।

### § २४·२ ऋतूनां कारणम्

ऋतूनां कारणं सूर्य एवेति ऋग्वेदे नैकसूक्तेषु लभ्यते । अत्र निदर्शनरूपं निम्नं दीयते—
"पूर्वामनु प्रदिशं पार्थिवानामृतून् प्रशासद्विदधावनुष्ठु ॥" (ऋ. सं. १.९५.३) ।

### § २.५ वायुमण्डलम्

अस्माकं शास्त्रेषु सप्त वायुस्कन्धा उल्लिखिताः सन्ति । ते (१) आवहः (भूवायुः), (२) प्रवहः, (३) उद्वहः, (४) संवहः, (५) सुवहः, (६) परिवहः, (७) परावहश्च । तदुक्तम् श्रीपतिना—

स्यादावहः प्रवह उद्वहसंवहौ च स्यात्सुवहः परिवहश्च परावहश्च ।
स्कन्धाः क्रमेण मरुतामिति सप्तसंख्या विश्वम्भरान्तरमाबहुदूरके ॥

एषु वायुषु प्रवहो भचक्रं भ्रामयति । आवहश्च भूवायुरस्माकमाधुनिकशब्दावल्यां वायुमण्डलम् । वायुमण्डलस्य उच्छ्रयो द्वादशयोजनानि ( भास्कराचार्यस्य योजनं = ५ क्रोशार्धानि ) अर्थात् ६० क्रोशार्धानि ( तुलनीयमत्र आधुनिकमानम् ) ।

§ २.५४ सन्ध्यारागस्य मूले वायुमण्डलमेवेति वराहसंहितायाः श्लोकैः स्पष्टीभविष्यति—

भूम्युत्थितैः रजोधूमैर्दिगन्तव्योम्नि संस्थितैः ।
सूर्याल्पकिरणोर्मिभिरारुण्यमवभासते ॥
विस्तारमयं वस्तु यद् दृष्टेर्व्यवधायकम् ।
तेनाप्रसन्नीभूतं दृश्यते चक्रवालकम् ॥

सन्ध्यारागः ॥ विज्ञेयो दिनादौ च दिनात्यये।
राकाया तु निशावक्त्रे तथैवेन्दुघनोद्गमे॥

§ २.६ अयनगतिः

विषुवत्क्रान्तिवृत्तयोः सम्पातस्य चलनं वर्तत इति कदाचिद् वैदिकार्याणामप्यनुभव आसीत्। प्राचुरज्यौतिषग्रन्थे तत्कालीनदक्षिणायनोत्तरायणयोः स्थाने दत्ते। सर्वप्रथमं वराहमिहिरेण बृहत्संहितायामुक्तमिदं तथ्यम्—

आश्लेषार्धाद्दक्षिणमुत्तरमयनं रवेर्धनिष्ठाद्यम्।
नूनं कदाचिदासीद्येनोक्तं पूर्वशास्त्रेषु॥
साम्प्रतमयनं सवितुः कर्कटकाद्यं मृगादितश्चान्यत्।
उक्ताभावो विकृतिः प्रत्यक्षपरीक्षणैर्व्यक्तिः॥

तत्परवर्तिज्योतिर्गणकैरप्यस्य सत्ता स्वीकृता।

सूर्यसिद्धान्तानुसारमयनांशाः २७ अंशान्तरेषु भ्रमन्ति। अर्थात् प्रथममयनांशाः पश्चिमं २७ अंशपर्यन्तं गच्छन्ति, ततः पूर्वे २७ अंशपर्यन्तम्। इयं दोलकवदयनांशानां गतिरधुना ज्यौतिषविज्ञानेन न स्वीक्रियते। आधुनिकानामिदं मतं यदयनचलनं भचक्रं पूर्णचक्रेषु भ्रमति। मुञ्जालस्य (गोलाध्याये), कदाचिद् भास्कराचार्यस्य, गणेशदैवज्ञस्याप्येवं मतमासीत्। मुञ्जालादिभिर्वार्षिकगतिः ५९,९००७ विकलामिता गणिता। मानमिदं पाश्चात्त्यगणितागतमानादधिकं प्रतीयते, परन्तु नैवम्। वर्षमानं पुराणानां वर्तमानवर्षमानादधिकं गणितम्, अत एव अयनस्य वार्षिकी गतिरप्यधिका भूता। गणितेन सिद्ध्यते यद् यदि शुद्धवर्षमानं गृहीत्वा गणना क्रियते तर्हि मुञ्जालादिभिर्गणिता वार्षिकी गतिः ५०."०४१ मिता भवति। मानमिदं केवलं १.५६८ विकलाभ्यधिकम्।

§ २.७ आयुः

भारतीयपञ्चाङ्गेषु प्रथमपृष्ठे एव पृथिव्या यदायुर्दत्तं भवति तदेव आधुनिकतमपाश्चात्त्यसिद्धान्तैरागच्छतीत्यद्भुतो विषयः।

§ २.८ कालविभागः

सूर्यसिद्धान्तादिग्रन्थेषु मानाध्याये कालविभागा वर्ण्यन्ते। पाश्चात्त्यसिद्धान्तेषु त्रय काला एव प्रचलिताः, अस्माकं तु नव मानानि—

ब्राह्मं दिव्यं तथा पित्र्यं प्राजापत्यं गुरोस्तथा।
सौरं च सावनं चान्द्रमार्क्षं मानानि वै नव॥ (सूर्यसिद्धान्ते, १४।१)

एषां व्यवहारे चत्वारि दृश्यन्ते—

चतुर्भिर्व्यवहारोऽत्र सौरचान्द्रार्क्षसावनैः।
बार्हस्पत्येन षष्ट्यब्दं ज्ञेयं नान्यैस्तु नित्यशः॥ (सूर्य० १४।२)

नाक्षत्रमानमेवं वर्ण्यते—

भचक्रभ्रमणं नित्यं नाक्षत्रं दिनमुच्यते।

एवमेतस्मिन्नेषां वर्णनानि कृतानि॥

# तृतीयोऽध्यायः

## चन्द्रः

[ स्वशीतलज्योत्स्नया आह्लादयन् सर्वलोकान् अस्मन्मातरं धरित्रीं स्वमातरमिव परिक्रामति चन्द्रः । अतः पृथिव्याः पश्चात्तस्य परिचयो दीयते । ]

### ३.१ चन्द्रस्य दूरत्वम्

#### ३.११ दूरत्वनिर्धारणम्

ज्योतिर्विद्यायां दूरत्वनिर्धारणे सैव रीतिः प्रयुज्यते या लौकिकव्यवहारेऽगम्यवस्तूनां दूरत्वनिर्धारणे । यदि नद्या अपरतटे एको वृक्षस्तिष्ठति, तस्य दर्शकस्थानाद् दूरत्वमस्मिन्नेव तटे तिष्ठन्, यदि दर्शको ज्ञातुमिच्छति, तर्हि स रेखागणिताश्रयं भजते । क-स्थाने तिष्ठन् वृक्षं प्रेक्ष्यैकं स्थूणं स्थापयति, वृक्षस्थूणरेखाया वृक्षमवलोकयन् पश्चभागं कानिचित् पदानि गत्वा द्वितीयं ख-स्थूणं खनति । पुनः १० हस्तमितान्तरं ( अभीष्टहस्तमितान्तरं वा ) गत्वा च-स्थाने तृतीयं स्थूणं खनति । च-स्थानाद् वृक्षं पश्यन्नेव अग्रे गत्वा ज-स्थानवृक्षरेखायां चतुर्थं स्थूणं खनति । एवं त्रिभुजद्वयं ( △ वृ क ख, △ वृ च ज ) प्राप्यते ।




अत्र वृ च ज-त्रिभुजेन अस्मत्प्रयोजनम् । वृ च ज-त्रिभुजे वृ च ज कोणस्य वृ ज च-कोणस्य च मानं ज्ञात्वा लिख्यते । पुनस्तत्रैव एकमीदृशं त्रिभुजमालिख्यते, यस्य आधाररेखा २ इंचमिता, आधारकोणौ क्रमशः वृचज कोणमितः, वृजच-कोणमितश्च । एवं तयदत्रिभुजं वृचजत्रिभुजं च परस्परं सर्वथा समाने । अत एव त्रिभुजे तद्ये यदि तथ-रेखाया मानं ४-इञ्चानि, तर्हि चवृ-रेखायाः



(दण्डूरत्वस्य) मान ४० हस्ता भविष्यति। एवं रेखागणितेन (तद्विशिष्टशाखया त्रिकोणमितिनामिकया) अगम्यवस्तुनो दूरत्वमनुमीयते। अनेनैव विधिना क्षेत्रमापका भूप्रान्तस्य मानचित्रमालिखन्ति, यत शृङ्खलाभिर्मापनं सर्वत्र न सम्भवम्।

## ३।२ चन्द्रदूरत्वनिर्धारणम्

कल्प्यते यत् पृथिव्यां स्तो द्वे वेधशाले क स्थाने ख स्थाने च। क ख स्थानयोरक्षांशान्तरं ८४° मितम्। भूकेन्द्रात् (भू स्थानात्) क स्य ख स्य भूपृष्ठस्थितत्वाद् दूरत्वं समानं ४००० क्रोशार्धमितम्, अर्थात् त्रिभुजे क भू खे, भूख भुजा भूक भुजा समाने, अत एव




प्रत्येक कोण ∠भू क ख ∠भू ख क ४८° मितं, क ख-भुजा च ५३०० क्रोशार्धमिता।[1] पुनः क स्थानीया याम्योत्तरवृत्तमुल्लङ्घयतश्चन्द्रस्य वेधोपलब्धनतांशाः $न_1$-मिताः, ख-स्थानीयास्तस्मिन्नेव काले नतांशा $न_2$ मिताः। अत एव

$$\angle च क ख = १८०^\circ - न_1 - ४८^\circ$$

$$\angle च ख क = १८०^\circ - न_2 - ४८^\circ$$

एवं च क ख त्रिभुजे एका भुजा (क ख = ५३५३ क्रोशार्धानि) विदिता, द्वौ कोणौ (∠च क ख, ∠च ख क) विदितौ। अत एव भुजा 'चक' (क स्थानाच्चन्द्रस्य दूरत्वम्), च ख भुजा (ख-स्थानाच्चन्द्रस्य दूरत्वम्) च त्रिकोणमित्या शक्ये[2]।

---

१ कख—भुजा = २ × ४००० (व्यासार्ध) × कोज्या ४८°

२ चक—भुजा $= \dfrac{५३५३ \times ज्या\ (चखक)}{ज्या\ (कचख)}$

ततस्त्रिभुजे चंभूके, द्वे भुजे (चंक-भुजा, कभू भुजा) विदिते, कोणः चं कू भू अपि विदितः, अत एव च भू भुजा ज्ञातुं योग्या भवति। चभू भुजा प्रायः २,३८,८५७ कोशार्धमिता।

## ३.१३ लम्बनम्

पूर्वविधिश्चन्द्रस्य दूरत्वनिर्धारणे प्रयुज्यते, परन्तु स सुकरो न भवति ग्रहाणां दूरत्वनिर्धारणे। तेषां दूरत्वनिर्णये एकोऽन्यो विधिः प्रयुज्यते। तेन विधिना यदि चन्द्रस्य दूरत्वं मीयते तर्हि प्रथमं चंभूक-कोणो मीयते। कोणोऽयं लम्बनमुच्यते।




भूमध्यीयलम्बनम्

एवं भूपृष्ठग्रहप्रोतरेखा-भूमध्यग्रहप्रोतरेखा समुत्पन्नकोणः ग्रहस्य दैनिकलम्बनमुच्यते, अर्थात् यदि 'भू' भूमध्य-केन्द्रम्, 'पृ' भूपृष्ठस्थपुरुषः, तर्हि भू ग पृ-कोणस्तस्य ग्रहस्य लम्बनम्।




क्षैतिजलम्बनम्

(द्रष्टव्यं चित्रद्वयम्)। लम्बनं पाश्चात्यज्योतिर्गणिते 'p' (पी) वर्णेन व्यक्तीक्रियते। यदि ग्रहो ज्योतिःपिण्डो वा क्षितिजे लग्नस्तर्हि तस्य तत्कालिकलम्बनं 'क्षैतिजलम्बनं' कथ्यते। इदं P—वर्णेन व्यक्तीक्रियते।[1]

## ३.१४ लम्बनदूरत्वसम्बन्धः

उपरि चित्रे 'भू पृ ग' एकं समत्रिभुजम्, अत एव

दूरत्वम् = भूव्यासार्धं × क्षैतिजलम्बनम्

---

1. क्षैतिजलम्बन-भूमध्यीयलम्बनसम्बन्धः। भूमध्यीयलम्बनम् = क्षैतिजलम्बनम् × नतांशज्या (द्रज्या), अत एव भूमध्यीयनतांशा वेधोपलब्धनतांशेभ्यो लम्बनमितकं न्यूनाः। अर्थात्
भूमध्यीयनतांशाः = भूपृष्ठीयवेधोपलब्धनतांशाः — लम्बनम्।

यदि लम्बनं सेकिण्ड ( विकला )माने गणितं तर्हि

$$\text{दूरत्वम्} = \frac{\text{भूव्यासार्धं} \times २०६२६५''}{\text{क्षैतिजलम्बने विकलाना सख्या}}$$

उदाहरणम्—चन्द्रस्य वेधेन गणनया वा क्षैतिजलम्बनं ५७'६'' चन्द्रस्य दूरत्वस्य मानं प्राप्यताम् ।

$$\text{चन्द्रदूरत्वम्} = \frac{४००० \times २०६२६५}{३४२६}$$

$$= २,४०,००० \text{ ( आसन्नमानेन ) क्रोशार्धानि ।}$$

## ३.१४ चन्द्रस्य लम्बननिर्धारणम्

यदि एकस्यामेव देशान्तररेखायां द्वे क–ख–स्थाने स्तिवे, चन्द्रस्य नतांशाश्च पूर्ववत् क्रमशः $न_1$–मिताः, $न_2$–मिताः, भूमध्यीयलम्बनं क्रमशो $ल_1$–मितं $ल_2$–मितम्, तर्हि



लम्बननिर्धारणम्

$$ल_1 = \text{क्षैतिजलम्बन} \times \text{ज्या} ( न_1 )$$

$$ल_2 = \text{क्षैतिजलम्बनं} \times \text{ज्या} ( न_2 )$$

$$\text{अर्थात् } ल_1 + ल_2 = (\text{क्षैतिजलम्बन}) \times (\text{ज्या } न_1 + \text{ज्या } न_2)$$

अथवा

$$\text{क्षैतिजलम्बनम्} = \frac{\text{ल}_1 + \text{ल}_2}{\text{ज्या न}_1 + \text{ज्या न}_2}$$

($\text{ल}_1 + \text{ल}_2$)स्य मानं सरलतया ज्ञायते, यतः $\text{ल}_1 + \text{ल}_2 = \text{न}_1 + \text{न}_2 -$ क-स्थानस्याक्षांशाः — ख स्थानस्य अक्षांशाः ।

अत एव चन्द्रस्य नतांशानां ज्ञानाद् लम्बनज्ञानं सम्भवम् ।

$$\text{एवं क्षैतिजलम्बनम्} = \frac{\text{न}_1 + \text{न}_2 - \text{कस्थानस्याक्षांशाः} - \text{खस्थानस्याक्षांशाः}}{\text{ज्या}(\text{न}_1) + \text{ज्या}(\text{न}_2)}$$

### ३.१९ चन्द्रदूरत्वमानम्

चन्द्रो भुवोऽन्यग्रहापेक्षया समीपतरमिति पुरातनकालात् सर्वेषां मतम् । इदं स्वाभाविकमप्यासीत्, यतः—

( १ ) चन्द्रस्य प्रदक्षिणाकालः सर्वाधिकाल्पः ।
( २ ) सूर्यग्रहणावसरे चन्द्रः सूर्यभुवोर्मध्ये आपतति ।
( ३ ) चन्द्रबिम्बपरिमाणं बृहत्तमम् ।

परन्तु यथार्थदूरत्वनिर्धारणमतिसरलं न । पूर्वानुच्छेदेषु यो विधिर्दत्तस्तेन चन्द्रस्य मध्यमलम्बनं ५७′ २″·७ मितम्, मध्यमदूरत्वञ्च तदनुसारेण २३८८५७ क्रोशार्धानि प्राप्यते ।

गणितागतदूरत्वस्य सत्यतास्थापनाय अचिरात्पूर्वं १९४६-तमे खिस्ताब्दे एकः प्रयोगः कृतोऽमेरिकायाम् । तत्र सेना सङ्केत विभागेन 'रडार'यन्त्रेण विद्युत्तरङ्गाश्चन्द्रं प्रति प्रक्षिप्तास्ते २·५६ मितसेकिण्डानन्तरं चन्द्रात् परावर्त्य पुनस्तत्रागताः, अत एव चन्द्रस्तदा १·२८ मितसेकिण्टदूरत्वे आसीत् । अर्थात्—

$$\text{दूरत्वम्} = १·२८ \times \text{विद्युद्वेगः}$$
$$= १·२८ \times १,८६,२७० \text{ क्रोशार्धानि}$$
$$= २,३८,४२५ \text{ क्रोशार्धानि ।}$$

## ३·२ चन्द्रस्य व्यासादयः

### ३.२१ चन्द्रव्यासमानम्

चन्द्रस्य दृश्यबिम्बस्य मध्यमानं ३१′७″ मितमस्ति । इदं वेधेन प्राप्यते । अत एव यथार्थव्यासस्य मानं निम्नलिखितेन ५.६ सू० स्थितेन क्षेत्रेण ज्ञातुं गम्यते वा ।

अत $\dfrac{\text{चन्द्रव्यासार्धः}}{\text{भूव्यासार्धः}} = \dfrac{\text{बिम्बव्यासार्धमानम्}}{\text{चन्द्रलम्बनम्}}$ अत एव चन्द्रव्यासार्धः $= \dfrac{\text{३९६३} \times \text{९३२.५}}{\text{३४२२७}}$

$= \text{१०२९.९५}$ क्रोशार्धानि।



### ३.२२ चन्द्रस्य पिण्डमात्रा

गुरुत्वाकर्षणसिद्धान्तेन चन्द्रस्य पिण्डमात्रा निर्धार्यते। § ३.३१ व्यक्ती-करिष्यते यद् वस्तुतश्चन्द्रभूपिण्डयोर्गुरुत्वाकर्षणीयकेन्द्रमेव सूर्यं परितो भ्रमति, भूश्च चन्द्रश्च तत्केन्द्रमभितो भ्रमतः। अनेन भुवो मध्यकेन्द्रपरिक्रमणेन सूर्यस्य प्रतीयमानस्थित्या किञ्चित् परिवर्तनं दृश्यते—चान्द्रमासस्य एकस्मिन् पक्षे सूर्यस्य गतिः किञ्चिद् दैर्घ्यं प्राप्नोति, द्वितीये च पक्षे तां किञ्चिन्मान्द्यं लभते। परिवर्तनमिदं कदापि द्वादशविकलाभ्योऽधिकं न।

स्थितिविज्ञानेन ज्ञायते यद् यदि भुवः पिण्डमात्रा $\text{पि}_{\text{भू}}$ चन्द्रस्य पिण्डमात्रा $\text{पि}_{\text{च}}$, तर्हि गुरुत्वाकर्षणीयकेन्द्रस्य दूरत्वं भूकेन्द्रात् $\dfrac{\text{पि}_{\text{च}}}{\text{पि}_{\text{भू}} + \text{पि}_{\text{च}}} \times$ भूचन्द्रान्तरम्, तथा चन्द्रकेन्द्रात् $\dfrac{\text{पि}_{\text{भू}}}{\text{पि}_{\text{भू}} + \text{पि}_{\text{च}}} \times$ भूचन्द्रान्तरम्।

उपरि भुवो मध्यकेन्द्रपरिक्रमणात् सूर्यस्य गत्यां द्वादशविकलामितान्तरमागच्छतीत्युक्तम्। सूर्यस्य दूरत्वञ्च पूर्वनिर्दिष्टमेव ९,२९,००,००० क्रोशार्धमितम्। अत एव एकस्मिन् 'रेडियने' ९,२९,००,००० क्रोशार्धानि तर्हि १२ विकलासु कियन्ति? इति त्रैराशिकेन ५७६० क्रोशार्धानि

लभ्यन्ते। अत एव भूकेन्द्राद् मध्यकेन्द्रस्य दूरत्वं $\frac{५७६०}{२}$=२८९५ क्रोशार्धानि। इदञ्च उपरि गणितं $\frac{पि_{भू}}{पि_{भू} + पि_{च}}$ × भूचन्द्रान्तरम्। अत एव—

$$\frac{पि_{भू}}{पि_{भू} + पि_{च}} \times भूचन्द्रान्तरम् = २८९५$$

अनेन समीकरणेन $\frac{पि_{च}}{पि_{भू}} = \frac{१}{८१·५६}$ लभ्यते। अर्थात् चन्द्रस्य पिण्डमात्रा भुवः पिण्डमात्राया $\frac{१}{८१·५६}$ भागमिता।

### ३.२२ चन्द्रस्य घनत्वम्

चन्द्रस्य आयतनं पार्थिवायतनस्य $\frac{१}{४९}$ भागमितम्, अत एव चन्द्रस्य घनत्वं $\left(\frac{पिण्डमात्रा}{आयतनम्}\right)$ $=\frac{४९}{८१·५}$ = ०·६ भागमितं पार्थिवघनत्वस्य, अर्थात् ०·६ × ५·५ = ३·३ गुणितं जलघनत्वस्य।

## ३.३ चन्द्रस्य परिक्रमणम्

पूर्वानुच्छेदे चन्द्रस्य मध्यमदूरत्वं २३८८५७ क्रोशार्धमितं गणितम्, परन्तु वास्तविकदूरत्वं सदा न समम्। यतश्चन्द्रो भुवं परितो दीर्घवृत्ताकारकक्षाया भ्रमति, यथा भूः सूर्यं परितो भ्रमति। चन्द्रकक्षाया उत्केन्द्रता ०·०५४९ (=$\frac{१}{१८}$) मिता। यदा चन्द्रो दूरतमस्तदा चन्द्रोच्चं कथ्यते, समीपतमे चन्द्रनीचमुच्यते।

### ३.३१ चन्द्रस्य सूर्यं परितो भ्रमणम्

चन्द्रः पृथिवीं परितो भ्रमति, पृथिवी च सूर्यस्य प्रदक्षिणां करोति, अत एव चन्द्रोऽपि सूर्यस्य प्रदक्षिणां करोति। सूर्यस्य प्रदक्षिणायां वस्तुत एकपिण्डवद् भूचन्द्रावाचरणं कुरुतः,

या च भूकक्षा कथ्यते सा भूचन्द्रयोः केन्द्रस्य कक्षा। अस्य केन्द्रस्य भूश्चन्द्रश्च उभौ परिक्रमं कुरुतः, केन्द्रञ्च सूर्यं परितो भ्रमति। परन्तु केन्द्रमिदं भूपिण्डमध्यवर्ति,[1] अत एव भुवः केन्द्रं परितो भ्रमणं न लक्ष्यते, चन्द्रस्य केन्द्रं परितो भ्रमणं भुवं परितो भ्रमणमिव दृश्यते।



### ३.३२ चन्द्रकलाः

चन्द्रो भुवमभितो भ्रमणं प्रायः २९ ½ दिनेषु करोति, परन्तु चन्द्रः प्रकाशहीनपिण्डत्वाद् न भाति निजभास्वरत्वेन, ये च रजनीकररश्मयः कथ्यन्ते ते केवलं चन्द्रे पतित्वा ततः परावृत्ताः सूर्यरश्मय एव। अत एव भास्वरत्वविहीनत्वाच्चन्द्रस्यार्धं एव दृश्यते यदा तस्य प्रकाशितगोलार्धः पूर्णतोऽप्यनायातोऽस्माकं दृक्पथमागच्छति। प्रकाशितगोलार्धोऽयं भुवं परितश्चन्द्रस्य भ्रमणशीलत्वाद् विभिन्नेषु दिनान्तरेषु विभिन्नमानतया अवलोक्यते— कदाचित् पूर्णतया सम्मुखे आयाति, कदाचिदर्धतया, कदाचिच्च पूर्णतया तिरोहितो भवति। एषु प्रकाशितगोलार्धस्य विभिन्नदर्शनेभ्यश्चन्द्रस्य कलानुक्षयवृद्धी भवतः। निम्नालेख्ये चन्द्रस्य विभिन्नस्थानेषु कला-दृष्टिस्थानादयो दर्श्यन्ते—

1. चन्द्रस्य पिण्डमात्रा भुवः पिण्डमात्राया $\frac{1}{८१.५६}$ मिता, अत एव भूचन्द्रयोः केन्द्रं भूकेन्द्रात् $\frac{1}{८२.५६}$ मितदूरस्थे, अर्थात् (आसन्नमूल्येन) २८८० क्रोशार्धेषु स्थितम्। यतो भूव्यासार्धं ४,००० क्रोशार्धानि, केन्द्रमिदं भूपिण्डान्तर्वर्ति।

| ष्टिः | चन्द्रस्य स्थानम् | इनान्तरम् | चन्द्रभागदर्शनम् | कला | तिथिः |
|---|---|---|---|---|---|
| युतिः | भूसूर्ययोर्मध्ये | शून्यम् | अप्रकाशितगोलार्धः | हीना | अमावस्या |

( ततश्चन्द्रः सूर्यस्य पूर्वं तिष्ठति, इनान्तरं वर्धते, प्रकाशितगोलार्धः क्रमशः सम्मुखे याति-
कलाश्च शनैः शनैर्वर्धन्ते । )

| | | | | | |
|---|---|---|---|---|---|
| त्रिभान्तरम् | भुवः पार्श्वे | समकोणमितम् | प्रकाशितगोलार्धस्य अर्धभागः | अष्टमी | अष्टमी |

( तत इनान्तरं समकोणाधिकं वर्धते, प्रकाशितगोलार्धोऽधिकांशभागान् प्रकटयति । )

| | | | | | |
|---|---|---|---|---|---|
| षड्भान्तरं | भूः सूर्यचन्द्रयोर्मध्ये | १८०° मितम् | प्रकाशितगोलार्धः पूर्णतया दृश्यते | पूर्णाः कलाः | पूर्णमासी |

( तत इनान्तरं षड्भान्तराद् हीयते शनैः शनैः, तथैव प्रकाशितगोलार्धस्तिरोधानं भजते )

| | | | | | |
|---|---|---|---|---|---|
| त्रिभान्तरम् | भुवः पार्श्वे | समकोणमितम् | प्रकाशितगोलार्धस्य अर्धभागो न दृश्यते | अष्टमी | अष्टमी |

( इनान्तरं शनैः शनैस्त्रिभान्तराद् हीयते, अप्रकाशितगोलार्धस्याधिकांशभागाः सम्मुख
मागच्छन्ति, चन्द्रः सूर्यस्य पश्चिमे तिष्ठति । )

| | | | | | |
|---|---|---|---|---|---|
| युतिः | भूसूर्ययोर्मध्ये | शून्यम् | अप्रकाशितगोलार्धः | हीना | अमावास्या |

चन्द्रकला, चन्द्रस्य दृष्टिः, स्थानादयश्च निम्नचित्रादपि सुस्पष्टा भविष्यन्ति—



चन्द्रकक्षा:

### ३.३३ चन्द्रालोकः

( १ ) साधारणतया प्राकृतजनानां मतमिदं यत् चन्द्रस्य अष्टमीचन्द्रस्य आलोकः पूर्णिमाचन्द्रस्य आलोकस्य अर्धं, कलानामर्धत्वात्; अर्थात् पूर्णमास्या यया मात्रया रजनीकरो

भूलोकं प्रकाशयति, अष्टम्यां तदर्धमात्रया प्रकाशयति; यतः पूर्णिमास्यां पूर्णश्चन्द्रः, अष्टम्यामर्धश्चन्द्रः। परन्तु नैवं विद्यते। अष्टम्यां चन्द्रालोकः पूर्णिमालोकस्य नवांशः। निम्नलिखित रेखावर्गाङ्कितपत्रे आलोकमात्रा दीयते—




आलोकमात्रा - रेखाचित्रम्

अष्टम्यां चन्द्रालोकः पूर्णिमालोकस्य नवांशमित इति। अत्रेदं कारणम्। अष्टम्यां सूर्यकिरणा तिर्यक्तया चन्द्रपृष्ठे पतन्ति, तिर्यक्पतनाच्छाया दीर्घा भवति। पूर्णिमायां सूर्यकिरणाः सम्मुखतया पतन्ति, छाया च हीना भवति। पुनश्च चन्द्रे पतिता छाया पृथिव्यां पतितायाश्छायाया अपेक्षया गाढा, यतश्चन्द्रे वायुमण्डलं न वर्तते। अत एव छायाया दैर्घ्याद् गाढत्वाच्च अष्टम्यां चन्द्रालोकस्य मात्रा अत्यल्पीयसी।

( २ ) शिशिरर्तौ चन्द्रालोकोऽधिको भवति। सूर्यस्य मुदूरदक्षिणे स्थितिः शिशिरर्तौ भवति। अत एव पूर्णचन्द्रस्य तदा सूर्यग्रहभान्तरे स्थितत्वात् स्थितिः सुदूरोत्तरे भवति। चन्द्रस्य सुदूरोत्तरस्थितत्वाद् किरणा ऋजवो भवन्ति, चन्द्रोदयाच्चन्द्रास्तकालपर्यन्तं कालावधिश्च दीर्घः। अत एव चन्द्रकिरणानामृजुपतनाद् दीर्घकालिकचन्द्रदर्शनाच्च चन्द्रालोकः शिशिरर्तौ अधिको भवति।

**३.३४ भुव आलोकश्चन्द्रपृष्ठे**

यथा चन्द्रो भूपृष्ठात् प्रकाशवान् दृश्यते, तथैव भूश्चन्द्रपृष्ठाद् दृश्यते। परन्तु कला व्यत्यासेन भवन्ति। यदा अस्माकं चन्द्रस्य पूर्णाः कलाः, तदा चन्द्रवासिनां भुवो हीनाः कलाः,

यदास्माकं चन्द्रस्य हीनाः कलाः, तदा तेषां भुवः पूर्णाः कलाः। एवमेव यदा चन्द्रस्य इनान्तरम् 'अ'-मितम्, तदा भुव इनान्तरं ( १८०-अ ) मितं भविष्यति।

भुव आलोकः शुक्लपक्षस्य द्वितीयाचन्द्रे तृतीयाचन्द्रे वा सरलतया दर्शनीयतामायाति। शुक्लपक्षस्य द्वितीयायां तृतीयायां वा चन्द्रस्य न केवलं प्रकाशितशृङ्गमवलोक्यते, सूर्यकिरणैरप्रकाशितभागा अपि ( द्रष्टव्यमत्र फोटोचित्रम् ) अवलोक्यन्ते। ईषत्प्रकाशितभागेषु न सम्भावना सूर्यरश्मिपातस्य, सूर्यपराङ्मुखत्वात्। अतस्ते भुव आलोकेनैव आलोकिताः सन्ति।


भुव आलोकः [ यरकिज वेधशाला ]

भुव आलोकश्चन्द्रालोकस्य षष्टिगुणितः। अत्र प्रकाशबाहुल्यस्य कारणद्वयम्—

( १ ) चन्द्रदृष्टभूबिम्बव्यासो भूदृष्टचन्द्रबिम्बव्यासस्य चतुर्गुणितः। यतः परावर्तिता लोककिरणाः क्षेत्रानुपातिनः, भूबिम्बक्षेत्रञ्च चन्द्रबिम्बक्षेत्रस्य १३.४ गुणितम्, अत एव भूतलात् चन्द्रतलापेक्षया १३.४ गुणिता आलोककिरणाः परावर्तन्ते।

( २ ) किरणानां परावर्तिनी शक्तिः परिक्षेपणशक्तिरुच्यते। कल्प्यते यत् कस्मिंश्चित् पदार्थे १००-संख्याकाः सूर्यकिरणाः पतन्ति, तेषां नैकाश्च किरणा वस्तुपृष्ठे नष्टा भवन्ति, कल्प्यते यत् केवलं पञ्चदशसंख्याकाः किरणाश्च परावर्तन्ते, तदा तस्य वस्तुनः परिक्षेपणशक्तिः '१५ ( १५/१०० ) मितास्ति। निरीक्षणेन प्राप्तं यत् चन्द्रस्य परिक्षेपणशक्तिः '०७-मिता, परन्तु भुवः परिक्षेपणशक्तिः '४२ मिता; एवं चान्द्रपरिक्षेपणशक्त्यपेक्षया भुवः परिक्षेपणशक्तिरत्यधिका।

*एवं भूव्यासदैर्घ्यात् परिक्षेपणशक्तेराधिक्याच्च भुव आलोकश्चन्द्रालोकस्य षष्टिगुणितः।*

## ३.४ चन्द्रस्य अक्षभ्रमणम्

वयं चन्द्रस्य सदैव एकमेव रूपं पश्यामः, अत एव तस्य अक्षभ्रमणकालो भुव परितो भ्रमणकालसमः। एकस्मात् प्रयोगात् तर्कोऽयं स्पष्टीभविष्यति।

एकस्यां कक्षाया मध्ये एको दीपः स्थाप्यताम्, एको जनश्च एवं परिक्रमणं कुर्यात् यत्

परिक्रमणे सदैव स दीपाभिमुखतां भजेत् । स ज्ञास्यत्यनुभवति यद् यदि स परिक्रमणजनित कोणमितमक्षभ्रमणं न करोति, स दीपाभिमुखतां त्यजति । अस्य गणितीयोपपत्तिरपि वर्तते । चित्रे ख-स्थानस्य कोणीयान्तरं θ अस्ति । यदि जनः किञ्चिदप्यक्षभ्रमणं न करोति तर्हि तस्य मुखं 'थ' प्रति भवति (खथ रेखा कदी रेखायाः समानान्तरा) । यदि स वस्तुतो दीपं द्रष्टुमिच्छति तर्हि स थखदी सममतस्यमक्षभ्रमणं कुर्यात् । यतः खथ-रेखा कदी रेखा समानान्तरा, कदीख कोण = थखदी-कोण = θ, अर्थात् परिक्रमणकृतकोणसमोऽक्षभ्रमणकृतकोणोऽस्ति । अत एव तस्य परिक्रमणकालसमोऽक्षभ्रमणकालः ।



अक्षभ्रमणम्

## ३.४१ दृश्यताभेदाः

यद्यपि पूर्वमुक्तं यद् वयं सर्वदा चन्द्रस्यैकमेव रूपं पश्यामः, तथापि सूक्ष्मपरीक्षणं दर्शयति यद् यदा कदा बिम्बपर्यन्तभागेऽल्पमात्रया नूतनाः प्रदेशा दृश्यन्ते, परिचिताश्च लुप्यन्ते । नूतनप्रदेशदर्शनमिदं दृश्यताभेद उच्यते । दृश्यताभेदाश्च दोलनात्मकास्त्रिमूलकाश्चाधो दीयन्ते—

(१) अक्षांशविषयकदृश्यताभेदः

चन्द्रपरिक्रमणकक्षातलात् चान्द्रविषुवरेखायाः प्रनतता ६.५ अंशमिता, अत एव एकस्मिन् पक्षे उत्तरध्रुवात् परवर्तिनो भागा दृश्यन्ते, द्वितीयपक्षे च दक्षिणध्रुवात् परवर्तिनो



अक्षांशविषयकदृश्यताभेदः

भागा दृश्यन्ते । (चित्रमुपरि दत्तं द्रष्टव्यम्) च१ स्थित्यां चन्द्रस्य उत्तरध्रुवपरवर्तिभागाः, च२-स्थित्यां दक्षिणध्रुवपरवर्तिभागाश्च दृश्यन्ते ।

(२) रेखांशविषयकदृश्यताभेदः

चन्द्रस्य परिक्रमणमार्गो दीर्घवृत्ताकारः, अत एव चन्द्रस्य परिक्रमणवेगो नीचे शैघ्र्यम्, उच्चैश्च मान्द्यं भजते, परन्त्वक्षभ्रमणवेगः सदैव समो तिष्ठते । एवं काले कालेऽक्षभ्रमणवेग

परिक्रमणयोरन्तरं दृश्यते । अनेनान्तरेण काले काले चन्द्रस्य पूर्वतमबिम्बकोटेः परवर्तिनः ७$\frac{३}{४}$




ऐरवांशनिबन्धदृश्यताभेदः

अंशव्यापिभागाः, काले काले पश्चतमबिम्बकोटेः परवर्तिनः ७$\frac{३}{४}$ अंशव्यापिभागा दृश्यन्ते ।

( २ ) दैनिकदृश्यताभेदः

भूपृष्ठस्था वयं दिवसस्य रात्रेर्वा विभिन्नकाले विभिन्नदिशया चन्द्रं पश्यामः । चन्द्रोदये पश्चिमबिम्बकोटेः कश्चैकमितव्यापिपरवर्तिभागाः, चन्द्रास्ते पूर्वकोटेः कश्चैकमितव्यापिपरवर्तिभागाश्च दृश्यन्ते । एवं वयं चन्द्रबिम्बस्य५९% भागान् पश्यामः ।




दैनिकदृश्यताभेदः

## ३.५ चन्द्रतले भौतिकस्थितयः

### ३.५१ वायुमण्डलम्

चन्द्रतले वायुमण्डलं न विद्यत इति निश्चितमेव, तथाप्यत्र कतिपयानि प्रमाणानि दीयन्ते–

(१) चन्द्रे सान्ध्यप्रकाशो न दृश्यते। दिवसावसानेऽकस्मादेव रात्रिरागच्छति। सान्ध्यप्रकाशो वायुमण्डलभावादेव भवतीति § १.५४ तमे व्याख्यातम्, अत एव सान्ध्यप्रकाशाभावो वायुमण्डलाभावं सूचयति।

(२) यदा चन्द्रो नक्षत्राण्याच्छादयति तदा नक्षत्राणि झटिति लुप्तानि भवन्ति (द्रष्टव्य फोटोचित्र § ४.५२-तमे वृत्तम्)। वायुमण्डलभावे तेषां प्रथमं धूमिलत्वम्, ततो रक्तवर्णत्वम्, ततश्शनैः शनैर्लोपो भवेत्।

(३) दूरदर्शकेन चन्द्रपृष्ठचिह्नानि स्पष्टतया दृश्यन्ते। यदि चान्द्रवायुमण्डलस्य घनत्वं पार्थिववायुमण्डलघनत्वस्य $\frac{१}{१००००}$ तममपि भवेत्, चन्द्रपृष्ठदर्शने काचिदस्पष्टतावश्यमागच्छेदिति भौतिकशास्त्रिणां मतम्।

(४) चन्द्रस्य परिक्षेपणशक्तिरत्यल्पा, केवलं ·०७ मिता। वायुमण्डलयुतग्रहाणां परिक्षेपणशक्तिरधिका भवति। शुक्रस्य तु परिक्षेपणशक्तिः ·७ मिता लभ्यते।

(५) चन्द्रपृष्ठे गुरुत्वाकर्षणशक्तिर्भुवि गुरुत्वाकर्षणशक्तेः ·१६५ भागमिता। गुरुत्वाकर्षणशक्तिरियमतिदुर्बला, अत एव वायुमण्डलोपस्थितिश्चन्द्रेऽसम्भवा।

**'विमोचनवेग'—वायुमण्डलरक्षणम्**

चन्द्रे प्रारम्भे नूनं वायुमण्डलमासीत्, परन्तु चन्द्रवायवः शनैः शनैर्महाकाशे विलीना अभवन्। वायुषु असंख्याका व्यूहाणवः सन्ति, ते इतस्ततो भ्रमन्ति। ते भ्रमन्तो महाकाशं गच्छन्ति यदि ग्रहस्तेषां व्यूहाणूनां गुरुत्वाकर्षणरज्जुभिर्बन्धनेऽसमर्थः। पृथिव्या गुरुत्वाकर्षणशक्तिः पर्याप्ता, परन्तु केचिद् वायव्यव्यूहाणवो बहिर्गन्तुं समर्था भवन्ति। चन्द्रस्य गुरुत्वाकर्षणं पार्थिवगुरुत्वाकर्षणस्य $\frac{१६५}{१०००}$ मितम्, अत एव तत्र वायूनां व्यूहाणवः सरलतया महाकाशे विलीयन्ते।

वायुमण्डलरक्षणे ग्रहस्य उपग्रहस्य वा सामर्थ्यं तत्पृष्ठस्थविमोचनवेगापेक्षि। भुवि विमोचनवेगः सप्तक्रोशार्धानि प्रतिसेकिण्डमस्ति, अर्थात् यदि किमपि वस्त्वस्माद् विमोचनवेगात् प्रक्षिप्यते तर्हि गुरुत्वाकर्षणरज्जुं भित्त्वा तद् महाकाशं गच्छति[1]। चन्द्रपृष्ठे विमोचनवेगः १½ क्रोशार्धानि प्रतिसेकिण्डमस्ति, अत एव तत्र वायूनां व्यूहाणवो झटिति महाकाशे व्यलीयन्त।

---

१ यदि प्रक्षेपवेगः प्रतिसेकिण्डं पञ्चक्रोशार्धाल्पस्तर्हि वस्तु पृथिव्यां पुनरागच्छति, यदि प्रक्षेपवेगः प्रतिसेकिण्डं पञ्चक्रोशार्धाधिकः परन्तु प्रतिसेकिण्डं सप्तक्रोशार्धन्यूनस्तर्हि वस्तु चन्द्रवद् वृत्ते दीर्घवृत्ते वा भुवं परितो भ्रमणं करिष्यति (अनेनैव सिद्धान्तेन कृत्रिमचन्द्रा आकाशमियर्तुं मोच्यन्ते)। यदि प्रक्षेपवेगः सप्तक्रोशार्धमितस्तर्हि वस्तु परवलये, यदि सप्तक्रोशार्धाधिकस्तर्हि अतिपरवलये महाकाशे उत्पतति। सौरमण्डलाद् बहिर्गमनाय प्रक्षेपवेगोऽवश्यं ३० क्रोशार्धाधिको भवेत्।

वायुमण्डलस्य वायुव्यूहाणूनां महाकाशे विलीनत्वं व्यूहाणूनां वेग- / विमोचनवेग- निष्पत्तिमपेक्षते। [ प्रतिसेकिण्डं हाइड्रोजनस्य वेगः १·१४ क्रोशार्धानि, नाइट्रोजनस्य ०·३० क्रोशार्धानि, आक्सीजनस्य ०·२८ क्रोशार्धभागः, कार्बनडाई-आक्साइडस्य च ०.२४ क्रोशार्धभागोऽस्ति ]। विज्ञानविदां मतमिदं यद् यदि विमोचनवेगस्त्रिगुणितस्तर्हि कतिपयैः सप्ताहैः, यदि विमोचनवेगश्चतुर्गुणितस्तर्हि कतिपयवर्षसहस्रैः, यदि विमोचनवेगः पञ्चगुणितस्तर्हि कतिपयवर्षकोटिभिर्वायुमण्डलस्य वायवो महाकाशे विलीना भविष्यन्ति।

**३.५२ जलाभावः**

आश्चर्यं खलु महद् यद् जलधिजश्चन्द्रो जलविहीनोऽस्ति। चन्द्रपृष्ठे न कदापि मेघा दृष्टाः, न च जलधाराजनितविलयनं शिलानाम्। यदि कदाचिद् जलं प्रारम्भे स्यात्, तदपयमेव वायुमण्डलाभावे बाष्परूपेण निर्गतं स्यात्।

**३.५३ तापक्रमः**

चन्द्रपृष्ठे मध्याह्ने १००° सेन्टीग्रेडमितः, सूर्यास्ते ५०° सेन्टीग्रेडमितः, निशीथे च–१५०° सेन्टीग्रेडमितस्तापक्रमो विद्यते। चन्द्रग्रहणावसरे होरैककाले १५०-अंशानामन्तरं दृश्यते तापक्रमे।

## ३.६ चन्द्रपृष्ठचिह्नानि

चन्द्रपृष्ठवर्तिनतोन्नतस्थानि साधारणदूरदर्शकयन्त्रेणापि प्रेक्षणीयतां भजन्ते। सर्वा-



चन्द्रस्य छायाचित्रम्

नुकूलप्रेक्षणीयता कृष्णपक्षस्य तृतीयायां शुक्लपक्षस्य द्वादश्यां च भवति। चन्द्रस्य अर्धभाग एव दृश्यत इति अनुच्छेदे ३.३२ तमे स्पष्टीकृतम्। अस्मिन् चन्द्रार्धे दश पर्वतश्रेण्यः, अनेकान्येकाकीनि पर्वतशृङ्गाणि, सहस्राधिकगर्ताः, त्रिंशत्सहस्राधिकानि ज्वालागिरिमुखानि च विद्यन्ते।




चन्द्रस्य मानचित्रम्

कतिपयानि समुद्रनाम्ना प्रसिद्धानि श्यामल समतल स्थानान्यपि दृश्यन्ते। एषां सर्वेषां नामानि ज्योतिर्विद्भिर्दत्तानि, नैकानि च चन्द्रस्य मानचित्राणि निर्मितानि सन्ति, येषां साहाय्येन चान्द्र-स्थलनामज्ञानं तन्नामाभिज्ञानश्चातिसरलम्। उपरि दत्तमेकं मानचित्रं रूपरेखाचित्रं द्रष्टव्यम्।

### ३.६१ चान्द्रसमुद्राः

चन्द्रपृष्ठे कतिपयानि श्यामलानि चिह्नानि दृश्यन्ते। एषां विविधवर्णनानि सन्ति। एतानि 'लाञ्छनानि' शशकरूपेण दृष्टानि कैश्चित्, मनुष्यरूपेणापरैः, पुस्तकपाठिनीरूपेण चान्यैः। ज्योतिर्विद्भिर्मध्ययुगे एतानि समुद्रा इत्युक्तानि, अधुनापि समुद्रनाम्ना प्रसिद्धानि, यद्यपि सर्वे ज्योतिर्विदस्तेषां जलविहीनत्वं जानन्ति। एते समुद्रास्चतुर्दशसंख्याकाः सन्ति। प्रायेण ते गोलाकाराः, येषां चैषामनियताकारा। (द्रष्टव्यं फोटोचित्रमग्रो दत्तम्, यत्र 'इम्बियम'-सागरः, 'प्रोसिलारम'-महासागरश्च दृश्यते)।

समुद्राख्यप्रदेशा वस्तुतो ज्वालागिरिमुखशून्या विशाला समतलभागाश्च सन्ति । समतलत्वात्ते नतोन्नतस्थलापेक्षया श्यामला दृश्यन्ते । पुरातने काले अत्र खलु द्रुता ज्वालामुखीधातव आसन्, ते च समयानन्तरं कठोरघनका भूत्वा समतला जलविहीनप्रदेशा अभवन् ।



चन्द्र —'स्टेडो' 'कोपरनिकस'-अरेननाईन्सा ' [ माउण्ट विल्सन वेधशाला ]

३.६२ चान्द्रज्वालागिरिमुखानि

त्रिंशत्सहस्राधिकानि वृत्ताकाराणि ज्वालागिरिमुखानि विभिन्नपरिमाणकानि । एषां महत्तमस्य व्यासः १४४ क्रोशार्धानि, लघुतमस्य व्यासश्च केवलं ३० हस्तमितः । वृत्ताकारपरिधिषु

उच्चगिरिशृङ्गाः सन्ति, उच्चतमपरिधिपर्वतस्य उच्छ्रयः २०,००० फिटाधिकोऽस्ति। ज्वालागिरि-मुखानां तत्र क्वचित् परिधिमध्यवर्तीनि उद्गतानि शिखराणि च दृश्यते।



चन्द्रस्य दक्षिणभागः [ माउण्ट विल्सन वेधशाला ]

एषां मुखानां विषये न वर्तते विदुषामैकमत्यम्। केषाञ्चिन्मतेऽत्र ज्वालामुखानि आसन्। परन्तु न दृश्यतेऽधुना कोऽपि ज्वालामुखी, पुराऽऽसीदित्यपि संशयविषयः। पार्थिवस्य विशालतमज्वालागिरिमुखस्य व्यासः सप्तक्रोशार्धोऽस्ति, परन्तु चान्द्रस्य व्यासः १४४ क्रोशार्धानि। कथं चन्द्रे ईदृशानि विशालानि ज्वालागिरिमुखान्यभवन्निति कठिना समस्या। अपरेषां मतेनैता-न्युल्कापातजनितानि। परन्त्वेतन्मतस्वीकारे दृश्यन्ते नैका आपत्तयः। नूनमुल्कापातेनेदृशानि



चन्द्रे 'एपेनाइन' पर्वत [ लिक वेधशाला ]

### ३.६४ गर्ता घृणयश्च

भूकम्पजनितपार्थिवगर्ता इव चन्द्रमसश्शातगहना उपत्यकारूपा दम्भा दीर्घागाध सरलगर्ता अवलोक्यन्ते।

कृष्णरेखाभ्यो भिन्ना, एता गर्तानां छाया दृश्यते, आभासः न चापि छाया। कुत्र कतिपयज्वालागिरिमुखेभ्यो निःसृता सहस्राधिकक्रोशपर्यन्तमबाधगत्या पर्वते समतले च गच्छन्त्य, ५-१० क्रोशार्धविस्तीर्णा पूर्णचन्द्रे प्रकाशमाना सरल रेखाः सन्ति। फोटोचित्रे § ३.६१ तमे दृश्येऽतिप्रसिद्धा 'कोपरनिकस' निःसृता: प्रदर्श्यन्ते।

## ३.७ खगोले चन्द्रस्य मार्गः

### ३.७१ राहुकेतू

खगोले चन्द्रस्य गतिसंबन्धी भूमिकायां माप्यते। येन प्रतिदिन नक्षत्राणां मध्ये

चन्द्रस्य स्थितयोऽङ्क्यन्ते । अङ्किताः स्थितय एकं महद्वृत्तं कल्पयन्ति, यस्य क्रान्तिवृत्तात् नमनता पञ्चांशमिता । इदं महद् वृत्तं चन्द्रस्य कक्षावृत्तमुच्यते । यत्रेदं कक्षावृत्तं क्रान्तिवृत्तमुल्लङ्घयति, तत्रस्थौ द्वौ बिन्दू राहुकेतू कथ्येते । चन्द्र उत्तरं गच्छन् यत्र क्रान्तिवृत्तमुल्लङ्घयति तत् स्थानं राहुनाम्ना प्रसिद्धम्, यत्र च दक्षिणं गच्छन् उल्लङ्घयति तत् स्थानं केतुनाम्ना प्रसिद्धम् । चन्द्रो राहुस्थानमुल्लङ्घ्य पुनस्तत् स्थानं २७ दि ५ घं ५ मि ३६ से (२७.२१२२२२) दिनान्तरे आगच्छति ।




§ ७२ चन्द्रगतिस्थिराङ्कानां चलत्वम्

चन्द्रस्य गतिः खगोले स्थितिर्वा अतिसूक्ष्मेण निर्धार्यते, यतश्चन्द्रगतिस्थिराङ्काः सर्वे चलाः । ग्रहाणां गतिनियमनं सरलं यद् आकर्षणबद्धगोलद्वयस्य गतिः 'केप्लर'नियमैर्बद्धा (द्रष्टव्य § ६.८२), परन्तु आकर्षणबद्धगोलत्रयस्य गतिनियमनमतिदुष्करम् । अत्र गोलत्रये सन्ति—सूर्यः, भूः, चन्द्रश्च । अस्मिन् गोलत्रये चन्द्रः सर्वाधिकदुर्बलः । तस्य तिस्रो गतयः —

(१) सूर्यं परितो वार्षिकपरिभ्रमणम् । (इदं भूगोलेन विक्षिप्यते)

(२) भूचन्द्रमध्यकेन्द्रमभितो मासिकपरिक्रमणम् । (इदं सूर्येण विक्षिप्यते)

(३) भुवं परितो मासिकपरिक्रमणम् ।

अत एव चन्द्रगतेः सर्वे स्थिराङ्काश्चला दृश्यन्ते ।

(क) संपातपरिवर्तनम्

उपर्युक्तं यत् चन्द्रकक्षावृत्तक्रान्तिवृत्तसंपातौ राहुकेतुनामकौ । एतौ राहुकेतू न स्थिरौ । तयोर्वक्रगतिः पुरातनकालाद् विदितासीत्, यतोऽस्या वक्रगतेर्ज्ञानं वेधेन सुसरलमासीत् । चन्द्रो यथा क्रान्तिवृत्तं वृषराशावुल्लङ्घयन् दृश्यते, अष्टादशमासानन्तरं मेषराशावुल्लङ्घयन् दृश्यते, अत एव राहुः केतुर्वा अष्टादशमासैरेकं राशिं पूर्वं गच्छति ।

राहुः केतुर्वा पुनस्तमेव राशिं ६७९३५ दिनानन्तरे (१८⅗ वर्षान्तरे) आगच्छति, अर्थात् तयोर्भगणकालः १८⅗ वर्षमितः ।

(ख) संपातपरिवर्तनगतेः (परिवर्तनम्) चलनगतिः

राहोर्भगणकालः १८⅗ वर्षमितः, परन्त्वस्य वक्रगतिः सर्वदा न समा । यदि सूर्यो राहोस्त्रिमासान्तरे युतौ वा, तर्हि राहोर्वक्रगतिर्मध्यमा । यदि सूर्यस्य राहोः कोणान्तरं ४० अंशमितम्, तर्हि वक्रगतिरतिमन्दा अतिशीघ्रा वा दृश्यते । वक्रगतेर्मध्यमानादाधिक्यं न्यूनत्वं वा १°४०′ मितान्तरिकं न भवति ।

(ग) कक्षाणमनस्य परिवर्तनम्

कक्षावृत्तेन क्रान्तिवृत्ताद् यो कोण कल्प्यते (अर्थात् कक्षाणमनम्) सोऽपि न स्थिर। कोणोऽयं कदाचिद् वर्धते, कदाचिच्च हीयते। कक्षाणमनस्य मध्यममान ५°८′ ४३″ अस्ति। सर्वाधिकमान ५° २०′ अंशादिकम्, सर्वाल्पमानञ्च ४°५७′ अंशादिकम्। अस्य आवृत्तिकाल १७३ दिनमित।

(घ) उत्केन्द्रताया परिवर्तनम्

कक्षावृत्तस्य उत्केन्द्रता ०.०५४९ मितास्ति, परन्त्वस्यामपि काले काले परिवर्तनानि दृश्यन्ते। कदाचिदियं वर्धते, कदाचिच्च हीयते। हानिर्वृद्धिश्च कदापि ०.०११७ मिता दधिका न।

(ङ) नीचबिन्दो परिवर्तनम्

चन्द्रकक्षावृत्तस्य नीचबिन्दु प्रतिदिन ४०१ विकलामितया अङ्कगत्या चलति। नक्षत्राणा भूमिकायामय ३२३२ $^{दि}$ ११ $^{हो}$ १४ $^{मि}$ समयानन्तर (८ $^{वर्ष}$ ३११ $^{दि}$ समयानन्तर) पुन पूर्वस्थानमागच्छति। मेषसम्पातस्य भूमिकायामय ३२३१ $^{दि}$ ८ $^{हो}$ ३१ $^{दि}$ काले परिक्रमण करोति।

(च) नीचबिन्दुपरिवर्तनस्य परिवर्तनम् (असमगति)

नीचबिन्दोरुपरि कथित परिवर्तनमपि समगत्या न भवति। असमगत्या परिभ्रमणशीलत्वाद् भोगांशेषु सर्वाधिकमन्तर १२°२० अंशादिक लभ्यते।

एव चन्द्रस्य गते स्थिराङ्का सर्वे चला।

§ ७३ चन्द्रस्य स्थितिनिर्णय

प्रथम मध्यमगत्या परिभ्रमतो मध्यमचन्द्रस्य स्थितिर्निश्चीयते, ततस्तत्र निम्ना संस्कारा क्रियन्ते—

(१) मन्दफलसंस्कार (Fquation of centre)

चन्द्रस्य दीर्घवृत्ताकारकक्षाया उत्केन्द्रता पर्याप्ता ०.०५४९ मितास्ति, अत एव केप्लर नियमानुसार कक्षावृत्ते भ्रमतश्चन्द्रस्य स्थितिर्मध्यमगत्या परिभ्रमतो मध्यमचन्द्रस्य स्थिते नितान्त भिन्ना। एतस्मात्सोऽयं बाल्यमीकरणसंस्कारद् दृश्यते।

उच्चे नीचेऽपि मध्यमचन्द्र स्पष्टचन्द्रश्च युगपद् दृश्येते। नीचस्थिते तत्पश्चादनन्तर स्पष्टचन्द्रो मध्यमचन्द्रात् ६°१७′ अंशादिकेन अग्रे भवति, उच्चस्थितौ मध्यमचन्द्रो विस्पष्टचन्द्रादभिन्नो भवति। तत्पश्चाद् मध्यमचन्द्र स्पष्टचन्द्रस्याग्रे चलति। नीचस्थानस्य एतावद्दूरे स स्पष्टचन्द्रस्य ६°१७′ अंशादिकेन अग्रे दृश्यते। नीचस्थाने च द्वावभिन्नौ भवत।

अस्य समीकरणं निम्नम्—

$$\text{चन्द्रमन्दफलं} = \frac{e \text{ ज्या } nt}{२} [ ४ - ५e \text{ कोज्या } nt ] + \frac{१३}{१२} e^2 \text{ ज्या } २\, nt$$

( २ ) च्युतिफलम् ( Evection )

मन्दफले काले काले परिवर्तनानि दृश्यन्ते। कदाचिदिदं गणितागतमानादधिकम्, कदाचिच्चाल्पम्। चन्द्रस्य मध्यममन्दफलं ६°१७′ मितमस्ति। मध्यममन्दफले च्युतिफलं संस्कृत्य विकृत्य वा मध्यस्पष्टचन्द्रयोरन्तरं लभ्यते। च्युतिफलं कदाचिदपि ५°१′ अंशादिकादल्पम्, ७°३१′ अंशादिकादधिकं न भवति। अस्य मानमपेक्ष्यते—

( क ) नीचात् चन्द्रस्य दूरत्वम्
( ख ) भुवः सूर्याद् दूरत्वम्
( ग ) उत्केन्द्रितायाः परिवर्तनम्
( घ ) नीचभोगांशाना परिवर्तनम्।

च्युतिफलस्य महत्तममानं ७४′ कला अस्ति। अस्य समीकरणं निम्नम्—

$$\text{च्युतिफलम्} = ७४' \text{ ज्या } ( २\, E - O )$$

[ अत्र E = इनान्तरम् = मध्यमचन्द्रस्य O नीचात् कोणीयान्तरम्। ]

च्युतिफलस्य आवृत्तिकालः ३१.८१ दिनानि।

( ३ ) वार्षिकसमीकरणम् ( Annual Equation )

भूः ( भुवा सह चन्द्रः ) सूर्याद् नानाकालेषु दूरत्वे वर्तते, अत एव सूर्यश्चन्द्रं नाना कालेषु नानामानया आकर्षति। भूनीचस्थाने भुवा सह चन्द्रः सूर्यस्य समीपतमः, अत एव तदा सूर्यस्तं सर्वाधिकमानया आकर्षति। भूच्चस्थाने भुवा सह चन्द्रः सूर्याद् दूरतमः, अत एव तदा सूर्यस्तं सर्वाल्पमानया आकर्षति। अत एव भूनीचसमीपवर्तिष्णमासेषु कक्षावृत्ते चन्द्रस्य गतिर्मध्यमगतेरल्पा, भूच्चसमीपवर्तिष्णमासेषु कक्षावृत्ते चन्द्रस्य गतिर्मध्यमगतेरधिका दृश्यते। समीकरणमेतम्—

$$\text{चन्द्रस्य स्पष्टभोगांशाः} = \text{मध्यमभोगांशाः} - ( ११'१६'' ) \text{ ज्या } \theta$$

[ अत्र $\theta$ = भूनीचात् सूर्यस्य कोणीयान्तरम्। ]

एवं वार्षिकसमीकरणजनितनिसारो भूनीचे भूच्चे च शून्यमितो भवति।

( ४ ) 'वेरियशन' ( Variation ) पाक्षिकसंस्कारः

सूर्यो भुवं चन्द्रं च आकर्षति। आकर्षणञ्च दूरत्वापेक्षि। अत एव नानाकालेषु ॥

---

१. e=उत्केन्द्रिता

nt=चन्द्रस्य मध्यमकेन्द्रम् ( चन्द्रोच्चं मध्यमचन्द्रम् )

नानामात्रया चन्द्रमाकर्षति। अमावस्यायां चन्द्रो भुवोऽपेक्षया सूर्यस्य समीपतरः। अत एव तदा सूर्यश्चन्द्रमधिकमाकर्षति, भूचन्द्रयोरन्तरञ्च वर्धते। पूर्णिमायां भूः चन्द्रापेक्षया सूर्यस्य समीपतरा वर्तते। अत एव तदा सूर्यो भुवमधिकमाकर्षति, भूचन्द्रयोरन्तरञ्च वर्धते। अष्टम्याञ्च सूर्यात् चन्द्रस्य भुवश्च दूरत्वं समम्। एवं शुक्लपक्षस्य पूर्वार्धे गतिर्मन्दतां भजते, उत्तरार्धे च त्वरतां भजते, कृष्णपक्षस्य पूर्वार्धे मन्दतां लभते, उत्तरार्धे च त्वरतां लभते। विकारोऽयं ३९′ ज्या २ E–तुल्यः (अत्र E=इनान्तरम्)।

पाक्षिकसंस्कार

( ५ ) बीजसंस्कारः

उपरि चत्वारो मुख्यसंस्कारा दत्ताः, परन्तु तैः संस्कृतायां स्थित्यामपि बीजसंस्कार प्रयुज्यते।

एवं चन्द्रस्थितिगणना अतिदुष्करा, 'हैन्सन' 'ब्राउन' महोदयाभ्यां सारिणीभिरेव क्रियते।[1]

## ३·८ आप्लावाः

### ३.८१ कारणम्

समुद्रे प्रतिदिनं द्विवारमाप्लावो दृश्यते। आप्लावानां हेतुश्चन्द्रकिरणा इतीति प्राचीनकालात् प्रसिद्धिः। परं सर्वप्रथमं न्यूटनमहोदयेन स्वगुरुत्वाकर्षणसिद्धान्तसमर्थनार्थमाप्लावानां विशेषाध्ययनं कृतम्। आप्लावव्याख्याया सुबोधकरणाय कल्प्यते यत् पृथिवी पूर्णतया गोलाकारा,

आप्लावानां हेतुः चन्द्राकर्षणमेव

1. द्रष्टव्य 'चन्द्रगणना' पुस्तकं हिन्दीभाषायां डा० गोरखप्रसादकृतम्।

तस्य उपरि गत्वा समुद्राश्च यान्ति। चन्द्र क भागस्य समुद्रजल भागस्य भूपृष्ठापेक्षया अधिकमार्षति, ख भागस्य भूपृष्ठस्य ख भागस्य समुद्रजलापेक्षया अधिकमाकर्षति। अनेन समुद्रा दीर्घवृत्ताकारा भवन्ति। दीर्घवृत्ताकारत्वात् समुद्रे आप्लावा दृश्यन्ते। पुनश्च च स्थाने यदि आप्लाव उच्चोऽस्ति, तर्हि प्रायेण द्वादशाहोरानन्तर च स्थान (चित्रे च स्थान) प्राप्स्यति, तत्र च द्वितीयमाप्लाव लप्स्यते। आप्लावोऽयं पूर्वाप्लावाद् निम्नो भविष्यति।

### ३.८२ अत्युच्चाप्लावा, उच्चाप्लावाश्च

यथा चन्द्राकर्षणेन आप्लावा भवन्ति तथैव सूर्याकर्षणेन। सूर्यस्य दूरत्व चन्द्रदूरत्वापेक्षया अतिदीर्घम्, अत एव सूर्यस्याकर्षण चन्द्राकर्षणापेक्षयाऽत्यल्पम्, केवल चन्द्राकर्षणस्य [illegible] अंश मितम्। पूर्णिमायाममावस्यायाञ्च सूर्यचन्द्रावेकस्यामेव दिशाया तिष्ठत, अत एव द्वयोराकर्षणयो योगश्चन्द्राकर्षणस्य ([illegible] =)[illegible] गुणितो भवति। अष्टम्या तु सूर्यचन्द्रयो कोणीयान्तर



चतुर्थचित्रदर्शिताकारवत्, अन्ततः पिण्डः पृथिव्याः पृथगभवत्। तदा चन्द्रो भुवः समीपं




चन्द्रोत्पत्तिः



(१/१०००० क्रोशार्धदूरत्वे) आसीत्, तयोश्चाक्षभ्रमणकालः ५-होरामित आसीत्।

## विशेषद्रष्टव्यानि

चन्द्रकलानां हानिवृद्धी सूर्याधीने इति[1] निश्चितं मतमासीत् पूर्वाचार्याणाम्। तेषां ग्रन्थेषु कलामानं चन्द्रोदयास्तकालानयनं शृङ्गोन्नतिमानञ्च विस्तरेण शृङ्गोन्नत्यधिकारे गण्यते। यथा कलामानमेव गण्यते—

सूर्योनशीतगोर्लिप्ताः शुक्लं नवशतोद्धृताः।
चन्द्रबिम्बाङ्गुलाभ्यस्तं हृतं द्वादशभिः स्फुटम्॥ (सूर्यसिद्धान्ते, १०·९)

चन्द्रग्रहणाध्यायेषु चन्द्रबिम्बव्यासयोजनानि गण्यन्ते। राहुकेतू द्वयोः क्रान्तिवृत्त-चन्द्रकक्षावृत्तसंपातयोर्विन्दू इति तेषां ज्ञानमासीत्। श्रीपतिकृतसिद्धान्तशेखरे ग्रहणदोषाध्याये राहुनिराकरणं (राहुः कोऽपि राक्षसो नेति) क्रियते। तयोर्वक्रगतिरपि प्रसिद्धासीत्।

चन्द्रस्थितिनिर्णयार्थमधुना ४० संस्काराः क्रियन्ते। एषां मुख्याः पञ्च एव। एषां मन्दफलसंस्कारः प्राचीनज्योतिर्विदां सुविदित आसीत्। मुञ्जालेन स्वीकृतौ द्वावन्यौ संस्कारौ, यौ आधुनिकानां च्युतिसंस्कारपाक्षिकसंस्कारसमौ दृश्येते। नित्यानन्देनापि पाक्षिकसंस्कार उररीकृत आसीत्। चन्द्रशेखरसामन्तेनापि स्वतन्त्ररूपेण वेधैस्त्रयाणां संस्काराणामावश्यकता दृष्टा। ते आधुनिकानां 'च्युतिसंस्कार'-'वार्षिकसमीकरणसंस्कार'-'पाक्षिकसंस्कारे'भ्योऽभिन्ना एव॥

---

1. भास्कराचार्येणोक्तम्—

तरणिकिरणसङ्गादेष पीयूषपिण्डो दिनकरदिशि चन्द्रश्चन्द्रिकाभिश्चकास्ति।
तदितरदिशि बालाकुन्तलश्यामलश्रीर्घट इव निजमूर्तिच्छाययैवातपस्थः॥

# चतुर्थोऽध्यायः

[ शशिदिवाकरयोर्ग्रहपीडनं प्राकृतघटनानां सुतरामाश्चर्यविषयः । कथमेतदित्यत्र द्रष्टव्यम् ]

## ग्रहणम् आच्छादनं संक्रमणञ्च

खगोलीयपिण्डस्य दृश्यत्वे द्वितीयखगोलीयपिण्डकृतव्यवधानं ज्योतिर्विद्भिर्ग्रहणमुच्यते । ग्रहणानि द्विविधानि—प्रथमविधे आच्छादकपिण्डः दर्शक आच्छाद्यपिण्ड मध्ये आपतति, आच्छादकपिण्डस्य मध्यवर्तित्वाद् आच्छाद्यपिण्डस्य दृश्यत्वे पूर्णतया आंशिकरूपेण वा व्याघातो भवति । द्वितीयविधे आच्छादकपिण्डः सूर्य-आच्छाद्यपिण्डमध्ये आपतति । आच्छाद्यपिण्डः खलु दृश्यते, परन्तु व्यवधानरूपाच्छादकपिण्डस्य मध्यवर्तित्वाद् रविकरनिकरा न प्राप्नुवन्त्याच्छाद्यपिण्डतलम्, सूर्यकिरणाभावे च सम्मुखे वर्तमानोऽपि पिण्डोऽप्रकाशितत्वाद् न दृश्यते । प्रथमविधे सूर्यग्रहणं चन्द्रनक्षत्राच्छादनं बुधशुक्रयोः सूर्यसंक्रमणं द्विघनक्षत्रस्य नक्षत्रयोरदृश्यत्वञ्च गण्यन्ते । द्वितीयविधे चन्द्रस्य गुरोरुपग्रहाणाञ्च ग्रहणानि गण्यन्ते ।

### ४.१ ग्रहणाध्ययने प्रयुक्ताः प्रकाशनियमाः

प्रकाशकिरणानामध्ययनं भौतिकशास्त्रे द्विविधम्—रेखागणितीयसिद्धान्तानामध्ययनम्, भौतिकसिद्धान्तानामध्ययनञ्च । रेखागणितीयप्रकाशविज्ञाने प्रकाशकिरणानां गतिः, तत्सम्बन्धिनियमाश्च निर्धार्यन्ते, भौतिकप्रकाशविज्ञाने च प्रकाशस्य भौतिकगुणाः ( भौतिकस्वरूपं वा ) निर्धार्यन्ते । ग्रहणाध्याये रेखागणितीयप्रकाशविज्ञानस्य पदे पदे आवश्यकतानुभूयते, अत एव संक्षेपेण प्रमुखा नियमा अधो दीयन्ते ।

#### ( १ ) प्रकाशकिरणाः सर्वदैव सरलरेखायां गच्छन्ति

प्रकाशकिरणानां गतिः सर्वदा सरलरेखायां भवति । अन्धकारपूर्णकक्षे यदि सूर्यरश्मयः कपाटच्छिद्रेण आयान्ति, तर्हि रवकणैः प्रकाशमार्गः स्पष्टतो दृष्टिगोचरो भवति । मार्गोऽयं सरल



रेखा, अत एव किरणाः सरलरेखायामागच्छन्ति ( प्रयोगोऽयमनिसरल, अवश्यमेव करणीय )।

सूचीछिद्रकैमरायन्त्रेणापि सरलरेखागमनं सिद्ध्यति। सूचीछिद्रकैमरायन्त्रे सर्वदा विपरीतच्छाया दृश्यते।

## (२) छायानिर्मितिः

(अ) किरणानां समूहः किरणपुञ्जः कथ्यते। यदि किरणाः कस्माच्चिद् बिन्दोः




(बिन्दुविशेषात्) अपसार्यमाणा दृश्यन्ते, तर्हि किरणपुञ्जोऽपसृतकिरणपुञ्जः प्रोच्यते। यदि च किरणा बिन्दुविशेषे संसरन्ति, तर्हि संसृतकिरणपुञ्जः प्रोच्यते।

( आ ) दीप्तवस्तुनः प्रत्येकबिन्दोः किरणा अपसरन्ति । यदि दीप्तवस्तु अतिदूरवर्ति, तर्हि किरणाः समानान्तरा भवन्ति ।

( इ ) दीप्तबिन्दुनि सर्वेऽपसृतकिरणपुञ्जे यदि कोऽपि पदार्थो व्यवधानरूपेणायाति, तर्हि तस्य पदार्थस्य छाया अपसृता अभीमिता च भवति ( द्रष्टव्य ७८ पृष्ठस्य द्वितीय चित्रम् ) ।



( ई ) दीप्तवस्तुनि सृतकिरणपुञ्जे यदि कोऽपि पदार्थो व्यवधानरूपेणायाति, तर्हि तस्य पदार्थस्य द्वे छाये भवत —प्रथमा अल्पा घनतरा च, द्वितीया च दीर्घा पर विरलतरा । प्रथमा प्रच्छाया कथ्यते, द्वितीया च उपच्छाया कथ्यते । ( द्रष्टव्यमस्य चित्रम् )

( उ ) दीप्तवस्तुनो लघुतरस्य पदार्थस्य छायापि द्विविधा । प्रच्छाया ससृता सूचीमुखा, उपच्छाया च अपसृता ।

## ( ३ ) सौरमण्डले ग्रहाणामुपग्रहाणाञ्च छाया

सौरमण्डलीयानां सर्वेषां ग्रहाणामुपग्रहाणाञ्च छाया महाकाशे निर्मीयते । सूर्यात्पिण्डस्यात्तेषां ससृता तमोमयी सूचीरूपा छाया भवति, सूच्यग्रभागस्तु सदैव सूर्याद् दूरतर भागे वर्तते । एषा छाया तावद्दूरस्था यावन्न कस्चित्पिण्ड स्वस्थामापतति, आपत्य च स्वतः तमोमय न करोति । यतश्चन्द्रो भूश्च सौरमण्डले पिण्डौ । चन्द्रस्य छाया भुवि पतति, भुवश्च छाया चन्द्रे पतति, सूर्यचन्द्रग्रहणे चैव भवतः ।

## ४.२ चन्द्रग्रहणम्

### ४.२१ कारणम्

भूरेकोऽ ग्रह एव, क्रान्तिवृत्ते च स्व सूर्यं परितो भ्रमति । अत एव तमोमयी सूच्याकारा भूच्छाया (भूभा) सूर्यविपरीतदिशायां सूर्यबिम्बात् षड्भान्तरे सदैव पतति । यदि कदाचित् स्वकक्षायां परिभ्रमन् चन्द्रस्तां भूभासूचीं प्रविशति, चन्द्रबिम्बस्य सूर्यकिरणोपलब्धय भावात्तत्र प्रकाशहीनत्वं जायते, तदेव लोके चन्द्रग्रहणमुच्यते । यतश्चन्द्रग्रहणावसरे चन्द्रो भूभायां प्रविशति, भूभा च सर्वदा सूर्यबिम्बकेन्द्रात् षड्भान्तरे वर्तते, अत एव चन्द्रस्यापि सूर्यबिम्बकेन्द्रात् षड्भान्तरे स्थितिरावश्यकी । ईदृशी षड्भान्तरे स्थितिः पूर्णिमान्त एव भवति, अत एव पौर्णमास्यामेव चन्द्रग्रहणं भवति ।

परन्तु प्रतिपौर्णमास्यन्ते ग्रहणं न दृश्यते। अत्र चन्द्रपरिक्रमणमार्गस्य क्रान्तिवृत्तात् प्रवणता ( चन्द्रकक्षानमनम् ) एव हेतुः। भूभा सर्वदा क्रान्तिवृत्ते भ्रमति, परन्तु चन्द्रो यस्मिन् वृत्ते भ्रमति तस्य क्रान्तिवृत्तात् कोणीयान्तरं ५°९' अंशादिकमितमस्ति। चन्द्रकक्षायां चन्द्रो मासार्धं क्रान्तिवृत्तस्योत्तरेण, मासार्धञ्च क्रान्तिवृत्तं दक्षिणेन भ्रमति, द्विवारञ्च प्रतिमासं क्रान्तिवृत्तं अतिक्रामति। अनुच्छेदे ३.७१ तमे वर्णितं यत् चन्द्रकक्षाक्रान्तिवृत्तयोः सम्पातौ राहुकेतू।



यतश्चन्द्रग्रहणावसरे चन्द्रो भूभाया प्रविशति, भूभा च सर्वदा क्रान्तिवृत्ते वर्तते, अत एव चन्द्रस्यापि क्रान्तिवृत्ते सर्पास्थितिरावश्यकी । चन्द्रस्य क्रान्तिवृत्ते स्थिति राहुकेत्वोर्भवति, अत एव चन्द्रग्रहण तदैव भवति यदा चन्द्रो राहुकेत्वोस्तिष्ठति ।

एव चन्द्रग्रहण तदैव भवति यदा—

( १ ) पूर्णिमा वर्तते,

( २ ) चन्द्रश्च राहुकेत्वो , राहुकेत्वो समीपे वा भवति ।

## ४ २२ चन्द्रग्रहणभेदा॰

यदि चन्द्र स्वकक्षाया परिभ्रमन् भूभासूचीमेव प्रविशति यत्तस्य पूर्ण मण्डल तमोमय्या छायाया वर्तते, तर्हि पूर्ण चन्द्रग्रहण कथ्यते । यदि तु केवलमांशिकरूपेण प्रविशति, अर्थादतिक्रमणे सदैव कश्चिद् भाग प्रकाशवान् एव वर्तते, तर्हि खण्डचन्द्रग्रहण कथ्यते ।

(द्रष्टव्य चित्र ८० तमे पृष्ठे)



## ४ २३ भूभायामतिक्रमणम्

यदा चन्द्रग्रहण भवति तदा चन्द्रो भ्रमन् शनै शनै भूभाया उपच्छायाया प्रविशति । उपच्छायाया चन्द्रालोको धूमिलो भवति, परन्तु क॰ — समीपभागागता किरणा पर्याप्त चन्द्र प्रकाशयन्ति ग्रहणस्य आभासमात्रमपि न विद्यते । ग्रहण तदैव



प्रतीयते यदा चन्द्रः प्रच्छायायां प्रविशति। शनैः शनैश्चन्द्रस्य कश्चिद् भागस्तमोमयो भवति, ततस्तमोवृत्त वर्धते। पूर्णग्रहणे पूर्णतया चन्द्रो लुप्तो भवति। तत कश्चिद् भागः प्रकाशता याति। चन्द्रः प्रच्छायाया निर्गत्य उपच्छायायामायाति, पुनश्छायाया बहिर्निर्गच्छति[1]।

### ४.२४ चन्द्रकक्षायां भूभाव्यासानयनम्

अत्र सूर्यकेन्द्रः 'सू', भूकेन्द्रः 'भू', चन्द्रकेन्द्रः च, सन्ति। भूभायाग्रम अ स्थाने वर्तते। चन्द्रकक्षायां भूभाव्यासः च, च, भूभाव्यासार्धंच च,त दृश्यते। ∠ सकभू कोणः सूर्यस्य लम्बनं ल, अस्ति। तच,भू-कोणश्चन्द्रस्य क्षैतिजलम्बनं ल, अस्ति। सूर्यस्य बिम्बव्यासार्धं, क भू सू-कोण, बि, अस्ति। अत्र भूभाव्यासार्धस्य मानं निर्धेतव्यम।

कल्प्यते च, भू त कोण, (भूभाव्यासार्धं) α अस्ति।

क भू अ—त्रिभुजे बहिःकोण क भू सू = अन्तःकोणद्वययोग
= ∠ अ क भू + ∠ क अ भू

1. पूर्णग्रहणेऽपि चन्द्रः किञ्चिद्रक्तमिव स्पष्टतया दृश्यते। सूर्यास्ते सूर्योदये वा क्षितिजस्थाने सूर्योऽपि चन्द्रग्रहणदर्शनं भवति। वायुमण्डले प्रकाशकिरणानां वक्रीभवनेन सर्वं भवति।

अर्थात् $\text{वि}_1 = \text{ल}_1 + \theta$

च, भू अ – त्रिभुजे बहि कोण कच, भू = अन्त कोणद्वययोग

$= \angle \text{च, अ भू} + \angle \text{च, भू अ}$

अर्थात् $\text{ल}_2 = \theta + \alpha$

अत एव $\theta = \text{वि}_1 \sim \text{ल}_1$ ( प्रथमसमीकरणात् )

$= \text{ल}_2 - \alpha$ ( द्वितीयसमीकरणात् )

अत एव $\text{वि}_1 - \text{ल}_1 = \text{ल}_2 - \alpha$

अर्थात् $\alpha = \text{ल}_2 + \text{ल}_1 - \text{वि}_1$

सामान्यतया $\text{ल}_1 = ०'८''८$

$\text{ल}_2 = ५७'२''७$

$\text{वि}_1 = १५'५९''६३$

अत एव $\alpha$ = ४१′१०″ – ९ अत एव[1] $\alpha$ = भूमान्यास = ८२′२१″ + ८

( इवमेव कर्त्तव्यमासीत् )[1]

४ २५ भूभादैर्घ्यम्

भूभादैर्घ्यं चित्रे 'भूअ' अस्ति। 'भू अ' अस्य मानमेव निर्धार्यते—

वृत्तीयमाने ज्ञातमेव यत् $\dfrac{\text{भूव्यासार्धं}}{\text{भूभादैर्घ्यम्}} = \dfrac{\theta' \text{ (विकलामाने)}}{२०६२६५'}$

अर्थात् $\text{भूभादैर्घ्यम्} = \dfrac{\text{भूव्यासार्धं} \times २०६२६५''}{\theta' \text{ (विकलामाने)}}$

उपरिवर्त्यनुच्छेदस्य प्रथमसमीकरणात्

$\theta = \text{वि}_1 - \text{ल}_1 = १५५९'६३ - ८''८$

$= ९५९''६३ - ८''८$

$= ९५०''८$

अत एव $\text{भूभादैर्घ्यम्} = \dfrac{४००० \times २०६२६५}{९५०\,८}$

= ८६७८०० क्रोशार्धानि।

४ २६ ग्रहणस्थितिकाल

चन्द्र एकस्या होराया ३२′५६″ कोणीयान्तरमुल्लङ्घयति, अत एव भूभाया उल्लङ्घन समाये होरात्रये करोति। भूभाया पूर्णग्रहणे पूर्णग्रहणस्थितिकाल $\dfrac{२\alpha - ३१'}{३२\,५६''} = १\dfrac{३}{४}$ होरामित।

भूभादैर्घ्यं ८,६७,८०० क्रोशार्धानि। चन्द्रस्य भुवा दूरत्व केवल २,४०,००० क्रोशा

---

[1] उपच्छायाया व्यासमानं गणनया २ $(\text{ल}_1 + \text{ल}_2 + \text{वि}_1)$ = १४६′ २२″ ४ मितमागच्छति।

धानि, अत एव असम्भवमिदं यत् चन्द्रकक्षा भूमाया बहिर्भवेत् । अत एव राहुकेतुसमीपवर्ति-पौर्णमास्यां चन्द्रग्रहणमवश्यं दृश्यते ।

## ४.२ सूर्यग्रहणम्

### ४.२१ कारणम्

निजकक्षायां भ्रमतश्चन्द्रस्य तमोमयी सूच्याकारा छाया सूर्यप्रतिमूर्त्तिदेशाया सदैव पतति । यदि कदाचिद् भूश्चन्द्रछायामापतति, तर्हि चन्द्रो भूपृष्ठस्थदर्शकसूर्ययोर्मध्ये व्यवधानरूपेण तिष्ठति । सूर्यश्च तदा न दृश्यते व्यवधानभावात्, यथा मेघावृतः सूर्यो न दृश्यते । ईदृशमदर्शनं सूर्यस्य सूर्यग्रहणमुच्यते । यतः सूर्यग्रहणावसरे चन्द्रो भूसूर्ययोर्मध्ये तिष्ठति, ईदृशी च स्थितिरमावस्यायां भवति, अत एवामावस्यायामेव सूर्यग्रहणं भवति ।

परन्तु प्रत्येकस्याममावस्यायां ग्रहणं न दृश्यते । अत्र चन्द्रग्रहण इव चन्द्रकक्षायाः क्रान्तिवृत्तं प्रति नतिरेव कारणम् । सूर्यग्रहणमत एव तदैव सम्भवं यदा चन्द्रो राहुकेत्वोस्तिष्ठति ।

एवं सूर्यग्रहणं तदैव सम्भवम्, यदा—

( १ ) अमावस्या तिथिर्वर्तते ।

( २ ) चन्द्रश्च राहुकेत्वोः, राहुकेत्वोः समीपे वा तिष्ठति ।

### ४.२२ सूर्यग्रहणभेदाः

सूर्यग्रहणे चन्द्रबिम्बमाच्छादकम्, सूर्यबिम्बं चाच्छाद्यम् । साधारणोऽनुभवो जनानां यदाच्छादनमाच्छादकबिम्बव्यासम् आच्छाद्यबिम्बव्यासञ्च अपेक्षते ।

**पूर्णग्रहणं वलयाकार-ग्रहणञ्च**

आच्छादकस्य आच्छाद्यादधिकत्वे ( आच्छाद्यसमत्वेऽपि ) एव पूर्णत्वे च पूर्णाच्छादनं भवति । आच्छादकस्य आच्छाद्यादल्पे एवमूनत्वे च आच्छाद्यबिम्बमध्यं तु आच्छाद्यते, परन्तु बिम्बमध्याप्रकाशितभागाद् बहिर्भागः प्रकाशते वलयाकाररूपेण ।



पूर्णग्रहणम्



वलयाकार-ग्रहणम्

चन्द्रबिम्बव्यासः ३१' २२'' कलादिकमितात् २८' ४८'' कलादिकमितो दृश्यते । सूर्यबिम्बव्यासश्च ३२' ३६'' मितात् ३१' ३१'' मितपर्यन्तं दृश्यते । अत एव चन्द्रबिम्बमानं सूर्यबिम्बात् कदाचिद् अधिकं, कदाचित् समं, कदाचिन्न्यूनं विद्यते ।

पूर्णग्रहणम्—पूर्णग्रहणे सूर्यस्य बिम्बं पूर्णतया चन्द्रबिम्बेनाच्छाद्यते । चन्द्रे नीचे स्थिते ईदृशी स्थितिर्भवति ।

वलयाकारग्रहणम्—वलयाकारग्रहणे सूर्यबिम्बमध्ये श्यामं वृत्तमाच्छादितं दृश्यते । तद्बहिः उज्ज्वलं वृत्तं भवति । चन्द्रे उच्चे स्थिते ईदृशी स्थितिर्भवति ।

खण्डग्रहणम्—पूर्णग्रहणे वलयाकारग्रहणे च सूर्यकेन्द्र चन्द्रकेन्द्र लग्ना रेखैव भूपृष्ठस्थ-दर्शक सूर्यरेखा। परन्त्वीदृशी दशा सर्वदा न भवति। प्रायः सूर्यचन्द्रलग्नरेखायाः भूपृष्ठस्थ-दर्शक-केन्द्र-लग्नरेखा भिन्ना दृश्यते। अत एव चन्द्रबिम्बं सूर्यस्य भाग स्पृष्ट्वा निर्गच्छति, खण्डग्रहणञ्च भवति। सर्वेषां पूर्णग्रहणानां वलयाकारग्रहणानां च प्रारम्भा अन्ताश्च खण्डरूपेणैव भवन्ति।

**ग्रहणाभावः**

यदि सूर्यचन्द्रलग्नरेखातो भूपृष्ठ सूर्यलग्नरेखा पर्याप्ता भिन्ना, तर्हि सूर्यग्रहणं न भवति। ( ग्रहणान्यधिभाषि )—












### ४.३३ चन्द्रभाया अतिक्रमणम्

सूर्यग्रहणावसरे चन्द्रस्य उपच्छाया प्रच्छायापूर्वं भुवि पतति। उपच्छायाया भूपृष्ठस्थमनुजः सूर्यस्य खण्डग्रहणं पश्यति। पुनः शनैः शनैः प्रच्छाया भुवि पतति। प्रच्छायापतने पूर्णग्रहणं




भवति, दिवैव पूर्णान्धकारो दृश्यते, नक्षत्राण्याकाशेऽवलोक्यन्ते, पक्षिणो रवं कुर्वन्तः स्वनीडेषु प्रविशन्ति, पशवोऽसमये रात्रिमालोक्य व्याकुला भवन्ति। परन्तु तमिस्रेयं क्षणिका। प्रच्छाया झटिति भुवमुल्लङ्घयति। उपच्छायाया पुनः खण्डग्रहणं दृश्यते। तत उपच्छायापि भुवमुल्लङ्घयति। ग्रहणस्य मोक्षो भवति।

पूर्णसूर्यग्रहणस्य ज्योतिर्विद्यायामतिमहत्ता वर्तते। विज्ञानविदो दूरदेशेभ्यस्तत्र सम्मिलिता भवन्ति, यत्र पूर्णग्रहणं दृश्यमानं भवति। तत्र क्षणिकान्धकारे सूर्यवर्णमण्डलस्य सूर्यप्रभामण्डलस्य च वैज्ञानिकपरीक्षणानि क्रियन्ते। सापेक्षवादस्य ('आइन्स्टाईन'महोदयमतस्य) सत्यता स्थापनं क्रियते।

### ४.३४ चन्द्रभाव्यासस्य चन्द्रभादैर्घ्यस्य चानयनम्




चन्द्रभादैर्घ्यं चित्रे च अ अस्ति। चित्रे क सू अ त्रिभुजं ख च अ त्रिभुजं परस्परं समानत्रिभुजे, अत एव

$$\frac{\text{क सू}}{\text{ख च}} = \frac{\text{अ सू}}{\text{अ च}} \text{ अर्थात् } \frac{\text{सूर्यव्यासार्ध}}{\text{चन्द्रव्यासार्ध}} = \frac{\text{अ सू}}{\text{अ च}}$$

अ सू च अच–चसू–योगतुल्यं, अर्थात् $\text{असू} = \text{अच} + \text{चसू}$

$$\text{अत एव } \frac{\text{सूर्यव्यासार्धः}}{\text{चन्द्रव्यासार्धः}} = \frac{\text{अ सू}}{\text{अ च}} = \frac{\text{अ च} + \text{च सू}}{\text{अ च}}$$

अर्थात् $(\text{अ च})(\text{सूर्यव्यासार्धः}) = (\text{अ च})(\text{चन्द्रव्यासार्धः}) + (\text{चसू})(\text{चन्द्रव्यासार्धः})$

अर्थात् $(\text{अ च})(\text{सूर्यव्यासार्धः}) - (\text{अ च})(\text{चन्द्रव्यासार्धः}) = (\text{च सू})(\text{चन्द्रव्यासार्धः})$

अर्थात् $(\text{अ च})(\text{सूर्यव्यासार्धः} - \text{चन्द्रव्यासार्धः}) = (\text{च सू})(\text{चन्द्रव्यासार्धः})$

$$\text{अर्थाद् अ च} (= \text{चन्द्रमादैर्घ्यम्}) = \frac{\text{चन्द्रसूर्यान्तरं} \times \text{चन्द्रव्यासार्धः}}{\text{सूर्यव्यासार्धः} - \text{चन्द्रव्यासार्धः}}$$

चन्द्रकक्षाया व्यासमानानयनम्



§. समे द्वे चित्रे यथा चिह्नानि तथा अत्र 'सू' क स भू ग चियन्ते। चन्द्रकक्षाया व्यासार्धस्य आनयनमत्र कर्तव्यम्। अत्र $\frac{\text{च}_1 \text{ च}_2}{2}$ इष्टमानम्। कल्प्यते इद B मितम्।

$\text{च}_1$ भू अ त्रिभुजात् $B = \text{ल}_2 + \theta''$

क भू अ त्रिभुजात् $\text{वि}_1 = \text{ल}_1 + \theta$ अर्थात् $\theta = \text{वि}_1 - \text{ल}_1$

अत एव $B = \text{ल}_2 + \theta = \text{ल}_2 + (\text{वि}_1 - \text{ल}_1)$

$\quad = \text{वि}_1 + \text{ल}_2 - \text{ल}_1$

सामान्यतया $\text{ल}_1 = 0' \, 8''.8$

$\text{ल}_2 = 57' \, 2''.7$

$\text{वि}_1 = 15' \, 59''.63$

अत एव $B = 72' 54''.33$

अत एव $2B =$ सूर्यग्रहणावसरे चन्द्रकक्षाव्यासः $= 145' \, 48''.66$

चन्द्रसूर्यान्तरं चन्द्रस्य भुवश्च स्थितिमपेक्षते, अत एव परिवर्तनशीलम्। भुवः सूर्यस्य सर्वाधिकदूरत्वं ९,४४,००,००० क्रोशार्धानि, अल्पतमदूरत्वञ्च ९,१४,००,००० क्रोशार्धानि। चन्द्रस्य भुवः सर्वाधिकदूरत्वं २,५६,००० क्रोशार्धानि, अल्पतमदूरत्वञ्च २,२१,००० क्रोशार्धानि।

अत एव सर्वाधिकसूर्यचन्द्रान्तर ९,४४,००,०००—२,२१,०००=९,४१,७९,००० क्रोशार्धानि, अल्पतमसूर्यचन्द्रान्तर ९,१४,००,००० — २,५६,००० = ९,११,४४,००० क्रोशार्धानि ।

चन्द्रव्यासार्धमान १०८० क्रोशार्धानि, सूर्यव्यासार्धमानञ्च ४,३२,००० क्रोशार्धानि। अत एव—

$$\frac{\text{चन्द्रव्यासार्ध}}{\text{सूर्यव्यासार्ध — चन्द्रव्यासार्ध}} = \frac{१०८०}{४३०९२०} = \frac{३}{११९७}$$

एव सर्वाधिकचन्द्रसूर्यान्तरे चन्द्रभादैर्घ्यम् $= \frac{९,४१,७९,००० \times ३}{११९७}$

$= २,३६,०७१$ क्रोशार्धानि

एवञ्च सर्वाल्पचन्द्रसूर्यान्तरे चन्द्रभादैर्घ्यम् $= \frac{९,११,४४,००० \times ३}{११९७}$

$= २,२८,४३१$ क्रोशार्धानि

एव सर्वाधिकचन्द्रसूर्यान्तरे भुवश्चन्द्रदूरत्व २,२१,००० क्रोशार्धानि, चन्द्रभादैर्घ्यं २३६०७१ क्रोशार्धानि, सर्वाल्पचन्द्रसूर्यान्तरे भुवश्चन्द्रदूरत्व २,५६,००० क्रोशार्धानि, चन्द्रभादैर्घ्यं २,२८,४२४१ क्रोशार्धानि

प्रथमावस्थायां चन्द्रभा भुवि २३६०७१—२२१००० = १५०७१ क्रोशार्धान्यन्तः प्रविशति, पूर्णग्रहणञ्च दृश्यते ।

द्वितीयावस्थायां चन्द्रभा भुवः २५६०००—२२८४३१ = २.७५६९ क्रोशार्धानि दूरे बहिर्वर्तते, कङ्कणाकारग्रहणञ्च दृश्यते ।

## ४.४ सूर्यचन्द्रग्रहणानि

### ४.४१ सूर्यग्रहण चन्द्रग्रहणयोस्तुलना

**दृश्यताविषयकतुलना**

चन्द्रग्रहणं भुवोऽप्रकाशितगोलार्धस्य प्रत्येकभागाद् दृश्यते । सूर्यग्रहणं भुवः प्रकाशित गोलार्धस्य कस्मादेव भागाद् दृश्यते य उपच्छायायां प्रच्छायायां वा पतति । ईदृशो भागः पर्याप्त सङ्कुचित, अत एव चन्द्रग्रहणानि सूर्यग्रहणापेक्षयाऽधिकसंख्यायां दृश्यन्ते, यद्यपि तान्यल्पसंख्यायां भवन्ति ।

**ग्रहणसंख्याविषयकतुलना**

चन्द्रग्रहणे चन्द्रकक्षायां व्यासः ( $२\alpha = ८८'$ ) सूर्यग्रहणे चन्द्रकक्षाव्यासाद् ( $२\beta = १४४'$ ) अल्प, अत एव चन्द्रग्रहणानां सम्भावना सूर्यग्रहणसम्भावनाया अल्पीयसी । अत एव सूर्यग्रहणानां संख्या चन्द्रग्रहणानां संख्याया अधिकतरा भवति ( एकस्मिन् ग्रहणचक्रे १४ सूर्यग्रहणानि, २९ चन्द्रग्रहणानि च भवन्ति ) ।

**ग्रहणस्थितिकालविषयकतुलना**

चन्द्रग्रहणे भूभायाः व्यासस्य चन्द्रकक्षायां वास्तविकमान ५७०० क्रोशार्धानि भवति, अतश्चन्द्रो भूभां प्रायो होराद्वये उल्लङ्घयति । सूर्यग्रहणे च चन्द्रभायाः ( प्रच्छायायाः ) भुवि

वास्तविकव्यासः ·२६७ कोशार्धमितः, अत एव प्रच्छाया अष्ट मिनटेभ्यः पूर्वमेव पृथिवीतल-मुल्लङ्घयति। एवं पूर्णचन्द्रग्रहणस्य स्थितिकालोऽधिकः, पूर्णसूर्यग्रहणस्य स्थितिकालो न्यूनः।

### ४.४२ ग्रहणसम्भावना

**चन्द्रग्रहणसम्भवः**

भूभा क्रान्तिवृत्ते भ्रमति, चन्द्रस्तु स्वकक्षायां भ्रमति। कल्प्यते त-स्थित्यां ग्रहणस्पर्श-स्थितिः। यतः स्पर्शारम्भो भवति, अतः—

आ क + क अ = अ आ

अर्थाद् भूभाव्यासार्धः+चन्द्रबिम्बव्यासार्धः = अ आ[1]

पूर्वं ज्ञातमिदं यद् भूभाव्यासार्धः α = ४१′ १०.″९ चन्द्र-बिम्बव्यासार्धः = १५′ ३२″.५८

अत एव अ आ = ४१′ १०″·९ + १५′ ३२″५८″ = ५६′ ४३″




त - स्थितिः

कल्प्यते थ-स्थित्यां पूर्ण-ग्रहणस्यारम्भः। अत्र—

आ′ क′ − अ′ क′ = आ′ अ′[2]

अर्थाद् भूभाव्यासार्धः — चन्द्रबिम्बव्यासार्धः = आ′ अ′

अर्थात् ४१′ १०″ ९ — १५′ ३२″.५८ = २५′ ३८″




थ - स्थिति

अत एव ग्रहणं तदैव सम्भवं यदा चन्द्रकेन्द्र-बिम्बकेन्द्रान्तरं (चन्द्रस्य शरः) ५६′ ४३″ मितम्, ५६′४३″ मितादल्पं वा। पूर्णग्रहणे इदमन्तरं २५′ ३८″ मितमथवा न्यूनं भवति।

---

1. अ आ = स₁ + स₂ − वि₁ + वि₂ सामान्यमानानि स₁ = ९″ वि₁ = १६′१८″ महत्तममानम्
स₂ = ६०′ = १४′४१″ लघुतममानम्

2. अ′ आ′ = स₁ + स₂ − वि₁ − वि₂ कक्षापातमानम् = प = ५°२०′ महत्तममानम् वि₂ = १६′४३″ महत्तममानम् = ४°५०′ लघुतममानम् = १४′४३″ लघुतममानम्।

**राहुकेत्वोर्निम्नतमसान्निध्यम्**

राहुकेत्वोः कियति दूरे सूर्यस्तिष्ठेद् यदा चन्द्रग्रहणं भवेत् ! इति प्रश्नस्योत्तरे 'प्रधाना ग्रहणविषयकसीमा', 'गौणी ग्रहणविषयकसीमा' च निर्णीयेते। चन्द्रग्रहणे प्रधाना ग्रहणविषयकसीमा १२°५′ मिता, गौणी ग्रहणविषयकसीमा च ९°३०′ मिता। सूर्यराह्वोः सूर्यकेत्वोर्वा अन्तर यदि प्रधानाया सीम्नि, तर्हि चन्द्रग्रहणस्य सम्भावनामात्रं विद्यते। यदि गौण्यां सीम्नि, तर्हि चन्द्रग्रहणस्य निश्चयेन भवितव्यता विद्यते।

**सूर्यग्रहणसम्भवः सीमा च**

यथा पूर्वं चन्द्रग्रहणसम्भवो निश्चितः, तथैव सूर्यग्रहणसम्भवो निर्णीयते। सूर्यग्रहणं तदैव सम्भवं यदि चन्द्रकेन्द्र भूभाबिम्बकेन्द्रान्तर = चन्द्रबिम्बव्यासार्धः + चन्द्रलम्बनम्
—सूर्यबिम्बव्यासार्धः —सूर्यलम्बनम्
( नि$_२$ + ल$_२$ − बि$_१$ − ल$_१$ )
= ८८′ (मध्यमानम्)

पूर्णसूर्यग्रहणं तदैव सम्भवं यदा—

चन्द्रकेन्द्र भूभाबिम्बकेन्द्रान्तरं = चन्द्रलम्बनं + सूर्यबिम्बव्यासार्धः — चन्द्रबिम्बव्यासार्धं
— सूर्यलम्बनम्
= ल$_२$ + बि$_१$ − बि$_२$ − ल$_१$
= ५८′ ( मध्यमानम् )

सूर्यग्रहणे 'प्रधाना ग्रहणविषयकसीमा' १८°३१′ मिता, 'गौणी ग्रहणविषयकसीमा' च १५°२१′ मिता। अत एव सूर्यराह्वोः सूर्यकेत्वोर्वा अन्तर यदि प्रधानाया सीम्नि (अर्थात् १८°३१ मितादल्पम्), तर्हि सूर्यग्रहणस्य सम्भावना विद्यते। यदि गौण्या सीम्नि ( अर्थात् १५°२१′ मितादल्पम् ), तर्हि निश्चयेन भवितव्यता वर्तते।

**४.४३ एकस्मिन् वर्षे ग्रहणानां संख्या**

चान्द्रमासे २९½ दिनानि भवन्ति, अत एव पूर्णिमाया अमावस्यापर्यन्तं $\frac{२९\frac{१}{२}}{२}$ = १४·७५ दिनानि भवन्ति। सूर्यश्च राहुं पुनः ३४६·६ दिनैः प्राप्नोति, अत एवैकस्मिन् पक्षे ( चान्द्रपक्षे ) $\frac{३६० \times १४·७५}{३४६·६}$ = १५°१८′ गच्छति। इमां चन्द्रगतिम्, इमां सूर्यगतिम्, विभिन्ना ग्रहणविषयकसीमाश्च विचार्य ज्योतिर्गणैर्ग्रहणानां संख्या निर्धार्यते। एकस्मिन् वर्षे द्वे सूर्यग्रहणे अवश्य भवतः। ग्रहणानामधिकतमा संख्या च सप्त अस्ति—पञ्च सूर्यग्रहणानि, द्वे चन्द्रग्रहणे, अथवा चत्वारि सूर्यग्रहणानि, त्रीणि च चन्द्रग्रहणानि।

**४.४४ ग्रहणावृत्तिचक्रम् ( सैरोस )**

चान्द्रमासे २९·५३ दिनानि भवन्ति, राहोश्च युतिकालः ३४६·६२ दिनानि, अत एव ६५८५ दिनानां पश्चाद् राहु-केतुश्चन्द्रः सूर्यश्च सर्वे परस्परं पूर्ववद् भविष्यन्ति। यतः—

चन्द्रस्य २२३ भगणाः = ६५८५·३२ दिनानि
राहोश्च १९ भगणाः = ६५८५·७८ दिनानि

एवं ६५८५ = १८ व·११ दिनानां पश्चात् पूर्ववद् ग्रहणानि भविष्यन्ति।

अग्रे दीयते सारिणी ग्रहणावृत्तिचक्रद्वयान्तर्गतग्रहणानाम्। एकस्मिन् ग्रहणावृत्तिचक्रे

४१ सूर्यग्रहणानि २९ चन्द्रग्रहणानि च भवन्ति । सारिण्या स्पष्टीभविष्यति यत् प्रत्येकस्मिन् पष्ठे मासे ग्रहणानुकूलकालो भवति ।

### ४.४४ ग्रहणानां सारिणी

| खिस्ताब्दः | चन्द्रस्य | उपराहु | सूर्यस्य | चन्द्रस्य | उपकेतु | सूर्यस्य |
|---|---|---|---|---|---|---|
| १९३२ | मार्च २२ | | मार्च ७ | सितम्बर १४ | | अगस्त ३१ |
| १९३३ | | | फरवरी २४ | | | अगस्त २१ |
| १९३४ | जनवरी ३० | | फरवरी १४ | जुलाई २६ | | अगस्त १० |
| १९३५ | जनवरी १९ | | { जनवरी ५<br>फरवरी ३<br>दिसम्बर २५ } | जुलाई १६ | | { जून ३०<br>जुलाई ३० } |
| १९३६ | जनवरी ८ | | दिसम्बर १३ | जुलाई ४ | | जून १९ |
| १९३७ | नवम्बर १८ | | दिसम्बर २ | | | जून ८ |
| १९३८ | नवम्बर ७ | | नवम्बर २२ | मई १४ | | मई २९ |
| १९३९ | अक्टूबर २८ | | अक्टूबर १२ | मई ३ | | अप्रैल १९ |
| १९४० | | | अक्टूबर १ | | | अप्रैल ७ |
| १९४१ | सितम्बर ५ | | सितम्बर २१ | मार्च १३ | | मार्च २७ |
| १९४२ | अगस्त २६ | | { अगस्त १२<br>सितम्बर १० } | मार्च ३ | | मार्च १६ |
| १९४३ | अगस्त १५ | | अगस्त १ | फरवरी २० | | फरवरी ४ |
| १९४४ | | | जुलाई २० | | | जनवरी २५ |
| १९४५ | जून २५ | | जुलाई ९ | दिसम्बर १९ | | जनवरी १४ |
| १९४६ | जून १४ | | { मई ३०<br>जून २९ } | दिसम्बर ८ | | { जनवरी ३<br>नवम्बर २३ } |
| १९४७ | जून ३ | | मई २० | | | नवम्बर १२ |
| १९४८ | अप्रैल २३ | | मई ९ | | | नवम्बर १ |
| १९४९ | अप्रैल १३ | | अप्रैल २८ | अक्टूबर ७ | | अक्टूबर २१ |
| १९५० | अप्रैल २ | | मार्च १८ | सितम्बर २६ | | सितम्बर १२ |
| १९५१ | | | मार्च ७ | | | सितम्बर १ |
| १९५२ | फरवरी ११ | | फरवरी २५ | अगस्त ५ | | अगस्त २० |
| १९५३ | जनवरी २९ | | फरवरी १४ | जुलाई २६ | | { जुलाई ११<br>अगस्त ९ } |
| १९५४ | जनवरी १९ | | { जनवरी ५<br>दिसम्बर २५ } | जुलाई १६ | | जून ३० |
| १९५५ | नवम्बर २९ | | दिसम्बर १४ | | | जून २० |
| १९५६ | नवम्बर १८ | | दिसम्बर २ | मई २४ | | जून ८ |

| खिस्ताब्द. | चन्द्रस्य | उपराहु | सूर्यस्य | चन्द्रस्य | उपकेतु | सूर्यस्य |
|---|---|---|---|---|---|---|
| १९५७ | नवम्बर ७ | | अक्टूबर २३ | मई १३ | | अप्रैल २९ |
| १९५८ | | | अक्टूबर १२ | | | अप्रैल १९ |
| १९५९ | | | अक्टूबर २ | मार्च २४ | | अप्रैल ८ |
| १९६० | सितम्बर ५ | | सितम्बर २० | मार्च १३ | | मार्च २७ |
| १९६१ | अगस्त २६ | | अगस्त ११ | मार्च २ | | फरवरी १५ |
| १९६२ | | | जुलाई ३१ | | | फरवरी ५ |
| १९६३ | जुलाई ६ | | जुलाई २० | दिसम्बर ३० | | जनवरी २५ |
| १९६४ | जून २५ | | { जून १० ; जुलाई ९ } | दिसम्बर १९ | | { जनवरी १४ ; दिसम्बर ४ } |
| १९६५ | जून १४ | | मई ३० | | | नवम्बर २३ |
| १९६६ | | | मई २० | | | नवम्बर १२ |
| १९६७ | अप्रैल २४ | | मई ९ | अक्टूबर १८ | | नवम्बर २ |
| १९६८ | अप्रैल १३ | | मार्च २८ | अक्टूबर ६ | | सितम्बर २२ |

## ४.५ आच्छादन संक्रमणञ्च

### ४.५१ आच्छादनम्

चन्द्र पूर्वदिशा भ्रमन् प्रायेण देदीप्यमाननक्षत्राणा पुर आगच्छति, नक्षत्र चाच्छादयति। एवम्भूतो नक्षत्रलोप आच्छादन कथ्यते। 'नाविकल'पञ्चाङ्गे मुख्यानामाच्छादनाना गणनादय पूर्वं दत्ता भवन्ति। सूर्यग्रहणवत् सर्वत्राच्छादनानि न दृश्यन्ते, विभिन्नस्थानेषु च विभिन्नकालेषु दृश्यन्ते।



ज्योतिर्गणिते आच्छादनानि परममहत्त्वपूर्णानि। आच्छादनाना वेधै (१) चन्द्रस्य विषुवांशा रेखांशाश्च, (२) पार्थिवरेखांशा, (३) चन्द्रस्य कक्षावृत्तम्, (४) सूर्यलम्बनम्, (५) नक्षत्राणा महांशाश्च बिम्बव्यासाश्च सूक्ष्मातिसूक्ष्मं निर्णीयन्ते।

### ४.५२ बुधशुक्रयो संक्रमणानि

सङ्क्रमणं विद्यते एकोऽन्यो दायकस्य। साधारणतो लघुग्रहौ (बुधशुक्रौ) सूर्यबिम्बस्य उपर्यधो वा कक्षाया भ्रमत, कक्षागमनत्वात्। परन्तु यदि पृथ्वी तयो क्रान्तिवृत्ते

# पञ्चमोऽध्यायः

## सूर्यः

"सूर्य आत्मा जगतस्तस्थुषश्च" [ ऋ० सं० १।११५।१ ]

[ "सूर्यः कियद्दूरे वर्तते ? कियत्तस्य परिमाणम् ? कुतस्तस्य प्रकाशतापौ" इत्यादीन्यत्र व्याख्यायन्ते ]

### ५.१ सूर्यस्य भुवो दूरत्वम्

सूर्यस्य दूरत्वमतिदीर्घं ९,२९,००,००० क्रोशार्धमितम्। अस्यामासमानमनेन कथं नैन भविष्यति यद् यदि कोऽपि जनः प्रतिघण्टम् २४ क्रोशार्धानि रेलयानेन गच्छेत् तर्हि प्रस्थानस्य १७५ वर्षानन्तरं स सूर्यतत्र प्राप्नुयात्। जगति सर्वाधिकवेगशालिनस्तु प्रकाशरश्मयो विद्युद्रश्मयो वा, ते प्रतिसेकिण्डं १,८६,००० क्रोशार्धानि गच्छन्ति, परन्तु तेऽपि सूर्यात् ८⅓ मिनटैर्भुवमागच्छन्ति।

### ५.११ दूरत्वनिर्धारणम्

चन्द्रदूरत्वनिर्धारणे यो लम्बनविधिर्व्याख्यातः स न साफल्यमावहति सूर्यदूरत्वनिर्धारणे, यतः प्रथमं सूर्ये न विद्यते कोऽप्यचलो बिन्दुः ( अथवा किमपि स्थिरचिह्नं यथा चन्द्रे चन्द्रकलङ्कः ) यस्माद् लम्बनं निरूप्येत, द्वितीयश्च सूर्योऽतिदूरवर्ती, तस्य लम्बनोपलब्धये वृहत्याधाररेखापेक्ष्यते, पृथिव्या व्यासश्च नाभीष्टाधाररेखा। अत एव लम्बनमुपायान्तरेण माप्यते।

ज्योतिर्विद्भिर्लम्बनानयनविधौ भुवः समीपतमाः खगोलीयपिण्डा इष्टाः—ते च शुक्रभौमेरोसाः। शुक्रोऽन्तर्ग्रहः, अत एव स्फुटतः समीपतमो भवति, परन्तु तदा तस्य सूर्यबिम्बेषु लोपो भवति, तस्य वेधश्च न सुकरो भवति। केवलं तस्य सूर्यबिम्बे सङ्क्रमणानि किञ्चित् प्रयुज्यन्ते। भौमस्य बहिर्ग्रहत्वात् षड्भान्तरे समीपतमत्वाद् रात्रौ च दक्षिणोत्तरत्वाद् वेधोऽतिसरलः। तृतीय एरोस नामकोऽवान्तरग्रहः काले काले भुवोऽतिसामीप्यमागच्छति। एभिस्त्रिभिः सूर्यस्य दूरत्वं वेधेन ज्ञायते। अन्यप्रत्यक्षविधयोऽपि यैः दूरत्वं निश्चीयते। यथा मार्गच्युति डाप्लर-सिद्धान्त गणनादयः प्रमुखाः।

### ५.१२ शुक्रसंक्रमणविधिः

काले काले शुक्रः सूर्यबिम्बे सङ्क्रमणानि कुर्वन् दृश्यते। ( द्रष्टव्योऽनुच्छेदः ७.२६ तत्रो यत्र संक्रमणतिथयोऽपि दत्ताः )। खिस्ताब्दे १७६१ तमे, खिस्ताब्दे १७६९ तमे च शुक्रसङ्क्रमणं निरीक्ष्य सूर्यलम्बनं ८.५७ विकलामितं निश्चितम्। पुनः १८७४ तमे खिस्ताब्दे, १८८२-तमे खिस्ताब्दे च ज्योतिर्विद्भिर्महान् प्रयत्नः कृतः यथार्थलम्बनानयनार्थम्, परन्तु कदाचित् शुक्रवायुमण्डलवशाद् वेधेषु भिन्नताऽदृश्यत।

संक्रमणकाले शुक्रो भुवः समीपतममागत्य रवियुतौ तिष्ठति, दूरत्वञ्चास्य सूर्यदूरत्वसतांश मितं भवति । अत एव शुक्रसंक्रमणस्य ईषत्स्थानभ्रंश पर्याप्त लम्बन सृजति । भुवः क स्थानात्




शुक्रसंक्रमणपद्धतिः

शुक्र सूर्यस्य निम्नतरभागे ( आ स्थाने ) दृश्यते, भुवः ख स्थानात् तस्मिन्नेव समये सूर्यस्य उच्चतरभागे ( अ-स्थाने ) दृश्यते । शुक्रस्य युतिकालो ज्ञात एव, भुवः शुक्रस्य दूरत्वस्य सूर्यदूरत्वापेक्षया निष्पत्ति $\left(\frac{\text{भुवः शुक्रस्य दूरत्वम्}}{\text{भुवः सूर्यस्य दूरत्वम्}}\right)$ अपि विदितपूर्वैव, अत एव गणनया ( विस्तरभयादत्र गणना न दत्ता ) सूर्यदूरत्वं निर्णीयते ।

**५.१३ भौमदूरत्व विधिः**

'केप्लर'महोदयस्य तृतीयनियमेन ग्रहाणां परस्परदूरत्वनिष्पत्तिर्ज्ञायते । अत यद्येकस्यापि ग्रहस्य दूरत्वं ज्ञातं भवति, तर्हि सर्वेषां ग्रहाणां सूर्यस्य वा दूरत्वानि ज्ञातानि भविष्यन्ति । भौमस्य दूरत्वं सर्वानुकूलप्रतियोगकालेषु ( § ७.३१ ) चन्द्रदूरत्वानयनविधिना ज्ञायते । भौमदूरत्वप्राप्त्यनन्तरं सूर्यस्यापि दूरत्वं लभ्यते ।

**५.१४ एरोसदूरत्वविधि**

भौमलम्बनानयने एका बाधा दृश्यते । भौमस्य बिम्बवत्त्वाद् लम्बनकोणनिर्णयो दुष्करो भवति । अत एव ज्योतिर्विदो बहुकालात् कस्यचिद् अल्पबिम्बवतो ग्रहस्यान्वेषणे रता आसन् । खिस्तीये १८९८ तमे वर्षे ईदृशो लघुबिम्बवान् ग्रहो लब्धः । बोडानियमानुसारं 'एरोस' नामकः ( द्रष्टव्य § ७.४२ ) । 'एरोस'स्य व्यासः केवलं १५ क्रोशार्धमितः । परिभ्रमणकक्षाया उत्केन्द्रता पर्याप्ता, अत एव काले काले भुवः सर्वाधिकं सामीप्यं भजते । १९३१-तमे खिस्ताब्दे एरोसः भुवः केवलं १,६२,००,००० क्रोशार्धदूरे आसीत् । ( अस्य सर्वासन्नमदूरत्वं १,३८,४०,००० क्रोशार्धानि ) । सर्वे ज्योतिर्विदो लम्बननिर्धारणार्थमवसरस्यास्य प्रतीक्षां कुर्वन्तो महायोजनानि व्यधुः । वेधेन गणनया च सूर्यस्य लम्बनं ८.७९ विकलामितं निश्चितम् । अनेन सूर्यस्य दूरत्वं ९,३०,०९,००० क्रोशार्धमितं लभ्यते ।

**५.१५ भूचलनसिद्धान्तेन ( मार्गच्युतिसिद्धान्तेन )**

भूचलनसिद्धान्तेन भुवः परिभ्रमणमार्गे वेगो ज्ञायते । मानमस्य १८.६ क्रोशार्धानि प्रतिसेकेण्ड प्राप्यते । वर्षे ३,१७,६०,००० सेकेण्डानि भवन्ति, अत एव वर्षे पृथिवी

३,१५,६०,००० × १८½ क्रोशार्धानि गच्छत्याकाशे। यदि परिक्रमणमार्गो गोलाकारः, परिधिमानञ्चैतन्मात्रकं ( ३१५६०००० × ३७/२ क्रोशार्धानि ), तर्हि व्यासार्धः कियन्मात्रक इति त्रैराशिकेन ज्ञायते। इदं व्यासार्धमानम्

$$= ३१५६०००० \times \frac{३७}{२} \times \frac{१}{२\pi}$$

$$= ३१५६०००० \times \frac{३७}{२} \times \frac{७}{४४}$$

$$= ९२८८६८२८$$

$$= ९२९००००० \text{ ( आसन्नमूल्येन ) क्रोशार्धानि ।}$$

व्यासार्धमानमिदं सूर्यस्य भुवो दूरत्वम्।

### ५.१६ डाप्लरसिद्धान्तेन

नक्षत्रस्यापसरणेनोपसरणेन वा रश्मिविश्लेषणचित्रे निम्नानि परिवर्तनानि दृश्यन्ते।[1] यथा यथा नक्षत्रं दृश्यसूत्रेऽस्माकं समीपमागच्छति तथा तथा रश्मिविश्लेषणे ( वर्णच्छत्रे रेखा नीललोहितोत्तरं प्रति विचलन्ति, यथा यथा च नक्षत्रमस्माद् दूरीभवति तथा तथा रेखा उपरक्तं प्रति विचलन्ति। अनेन 'डाप्लरसिद्धान्तेन' 'स्पेंसरजोन्स' महोदयेन भुवः प्रदक्षिणागतिः १८½ क्रोशार्धानि प्रतिसेकिण्ड निर्धारिता, पूर्ववत् च गणनया सूर्यस्य भुवो दूरत्वं प्रायः ९,२९,००,००० क्रोशार्धानि प्राप्यते।

## ५.२ परिमाणादयः

### ५.२१ सूर्यस्य परिमाणम्

सूर्यस्य दूरत्वमानं लब्ध्वा, तस्य परिमाणानयनं सुसरलम्। वेधेन सूर्यस्य मध्यमबिम्बमानं ३१′ ५९″ अस्ति। दूरत्वञ्च ९,२९,००,००० क्रोशार्धानि। अत एव अनुच्छेद······तमे प्रयुक्तविधिना सूर्यव्यासस्य मानं ८,६४,००० क्रोशार्धानि लभ्यते।




### ५.२२ सूर्यस्य पिण्डमात्रा, घनत्वम्, गुरुत्वाकर्षणञ्च

'न्यूटन' महोदयस्याकर्षणसिद्धान्तेन सूर्यस्य पिण्डमात्राया मानं निश्चीयते। 'न्यूटन' नियमेन

$$\frac{\text{सौरपिण्डमात्रा}}{\text{पार्थिवपिण्डमात्रा}} \times \frac{\text{पार्थिवव्यासार्धः}}{\text{सौरव्यासार्धः}} = \frac{\text{सौरगुरुत्वाकर्षणशक्तिः}}{\text{पार्थिवगुरुत्वाकर्षणशक्तिः}}$$

1. द्रष्टव्यो § ११·२१२ तम.।

अत्र सौरपिण्डमात्रां विहायान्ये विदितपूर्वाः, अत एव सौरपिण्डमात्रा गणनया पार्थिवपिण्डमात्रामानस्य ३,३२,००० गुणिता ( ५×१०२८ मनमिता ) प्राप्यते ।

सूर्यस्य घनत्वं पार्थिवघनत्वस्य $\frac{१}{४}$ गुणितम्, जलघनत्वस्य च १$\frac{२}{५}$ गुणितमस्ति । गुरुत्वाकर्षणशक्तिश्च पार्थिवगुरुत्वाकर्षणशक्तेः २७·९ गुणितास्ति ।

४.२३ अक्षभ्रमणम्

सूर्योऽप्यक्षभ्रमणं करोतीति सूर्यलाञ्छनानां सूर्यबिम्बे चलनेन सिद्ध्यते । सूर्यलाञ्छनानि पश्चिमतः पूर्वं प्रति गच्छन्ति । यदि किमपि लाञ्छनमद्य सूर्यबिम्बमध्ये दृश्यते, तदैव



सप्ताहानन्तरं पूर्वबिम्बकोटिं लप्स्यते, ततः पक्षानन्तरमपरकोट्यां प्रथमं दृश्यमानः सप्ताहानन्तरं पुनर्मध्यभागमागमिष्यति । एवमक्षभ्रमणकालस्यासन्नमानं २५ दिनानि लभ्यते ।

परन्तु सूर्यपृष्ठे सर्वत्राक्षभ्रमणकालः समो न, विषुवप्रदेशानां २४·६५ दिनानि, ३५–अक्षांशविभागानां २७ दिनानि, ध्रुवीयप्रदेशानाञ्च ३४ दिनान्यक्षभ्रमणकालो दृश्यते। वर्णच्छत्रे डाप्लरनियमगणितरेखाचित्रैरपि प्रायस्तदेवाक्षभ्रमणकालमानं लभ्यते।

सूर्यस्य विषुवरेखायाः क्रान्तिसूत्रात् प्रवणता सप्तांशमिता, अत एव लाञ्छनानि कदाचिद्



विभिन्नकालेषु विभिन्नरूपैर्दृश्यते सूर्यः

ऋजुमार्गेण, कदाचिच्च दीर्घवृत्ताकारमार्गेण भ्रमन्ति दृश्यन्ते। जूनमासस्य ६–दिनाङ्के दिसम्बरमासस्य च ६–दिनाङ्के तानि ऋजुरेखायां भ्रमन्ति। मार्चमासस्य प्रथमदिनाङ्के, सितम्बरमासस्य च पञ्चदशदिनाङ्के तानि दीर्घवृत्ताकारमार्गेण भ्रमन्ति, इत्युपरिदत्तचित्रेण स्पष्टीभवति।

## ५·२ सूर्यविधानम्

सूर्योऽत्युष्णवाष्पाणां विशालपिण्डोऽस्ति। वर्णनसौकर्यार्थमस्य पञ्चाङ्गानि क्रियन्ते— (१) सूर्यमध्यभागः, (२) प्रकाशमण्डलम्, (३) प्रत्यावर्तकस्तरः, (४) वर्णमण्डलम्, (५) प्रभामण्डलञ्च।

सूर्यमध्यभागो दृश्यपृष्ठादधो वर्तते। विवरणमस्य केवलं सैद्धान्तिकगणनया सम्भवम्। अस्य केन्द्रे तापक्रमः २,००,००,००० सेन्टीग्रेडमितो वर्तते। परमाणवः सर्वे छिन्नभिन्नरूपेण विद्यन्ते।

प्रकाशमण्डलं दृश्यभागः। अत्र कणचिह्नानि, श्यामवर्णसूर्यलाञ्छनानि च दृश्यन्ते। अस्योपरि पारदर्शकवाष्पाणि वायुमण्डलरूपेण तिष्ठन्ति।

प्रत्यावर्तकस्तरः प्रकाशमण्डलस्योपरि कतिपयशतक्रोशोच्चपर्यन्तं विद्यते। अस्मात् स्तरात् सूर्यवर्णच्छत्रे श्यामा रेखा उत्पद्यन्ते।

वर्णमण्डलं प्रत्यादर्शस्तरस्योपरि वर्तते । शोणितवर्णमिदं नैकसहस्रक्रोशार्धोच्छ्रयपर्यन्तं विद्यते । अस्मादुन्नतज्वालाशिखराण्युद्गच्छन्ति, यानि पूर्णसूर्यग्रहण एव ( विशेषयन्त्रेणान्यदा वा ) दृश्यन्ते ।

प्रभामण्डलं सूर्यस्य बहिस्तमो भागः । पूर्णसूर्यग्रहणेऽस्या मुक्ताशुक्लवर्णमत्यन्तं शोभनीयं दृश्यते । प्रभामण्डलीययन्त्रेण ( 'कोरोनोग्राफ'यन्त्रेण ) अन्यदापीदं दृश्यतां याति ।

## ५·३१ प्रकाशमण्डलम्

सूर्यस्य यो गोलाकारो भागोऽस्माभिर्दृश्यते स प्रकाशमण्डलमुच्यते । अयं सूर्यपृष्ठं सूर्यतलं वापि कथ्यते । अस्योपरि पारदर्शकवाष्पाणि सूर्यवायुमण्डलरूपेण तिष्ठन्ति, अस्माच्चाधो नास्मद्दृष्टिः प्रविशति । अस्माद् भागाद् मुख्यतया सूर्यप्रकाश उद्गच्छति, अनेनायं भागः प्रकाशमण्डलं प्रोच्यते । प्रकाशमण्डलमिदं शतक्रोशार्धस्थूलविस्तीर्णम् । अस्य पर्यन्तप्रदेशेषु प्रकाशे किञ्चिन्मान्द्यं रक्तवर्णकत्वञ्च दृश्येते ।

### ५·३११ कणचिह्नानि

दूरदर्शकेन सूर्यस्य प्रकाशमण्डलं पूर्णतया श्वेतोज्ज्वलमयन्न दृश्यते, यत्र तत्र श्यामलकणचिह्नानि श्यामललाञ्छनानि च वर्तन्ते । एतानि कणचिह्नानि वस्तुतोऽत्युष्णप्रदेशाः सन्ति । एषां तापक्रमः सामान्यपृष्ठतापक्रमात् शतसेन्टीग्रेडाधिको वर्तते । प्रायः प्रत्येकं चिह्नं ७००-क्रोशार्धविस्तीर्णं गोलाकारं दीर्घवृत्ताकारं वा दृश्यते । एषां जीवनगतिक्षणिकं जलबुद्बुदवत् प्रतीयते ।



प्रकाशमण्डले कणाः [ यरकिस-वेधशाला ]

### ५·३१२ सूर्यलाञ्छनानि

चन्द्रे कलङ्को वर्तत इति साधारणोऽनुभवो जनानाम्, परन्तु सूर्येऽपि लाञ्छनानि वर्तन्ते इत्यद्भुतो विषयः । परन्तु सूर्यलाञ्छनानि चन्द्रलाञ्छनानीव न स्थायीनि । एतानि नैसर्गीनि दृश्यन्ते, सर्वदा समूहरूपेणैव लभ्यन्ते । यदि कदाचिदेकाकि लाञ्छनं दर्शनीयतां याति,

  

तन्मूलमेव विनाशप्राप्तानां लाञ्छनानामवशेषमात्रम्। लाञ्छनसमूहे प्रायो द्वे विशाललाञ्छने, नैकानि लघुलाञ्छनानि विद्यन्ते। विशाललाञ्छनयोरेकमग्रे चलति द्वितीयञ्च सर्वेषां पश्चात्, अनयोरग्रचारि पश्चाच्चारिलाञ्छनयोर्मध्ये नैकानि लघुचिह्नानि चलन्ति।

लाञ्छनानां परिमाणमत्यधिकमपि दृश्यते। एकस्मिन् लाञ्छने विंशति-पञ्चविंशति संख्याकाः पृथिव्योऽपि प्रवेष्टुं योग्या भवन्ति ( द्रष्टव्य फोटोचित्रे लाञ्छनतुलनाया पृथिव्याः परिमाणम्। ) अचिरात् पूर्वं १५४६-तमे खिस्ताब्दे जनवरीमासस्य २९ दिनाङ्के दृष्टस्यैकस्य लाञ्छनस्य परिमाणं लम्बदिशाया ९०,००० क्रोशाधिकानि, वितानदिशायाञ्च ६०,००० क्रोशा



सूर्यलाञ्छनानि

धिकान्यासीत्। यस्मिन् समूहे लाञ्छनमिदमविद्यत, तस्य लम्बस्य २,००,००० क्रोशाधिकान्यासीत्। १९४७-तमे खिस्ताब्दे दृष्टस्य लाञ्छनसमूहस्यापि परिमाणमीदृशमासीत्।

लाञ्छनानि प्रायो गोलाकाराणि। तेषां श्यामवर्णका मध्यभागाः प्रच्छायप्रदेशाः कथ्यन्ते। प्रच्छायप्रदेशान् परितः किञ्चिद् ईषत् श्यामला उपच्छायप्रदेशा वर्तन्ते। प्रायः कतिपयानां प्रच्छायप्रदेशानामेकैवोपच्छाया दृश्यते। यदा कदाप्युपच्छायाः परितो वल्याकारप्रदेशा अवलोक्यन्ते, ये प्रकाशमण्डलादप्युज्ज्वलतराः। अत्रेदमवधारणीयं यद्यपि लाञ्छनानि प्रकाशमण्डलभूमिकायां श्यामलानि दृश्यन्ते, वस्तुतस्तान्यधानविद्युत्प्रकाशसाधनेभ्योऽत्यधिकगुणानि प्रकाशमानानि च सन्ति।

लाञ्छनानि क्षणिकान्येव। कतिपयानां जीवनं केवलं द्वित्रदिनानि, कतिपयानामेकमासं मासद्वयं वा ( अथात् तान्येकवारं द्विवारं वा पूर्णपरिक्रमणं कुर्वन्ति ), परन्तु प्रायस्तेषां जीवन

निचतुर्मासाधिकं न । लोपक्रमस्तु—प्रथममग्रचारिविशाललाञ्छन-पश्चचारिविशाललाञ्छन-मध्यवर्तिलघुलाञ्छनानि, ततः पश्चचारिविशाललाञ्छनभङ्गजनितलघुलाञ्छनानि, ततोऽन्ते अग्रचारिविशाललाञ्छनमित्येवं लुप्यन्ते । लाञ्छनानि शीघ्रगत्या वर्धन्ते, मन्दगत्या च लुप्यन्ते ।

## ५·३१३ सूर्यलाञ्छनचक्रम्

कस्मिंश्चिद् वर्षे लाञ्छनानां संख्या एतावत्यधिका भवति यत् सर्वदा सूर्यप्रकाशमण्डले नैके लाञ्छनसमूहा दर्शने लभ्यन्ते, कस्मिंश्चिद् वर्षे चैतावत्यल्पा भवति यत् कतिपयानि दिवसान्येकमपि लाञ्छनमदर्शयित्वा व्यतीतानि भवन्ति । विज्ञानविद्भिरेषा वार्षिकी गणना कृता, तया च मम एको लब्धः—प्रायः ११.२ वर्षान्तरं लाञ्छनानां सर्वाधिका बहुलता दृश्यते । इदं सूर्यलाञ्छनचक्रं कथ्यते । निम्ने दीयते सूर्यलाञ्छनसंख्याया रेखाचित्रं येन सूर्यलाञ्छनचक्रस्य सत्ता समर्थ्यते—




सूर्यलाञ्छनचक्रम्

रेखाचित्र २ वार्षिकसूर्यलाञ्छनसंख्यायाः रेखाचित्रम्

## ५·३१४ सूर्यलाञ्छनस्य वर्णच्छत्रम्

सूर्यलाञ्छनस्य वर्णच्छत्रं सूर्यवर्णच्छत्राद् भिन्नं दृश्यते । वर्णच्छत्रविश्लेषणेन निष्कर्षद्वयं लभ्यते—( १ ) सूर्यलाञ्छनानां तापक्रमः प्रकाशमण्डलतापक्रमाद् निम्नः । ४३००°K-पर्यन्तं एषां तापः । ( २ ) सूर्यलाञ्छनेषु चुम्बकीयक्षेत्राणि वर्तन्ते ।

## ५·३१५ सूर्यलाञ्छनानां चुम्बकीयक्षेत्रवत्त्वम्

'जीमन'महोदयेन वर्णच्छत्राणां परीक्षणेन ज्ञातं यत् सबलचुम्बकीयक्षेत्रोत्पादितप्रकाशकिरणानां वर्णच्छत्रे रेखा द्विधा त्रिधा वा भिन्ना भवन्ति, अर्थाद् ऊर्ध्वाधरतलस्थासु रेखासु

दन्तुरत्वमायाति। रेखाणां दन्तुरत्वस्य गणनया चुम्बकीयभेदस्य व्यवस्था ज्ञायते। सूर्यविषुवरेखा



'जीमन' रेखादन्तुरत्वम्

वर्तिसूर्यलाञ्छनानां वर्णच्छत्रेषु दन्तुरत्वमीदृशं दृश्यते, अत एव सूर्यलाञ्छनानां चुम्बकीयक्षेत्रवत्त्वं सिध्यते (उपरि दत्तं वर्णच्छत्रस्य फोटोचित्रं द्रष्टव्यम्)।

सूर्यलाञ्छनानां चुम्बकीयक्षेत्रवत्त्वं निम्नलिखिततथ्यैरपि सिध्यते—

(१) सूर्यलाञ्छनदर्शने सह पार्थिवचुम्बकीयविक्षोभा दृश्यन्ते। सूर्यलाञ्छनानां दर्शनेन सह पार्थिवचुम्बकीयविक्षोभाणां सम्बन्धो 'माउण्डर'महोदयेन सुस्थापितः।

(अ) यदि सूर्यलाञ्छनानां सङ्ख्या विपुला, विक्षोभाणां सङ्ख्यापि विपुला, यद्यल्पा तर्हि विक्षोभाणां सङ्ख्याप्यल्पा।

(आ) पार्थिवविक्षोभाणामावृत्तिकालः २७ ३ दिनानि, सूर्यलाञ्छनानामपि धुतिकालः २७ ३ दिनानि।

(इ) सूर्यलाञ्छनस्य प्रथमदर्शनस्य ३० होरानन्तरं विक्षोभा भवन्ति। अत एव सूर्याद् विक्षोभजनिताः सूर्यलाञ्छनप्रदेशाः विद्युत्कणा अनन्ताकाशमुल्लङ्घ्य भूवायुमण्डलं ३० होराभिः प्राप्नुवन्तीति प्रतीयते।

(ई) चुम्बकीयविक्षोभा अधिकतरं वसन्तसम्पाते शारदसम्पाते च भवन्ति, वसन्तसम्पाते शारत्सम्पाते च पृथिव्या लम्बसूत्रे सूर्यस्य विषुवरेखावर्तिप्रदेशाः सन्ति (द्रष्टव्यं §–१ २१ तमे दत्तं चित्रम्), तत्र च सूर्यलाञ्छनेषु चुम्बकक्षेत्राणि स्पन्दन्ते।

(२) सूर्यलाञ्छनदर्शनसमकाले आयणमण्डले परिवर्तनानि दृश्यन्ते। § २ ५१ तमे व्याख्यातं यत् पृथिव्या वायुमण्डलस्योच्चतमः स्तर आयणमण्डलमस्ति। आयणमण्डलस्यापि द्वौ स्तरौ—L-स्तरः, F-स्तरश्च। L-स्तरस्योच्छ्रयः ६० क्रोशार्धमितः। अत्र आक्सीजनवाष्पस्य व्यूहाणवो भिन्ना भवन्ति (अर्थात्तेषां विद्युत्कणा आयणाश्च स्वच्छन्दा भवन्ति), F-स्तरस्योच्छ्रयः १३० क्रोशार्धमितः, अत्र आक्सीजनवाष्पस्य परमाणवो नाइट्रोजनवाष्पस्य व्यूहाणवश्च भिन्ना भवन्ति। उच्चतरङ्गदैर्घ्यवन्तो रेडियोतरङ्गा २०० क्रोशार्धोच्छ्रयात् ३०० क्रोशार्धोच्छ्रयाद्वा प्रत्यावर्तन्ते। सूर्यलाञ्छनदर्शनेन सहायणमण्डले घनत्ववृद्धिर्दृश्यते, घनत्ववृद्ध्या रेडियोतरङ्गा दूरोच्छ्रयं न गच्छन्ति, निम्नोच्छ्रयादेव परावर्तनाद् भूमण्डले सुदूरं न गच्छन्ति, दूरवर्तिरेडियोयन्त्रेषु ध्वनिनिनादोऽस्पष्टता आयाति।

(३) उत्तरीयध्रुवसमीपवर्तिदेशेषु 'अरोरा' (ध्रुवप्रकाशः) दृश्यते। ध्रुवप्रकाशदर्शनमपि सूर्यलाञ्छनसमसंख्यमेव। ध्रुवप्रकाश आकाशे रात्रौ दृष्टः प्रकाशविशेषः। अयञ्चाकाशे नृत्यन् नवानि रूपाणि च धारयन् दर्शनेऽद्भुतो भवति।। अधो दीयेते द्वे फोटोचित्रे ध्रुवप्रकाशस्य)—



ध्रुवप्रकाशचित्रे

### ५.३२ वर्णमण्डलम्

सूर्यस्य प्रकाशमण्डलं सूर्यपृष्ठं सूर्यतलं वापि कथ्यते। अस्योपरि पारदर्शकवाष्पाणि सूर्यं वायुमण्डलरूपेण तिष्ठन्ति, अस्माच्चाधो नास्मद्दृष्टिः प्रविशति। अस्योपरि प्रत्यावर्तकस्तरो विद्यते, प्रत्यावर्तकस्तरस्योपरि च वर्णमण्डलं विद्यते, यस्योपरिस्थिते सूर्यस्य रक्तवर्णशोभा-ज्वालाशिखराणि दृश्यन्ते।

### ५.३२१ वर्णच्छत्रं सूर्यस्य

सर्वप्रथमं १६९५ खिस्ताब्दे न्यूटनमहोदयेन त्रिपार्श्वमध्यगतसूर्यकिरणानामिन्द्रधनुर्वद् वर्णच्छत्रमदर्श्यत। तत शतवर्षानन्तरं १८०२-तमे खिस्ताब्दे 'वुल्लस्टन' महोदयेन दृष्टं यद् यदि किरणा एकं सङ्कीर्णविवरमतीत्य त्रिपार्श्वमुपगच्छन्ति तर्हि सौरवर्णच्छत्रे वर्णमेखलायां श्यामरेखा दृश्यन्ते। परन्तु सर्वप्रथममासां रेखाणां नामकरणं स्थानादिनिर्णयश्च 'फ्राउनहोफर'-महोदय एव कृतवान्। एता रेखास्तन्नामानुसारं 'फ्राउनहोफर रेखाः' कथ्यन्ते।



फ्राउनहोफर रेखा

एता रेखाः सूर्यवायुमण्डलवर्तिवाष्पाणामुपस्थितेर्भवन्तीति हेतुः 'फ्राउनहौफर'महोदयस्याज्ञात आसीत् । एत निम्नसारिण्याः प्रथमस्तम्भश्च द्वितीयस्तम्भश्च 'फ्राउनहौफर'महोदयेन



सूर्यवर्णच्छनम्

दत्तौ, तृतीयश्चतुर्थश्चाधुनिकविज्ञानविदामेव कर्म । तृतीयस्तम्भे रेखाणां तरङ्गदैर्घ्यं दत्तम्, चतुर्थे च रेखाणां हेतुः ।

| फ्राउनहौफर वर्णम् | तरङ्गदैर्घ्यम्[1] | स्वरूपम् | अभिज्ञानम् |
|---|---|---|---|
| A | ७५९४ | मेखला | वायुमण्डले आक्सीजनम् |
| a | ७२१० | मेखला | वायुमण्डले जलीयवाष्पम् |
| B | ६८६७ | मेखला | वायुमण्डले आक्सीजनम् |
| C | ६५६३ | रक्तवर्णा रेखा | सूर्यस्थहाइड्रोजनम् (H α) |
| D | ५८९३ | पीतवर्णा द्विकरेखाः | सूर्यस्थसोडियमम् |
| E | ५२७० | नैका घना रेखाः | लोहं कैल्शियमश्च |
| b | ५१८४ | हरिद्वर्णा रेखाः | मैग्नेशियमम् |
| F | ४८६१ | नीलहरिद्वर्णा रेखा | सूर्यस्थहाइड्रोजनम् (H B) |
| G | ४३०८ | नीलनीललोहितरेखाः | कार्बन हाइड्रोजनयौगिकाः |
| H | ३९६९ | नीललोहिता रेखा | कैल्शियमम् (आयनीकृतम्) |
| K | ३९३४ | ,, ,, | ,, ,, |

## ५·३२२ सूर्यस्य रासायनिकतत्त्वानि

रसायनशास्त्रे ९६ सङ्ख्याकानि तत्त्वानि प्रसिद्धानि । एषा ६१ सङ्ख्याकानि सूर्ये निर्विवादतया अभिज्ञातानि, पञ्चानामुपस्थितिश्च सम्भवा वर्तते । तथापि परीक्षाविधेः परिष्कारेण सर्वाणि तत्त्वानि सूर्ये दृश्यन्त इति सम्भवमेव ।

## ५·३२३ सूर्यरश्मिविश्लेषकयन्त्रम्

सूर्यपृष्ठे कानि कानि तत्त्वानि, कियन्मात्रया च वर्तन्त इति निश्चयः सूर्यरश्मिविश्लेषकयन्त्रेण क्रियते । दूरदर्शकस्थापितसूर्यबिम्बस्याभीष्टाः किरणाः सङ्कीर्णविवरमतीत्य विपार्श्वकुल्याङ्कुप

1. तरङ्गदैर्घ्यसविङ्मानमानकेन माप्यते । प्रमाणकस्यास्य नाम 'एँग्स्ट्राम' अस्ति । एँग्स्ट्राम = १०००००००००० सेन्टीमीटरसमः ।

चैकस्मिन् पत्रे पतन्ति । तस्मिन्नेव पत्रे युगपत् सूर्यवर्णच्छत्रस्य इष्टतलस्य रेखाऽपि सङ्कीर्णे छिद्रमुल्लङ्घ्य पतति । एवं तत्त्वविशेषस्य प्रकाशकिरणेषु सूर्यस्य फोटोचित्रं गृह्यते । अत्र नील-लोहितोत्तरवर्णस्य कैल्शियम (K) रेखा, रक्तवर्णस्य हाइड्रोजनरेखा (H α) वा प्रायः प्रयुज्यते ।

सूर्यरश्मिविश्लेषगृहीतफोटोचित्रे वर्णमण्डले श्वेतचिह्नानि श्यामचिह्नानि च दृश्यन्ते । एतानि चिह्नानि आङ्ग्लभाषाया flocculi नाम्ना प्रसिद्धानि । उष्णतरवाष्पाणां पिण्डाः श्वेतचिह्नैः, शीततरवाष्पाणां पिण्डास्च श्यामचिह्नैः फोटोचित्रे प्रदर्शिता भवन्ति । 'कैल्शियम'चिह्नानि प्रायः उज्ज्वलानि सूर्यच्छत्रमूलानां समीपे दृश्यन्ते । अथ कैल्शियमरेखायां गृहीतं सूर्यस्य फोटोचित्रम्, एकं साधारणं फोटोचित्रं चेत्युभे दत्ते ।



रश्मिविश्लेषगृहीतचित्रम् साधारणफोटोचित्रम्

[ माउण्टविल्सन वेधशाला ]

### ३२४ सौरलोलज्वाला

सूर्यच्छत्रसमूहस्य प्रारम्भिकावस्थायां तस्य समीपे भयङ्करा लोलज्वाला दृश्यते ।



साधारणफोटोचित्रम् हाइड्रोजनफोटोचित्रे

सूर्यरश्मिविश्लेषकयुक्तदूरदर्शके एता वर्णमण्डलेऽत्यन्तमुज्ज्वला प्रदेशा प्रतीयन्ते। एता अकस्मात् सरभसमुत्पतन्ति, होरैककाले च शान्ता भवन्ति। लघ्वालम्बीनान् नीललोहितोत्तरकिरणान् विकिरन्ति, एते किरणाश्च ५.३१८ तमेऽनुच्छेदे वर्णितान् रेडियोविघ्नादीन् कुर्वन्ति।

### ५.३२४ सूर्योद्गतज्वालाशिखराणि

हाइड्रोजनसूर्यरश्मिविश्लेषकगृहीतफोटोचित्रे प्रायः श्यामवर्णानि दीर्घाणि चिह्नानि



सूर्योद्गतज्वालाशिखरम् (१)



सूर्योद्गतज्वालाशिखरम् (२)

दृश्यन्ते, यानि सूर्यस्याक्षभ्रमणात् सूर्यबिम्बसामीप्यं प्राप्याकाशस्य भूमिकायामुज्ज्वलानि सन्ति। एतानि सूर्योच्चतज्ज्वालाशिखराणि कथ्यन्ते। एतानि शोणितवर्णकानि पूर्णसूर्यग्रहणेऽतिसुन्दराणि प्रतीयन्ते। [ अधुना 'कोरोना-ग्राफ'यन्त्रेणान्यदापि दृश्यन्ते ( यन्त्रस्य विवरणार्थं द्रष्टव्यः § ) ] एषां फोटोचित्रद्वयं १०७ पृष्ठे द्रष्टव्यम्।

एषां विविधा भेदाः, विविधानि रूपाणि च दृश्यन्ते। 'माउण्टविल्सन'वेधशालाया-मेतानि षड्वर्गेषु स्थापितानि—

(१) सक्रियाणि सूर्योच्चतज्ज्वालाशिखराणि सामान्यतया दृश्यन्ते।
(२) उत्क्षेपात्मकानि ,, विरलतया दृश्यन्ते।
(३) सूर्यलाञ्छनविषयकाणि ,, सूर्यलाञ्छनेन सम्बद्धानि सन्ति।



सूर्योच्चतज्ज्वालाशिखराणि

[ माउण्टविल्सन वेधशाला ]

(४) घूर्णप्रभञ्जनानि ,, घूर्णमानस्तम्भा इव दृश्यन्ते ।
(५) निष्क्रियाणि ,, पूर्णतया शान्तानि दृश्यन्ते ।
(६) प्रभामण्डलीयानि ,, क्षणिकानि प्रभामण्डले दृश्यन्ते ।

### ५·३३ प्रभामण्डलम्

सूर्यस्य बाह्यतमम् अतिविरलम् आवरणं प्रभामण्डलं कथ्यते । अस्य सूर्यपृष्ठादुच्छ्रयः कतिपय-लक्षक्रोशमितः, तथाप्यस्य प्रकाशस्वल्पत्वात् दर्शनमस्य दुर्लभम् । प्रकाशोऽस्य पूर्णचन्द्रप्रकाशादपि न्यूनः, अत एव सूर्यप्रकाशे सदैवादृश्यो वर्तते । केवलं पूर्णसूर्यग्रहणे ( कोरोनाग्राफयन्त्रेण अन्यदापि ) स्वसौन्दर्यं विवृणोति । अस्यान्तर्भागः पीतवर्णः, बहिर्भागश्च मुक्तावत् शुक्लः ।

प्रभामण्डलस्य बहिर्भागः सूर्यकलङ्कानां एकादशवर्षीयचक्रे विभिन्नरूपाणि प्रदर्शयति ।



यदा सूर्यकलङ्कानां संख्या महत्तमा वर्तते तदा प्रभामण्डलमेतद् दृश्यते । ( हटस्मर न फोटोचित्रम् ) ।

परन्तु सूर्यमण्डलानाम ग्रासमध्यकाले ध्रुवप्रदेशयोर्रश्मिगा निम्न, सवप्रन्थेतु च केतुवदिव ति सूत भवति ( छायाचित्र स्थापितं फोटोचित्रम् ) ।



## ५४ सूर्यस्य प्रकाशस्तापश्च

### ५४१ प्रकाशविकिरणम्

सूर्यस्य भास्वरत्वकोटि ( § . )—२६ ७२—मिता । अथात् प्रथमकोटिकन क्षत्रमास्व रत्वापेक्षया १,२२,१८,००,००,००० गुणममस्य भास्वरत्वम् । अथ ५,००,००० पूर्णचन्द्रतार, ०००,००० गुणवच्चामाति । सूर्यस्य प्रत्येकस्माद् वर्गकोशेमीटरमितप्रदेशात् ०,००० गुण शिखाना प्रकाश इव प्रकाशो निस्सरति ।

## ५.४२ तापविकिरणम्

सूर्यः सततं महाकाशे तापं विकिरति। अस्य विकीर्णतापस्य लघुभाग एव पृथिव्या ग्रहैर्वा गृह्यते, शेषभागो महाकाशे विलीयते। पृथिव्यागतभागस्यापि भूयिष्ठांशो वायुमण्डलेन शोष्यते, अल्पभाग एव भूपृष्ठमागच्छति, तथापि नयं सूर्यतापस्य प्रखरत्वं ग्रीष्मे भृशमनुभवामः। अस्य भूपृष्ठागततापस्य मानानिर्धारणमतिदुष्करम्। तापमात्रागणनार्थं सौरस्थिराङ्को निश्चीयते।

### ५.४२१ सौरस्थिराङ्कः

सौरस्थिराङ्कः सूर्यतापस्य सा मात्रा ('कैलोरी' प्रमापकेण) या वर्गसेंटीमीटरमितभूपृष्ठभागेन मिनटैककाले लभ्यते; यदि (१) सूर्यकिरणा ऋजुतया पतेयुः, (२) वायुमण्डलं न भवेत्, (३) पृथिवी च सूर्याद् मध्यमदूरत्वे स्यात्। स्थिराङ्कनिर्णये विद्येते द्वे प्रक्रिये—प्रथमया वर्गसेंटीमीटरमितभूपृष्ठभागलब्धतापमात्रा माप्यते, द्वितीयया च वायुमण्डलकृततापशोषणं माप्यते।

प्रथमा प्रक्रियेयम्—दृश्यन्ते कतिपये पदार्थाः, ये तापं पूर्णतया शोषयन्ति। तापशोषणात्तेषु तापो जायते, [illegible] च तापमापकयन्त्रेण माप्यते, अनेन च तापविकिरणमात्रा निश्चीयते। अत्र 'पैरीहेलियोमीटर'नामकं यन्त्रं विशेषतया तापविकिरणमात्रामापने समर्थं रचितं ज्योतिर्विद्भिः।

द्वितीया प्रक्रियेयम्—तापमात्रा दिवसस्य विभिन्नकाले माप्यते। वायुमण्डलोल्लङ्घनं सूर्योदये सूर्यास्ते च सर्वाधिकम्, मध्याह्ने चाल्पतमम्; अत एव विभिन्नकालीन-लब्धतापमात्रा गणनया तुलनात्मकविधिना वायुमण्डलोल्लङ्घनजनिततापशोषणं स्पष्टं भवति। अत्र 'लैंग्ली'महोदयेन सर्वाधिकसूक्ष्मतया परीक्षणानि कृतानि; विशेषतः स्वरचितेन 'स्पेक्ट्रोबोलोमीटर'यन्त्रेण १४,८८७ फीटोच्छ्रयशालि 'माउण्ट ह्विटनी'पर्वतशृङ्गे वायुमण्डलकृततापशोषणनिश्चयं विहितः।

एवं द्वाभ्यां प्रक्रियाभ्यां निर्णीतः सौरस्थिराङ्कः १·९३ 'कैलोरी'मितो लभ्यते।

### ५.४२२ सूर्ये तापविकिरणमात्रा

सूर्यकेन्द्राद् भूकेन्द्रस्य दूरत्वं ९,२९,००,००० क्रोशार्धानि। भूपृष्ठे यदि वर्गसेंटीमीटरमितदेशे प्रतिमिनटं १·९३ 'कैलोरी'मितस्तापागमः, तर्हि सूर्यपृष्ठे वर्गसेंटीमीटरमितभागे प्रतिमिनटं कियानिति गणितेनैव गम्यते।

विज्ञानविद्भिरनेके प्रयत्नाः कृताः, परन्तु केवलं लघुमार्गेणज्ञानमेव सूर्यतापशक्तेः अद्यपर्यन्तं कृतम्।[1]

### ५.४३ सूर्यस्य तापक्रमः

तापविकिरणनियमैः पदार्थस्य तापविकिरणं लब्ध्वा तापक्रमस्य मापनं नातिदुष्करम्। नियमानां विवरणबोधाय भौतिकशास्त्रस्य पर्याप्तं ज्ञानस्यापेक्षा वर्तते, तथापि किञ्चिन्मात्रं प्रदर्श्यते—

(१) स्टेफेन नियमः। अत्र सूत्रं निम्नलिखितमस्ति—

$$\text{तापराशिः} = ५.६७२ \times १०^{-५} \times (\text{तापक्रमः})^{४}$$

[तापक्रमो निरपेक्षमापके] ४

अनेन यदि पदार्थस्य तापक्रमो द्विगुणो भवति, तापशक्तिश्च १६ गुणिता भवति।

(२) वीन-नियमः। यदि महत्तमतापविकिरणे तरङ्गदैर्घ्यं $y$ अस्ति, तर्हि

$$y = \frac{०.२८९७}{\text{तापक्रमः}} \;(\text{निरपेक्षमापके})$$

(३) प्लेङ्क-नियमः। अत्र यस्मिन्कस्मिन्नपि तापक्रमे, कस्मिन्नपि च तरङ्गदैर्घ्ये तापविकिरणमापनं शक्यम्। (सूत्रमतिदुर्बोधत्वादत्र न दत्तम्)

सूर्यतापक्रम एभिर्नियमैर्माप्यते। स्टेफेन नियमेन ५९८०° K° मितः[2], वीननियमेन ६१००° K-मितः, प्लेङ्कनियमेन च ६००° K-मितोऽस्ति। तापक्रमोऽयं बिम्बमध्यभागे लभ्यते, परन्तु विभिन्नभागेषु विभिन्नास्तापक्रमा लभ्यन्ते (सर्वेषां मध्यमानं ५७५०° K-मितमस्ति)। वर्णमण्डलस्य निम्नभागे ४५००° K मितः, प्रभामण्डले ३०००° K-मितः, सूर्यकलङ्कस्य मध्यभागे च ४६००° K मितः तापक्रमो भवति। सूर्यकेन्द्रस्य तापक्रमो महत्तमः २०,००,०००° K-मितः।

### ५.४४ तापविकिरणस्य समस्या

सूर्यः कोटिवर्षात्मकात्कालात् प्रतिसेकिण्डं $५ \times १०^{२३}$ अश्वबलसमशक्तिं विकिरति, अत एव प्रश्नोऽयं स्वाभाविको यत् कुतः इयमेतावती शक्तिः? अत्र द्वे मते प्रश्नस्यास्योत्तरं दत्तः—

(१) परमाणूनां गर्भे महती शक्तिर्निहितास्ति। 'हाइड्रोजन'सदृशानां न्यूनमानानाम्, परमाणु'सम्'पातेन चात्यधिकमात्रायामीदृशी शक्तिर्लभ्यते। परन्तु सर्वत्र तापाधिक्याद्

1. द्रष्टव्या 'धर्मयुग'नामपत्रिका १९६१ तमे खिस्ताब्दे ५ फरवरीमासस्य, यत्र नैकानि चित्राणि दत्तानि सूर्यतापविषयस्य।

२. K-चिह्नं निरपेक्षतापमापकविधौ स्थाप्यते। निरपेक्षतापमापकशून्यमापक्रमे २७३° संयुज्य सेन्टीग्रेडमापके तापक्रमो लभ्यते। यथा उदाहरणार्थं १५° K = १५ × २७३ = २८८° सेन्टीग्रेडम्।

निरन्तर परमाणुभङ्गाः स्वतो भवन्ति, असीमिता च शक्तिः प्रतिसेकिण्ड निस्सरति। सूर्ये हाइड्रोजनवाष्प पर्याप्तमात्रया लभ्यते। हाइड्रोजनपरमाणवो हेलियमपरमाणवो भवन्ति, अत्यधिकाञ्च शक्ति जनयन्ति।[1]

(२) भौतिकशास्त्रे पिण्डमात्रा शक्तिश्च पर्यायवाचिनौ शब्दौ। अत एव शक्तिविकिरणात् पिण्डमात्राहानिरवश्यम्भाविनी। सापेक्षवादेन गण्यते यत् 'ग्राम'-एकमितपिण्डमात्राया हाने २,१०,००,००,००,००,००० कैलोरीमितशक्तिर्निस्सरति। अनेन नियमेन प्रति सेकिण्ड ४,००,००,००,००० 'टन'मितपिण्डमात्राहानिर्भवति। अनुपातोऽयं दृश्यते भयावहः, परन्तु अनेनैवानुपातेन १०,००,००,००,००,००० वर्षेषु ७% पिण्डमात्राया हानिर्भवति।

# षष्ठोऽध्यायः

## ग्रहाः

### ( ग्रहविषयकसिद्धान्ताः )

[ 'किमस्मद्भूमिरेवेन सूर्यं परिक्रामति, अन्येऽपि वा पिण्डाः' इति जिज्ञासयातिप्राचीनज्योतिर्विदस्तादृशान् पञ्च ग्रहानाहुः । तेषां तादृशानाञ्च सामान्यं वर्णनम् ।]

### ६.१ ग्रहनक्षत्रयोर्भेदः

निशायां यावदाकाशस्यावलोकनं क्रियते, तावत्तत्र नीलाम्बरे रत्नानीव नैकप्रकाशबिन्दवो दृश्यन्ते । प्राकृतजनैस्ते नक्षत्राणीत्युच्यन्ते, परन्तु न ते तथा । सर्वे प्रकाशबिन्दवो नक्षत्राणि न । नक्षत्राणां मध्ये ग्रहा अपि वर्तन्ते, ये सामान्यतया नक्षत्रपुञ्जानां मध्ये स्थानपरिवर्तनेन स्वमहत्त्वं सूचयन्ति । ज्योतिर्विद्भिरिमे भेदा ग्रहनक्षत्रयोः प्राप्ताः—

( १ ) सर्वप्रथमन्तु ग्रहाश्चलाः प्रकाशबिन्दवः ( आङ्ग्लभाषायां ग्रहेभ्यो यः Planet शब्दः प्रयुज्यते, तस्य व्युत्पत्त्यर्थः 'चलः' एव ), नक्षत्राणि चाचलानि । यदत्र कोऽपि ग्रहो मेषराशौ दृश्यते, कालान्तरे स एव वृषराशौ भविष्यति, अर्थाद् ग्रहस्य विषुवांशाः क्रान्त्यंशाश्च चलाः । नक्षत्राणि सदैवैकस्मिन्नेव स्थाने तिष्ठन्ति, तेषां विषुवांशाः क्रान्त्यंशाश्च स्थिराः ।

( २ ) नक्षत्राणि सूर्य इव स्वतन्त्रपिण्डाः, तानि प्रायेण सूर्यसमानि सूर्याद् दीर्घतराणि वा । ग्रहाः सूर्यमण्डलस्याङ्गरूपाः, सूर्याद् अल्पपरिमाणकाः, सूर्याधीनाश्च; सूर्यं परितः परिभ्रमणशीलत्वात् ।

( ३ ) नक्षत्राणि निजोत्पन्नेन प्रकाशेन भान्ति, तानि सूर्य इव प्रकाशरूपाणि । ग्रहाश्च चन्द्र इव प्रकाशहीनपिण्डाः । तेषामुपरि ये सूर्यरश्मयः पतन्ति, त एव तान् अस्मान् प्रदर्शयन्ति ।

( ४ ) ग्रहाणां प्रकाशः स्थिरोज्ज्वलत्वेन भाति, परन्तु नक्षत्राणि कम्पमानतया प्रकाशन्ते ।

( ५ ) दूरदर्शकयन्त्रेण ग्रहाणां निश्चिताकारबिम्बं दृश्यते, परन्तु नक्षत्राणि महाभिवर्धनशक्तिभिर्दूरदर्शकयन्त्रैरपि केवलं देदीप्यमानबिन्दव इव दृश्यन्ते ।

( ६ ) नक्षत्राणि सूर्य इव ज्वलनशीलपिण्डाः, ग्रहास्तु चन्द्र इव उष्णत्वहीना अतिशीतलाः ( शनिगुरू प्रायेण हिममयावेव ) । तेषु यदाल्पोष्मा लभ्यते तस्य कारणं स वाभ्यन्तरिक एव, वा सूर्यात् तैः प्राप्तः ।

### ६.२ ग्रहाणां संख्या

सौरपरिवारे सन्ति सहस्रशो ग्रहाः, तेषामुपग्रहाः, धूमकेतव उल्कापिण्डाश्च । एषां मध्ये ग्रहाः पञ्च प्राचीनकालतः परिज्ञाताः । यूरोपदेशेषु मार्कोनिकाले मध्ययुगे च ते

सप्तसंख्याका आसन्। तदा 'भूः स्थिरा' इति सर्वेषां सम्मतिरासीत्। अत एव सा ग्रहेभ्यो व्यतिरिक्तैव गणिता ज्योतिर्विद्भिः। सूर्यचन्द्रौ तदा ग्रहाणां मध्ये गणितावास्ताम्। अन्ये च ग्रहा बुधशुक्रभौमगुरुशनय आसन्। भारतीयानामप्येवमेव गणनासीत्।[1]

कापर्निकसमहोदयेन भुवः सूर्यमभितो भ्रमणं प्रतिपादितम्, सूर्यश्च केन्द्रे स्थापितः। ततो भुवो ग्रहत्वं चन्द्रस्य च तस्योपग्रहत्वं निश्चितम्। तदाप्रभृति बुधशुक्रभूभौमगुरुशनयो ग्रहा इति प्रसिद्धिः।

खिस्ताब्दे १७८१-तमे शनिकक्षाबहिः स्थित एको नूतनग्रह उपलब्धो 'हर्शल'महोदयेन। तस्य नाम 'हर्शल' अथवा 'युरेनस' अस्ति। देववाण्यां वरुणनाम्नोपज्ञातोऽयम्। तदनन्तरं खिस्ताब्दे १८४६-तमे 'लेवेरिए'महोदयेन वरुणकक्षाबहिः स्थितोऽन्यो ग्रहो दृष्टः, तस्य नाम च 'नेप्च्यून' कृतम्। गीर्वाणवाण्यामयमिन्द्रनाम्ना प्रसिद्धः। अचिरात्पूर्वमेव खिस्ताब्दे १९३० तमे 'लॉवेल'महोदयेन 'प्लूटो'ग्रह इन्द्रकक्षाया बहिरुपलब्धः, संस्कृतभाषायां स एव 'कुबेर'नाम्ना प्रथितः। एवमधुना नवसंख्याका ग्रहाः—बुधशुक्रभूभौमगुरुशनिवरुणेन्द्रकुबेराः।

## ६.२१ ग्रहाणां संक्षिप्तं सामान्यवर्णनम्

बुधः—यदा कदा सान्ध्यालोके दृश्यते क्षितिजस्य समीपे प्रातःकाले पूर्वदिशि, सायंकाले च पश्चिमदिशि।

शुक्रः—अतिभासुरो ग्रहोऽयं दिवापि कदाचिद् नेत्रगोचरतां याति। सामान्यतया प्रातःकाले पूर्वक्षितिजे, सायंकालेऽपरक्षितिजे चालोक्यते।

भौमः—रक्तवर्णेनोपलक्ष्यते। भुवः समीपेऽतिभासुरः।

गुरुः—आकारे भारे च बृहत्तमो ग्रहः, अतिभासुरश्च।

शनिः—सुदूरवर्तित्वात् शनैः शनैश्चरति।

वरुणः—सुदूरस्थतया पञ्चकोणिकनभस्तुल्यः केवलं तीक्ष्णदृष्टिकेन जनेन दृश्यते।

इन्द्रकुबेरौ—दूरदर्शकयन्त्रेणैव दर्शनीयतां भजेते।

## ६.३ ग्रहाणां वर्गीकरणम्

सन्ति नैके प्रयासा ज्योतिर्विदां ग्रहवर्गीकरणविषये। प्रमुखवर्गीकरणानि दीयन्तेऽध—

(१) लघुग्रहाः, प्रधानग्रहाश्च। बुधशुक्रौ लघुग्रहौ, भौमगुरुशनिवरुणेन्द्रकुबेराः प्रधानग्रहाः। लघुग्रहाणां कक्षा भूकक्षान्तर्गता, प्रधानग्रहाणां कक्षा च भूकक्षाबहिर्गता। अत एव लघुग्रहाणां दैनन्दिनी गतिः पृथिव्यपेक्षया शीघ्रा, प्रधानग्रहाणां मन्दा।

---

1 भारतीयफलितज्योतिर्विद्यायां यो नवग्रहाणामुल्लेखस्तस्मिन् सूर्यचन्द्रबुधशुक्रभौमगुरुशनयः सराहुकेतुकाः सन्ति।

( २ ) अन्तर्ग्रहाः, बहिर्ग्रहाः । बुधशुक्रभौमा अन्तर्ग्रहाः, गुरुशनिवरुणेन्द्रकुबेरा बहिर्ग्रहाः । अन्तर्ग्रहा भुवो लघीयांसः, बहिर्ग्रहाश्च गरीयांसः । अन्तर्ग्रहा अवान्तरग्रहाणामेकस्मिन् पक्षे, बहिर्ग्रहाश्चापरे पक्षे ।

( ३ ) पार्थिवग्रहाः, मुख्यग्रहाः । बुधशुक्रभौमकुबेराः पार्थिवग्रहा भुवोऽल्पीयांसः, मुख्यग्रहा भुवो महीयांसः ।

## ६.३१ प्रमुखग्रहाणां परिक्रमणे सामान्यम्

यदि तिष्ठेत् कोऽपि जनः सौरपरिवाराद् बहिः कस्मिन्नपि नक्षत्रे, पश्येत् स सौरपरिवारस्य प्रमुखग्रहाणां परिक्रमणे नियमविशेषान् ।

( १ ) तेषां कक्षाः प्रायेण वृत्ताकाराः । यद्यपि सर्वेषां ग्रहाणां कक्षा दीर्घवृत्ताकारा, तथापि तेषामुत्केन्द्रिताऽत्यल्पमिता, अतस्तास्तावद् एव वृत्ताकाराः । केवलं कुबेरबुधयोरुत्केन्द्रिता पर्याप्ता ।

( २ ) तेषां कक्षाः प्रायेणैकस्मिन्नेव तले, अर्थात् समतल एव सर्वे ग्रहा भ्रमन्ति । कुबेरं विहाय सर्वे क्रान्तिवृत्त एव भ्रमन्ति, अर्थात् तेषां कक्षानतमत्यल्पमेव ।

( ३ ) ते सर्वे पश्चिमतः पूर्वं भ्रमन्ति । पश्चिमतः पूर्वगमनमनुगतिः कथ्यते ।

## ६.४ ग्रहाणां सूर्याद् दूरत्वम्

सौरपरिवारस्य केन्द्रे सूर्यः सर्वेषां ग्रहाणां परिचालक इव तिष्ठति । सर्वे ग्रहा गुरुत्वाकर्षणरूपरज्ज्वा सूर्यं परितो भ्रमन्ति विभिन्नदूरत्वे । सूर्याद् ग्रहस्य दूरत्वं मन्दकर्णः कथ्यते । कक्षाया दीर्घवृत्ताकारत्वाद् मन्दकर्णो न सदा समः । सर्वमन्दकर्णानां मध्यममानं तस्य ग्रहस्य मध्यमकर्णं उच्यते । सामान्यतया ग्रहस्य सूर्याद् मध्यमदूरत्वं मध्यमकर्णः ।

### 'बोडे'नियमः[1]

सूर्यस्य समीपतमो ग्रहो बुधः, तदनन्तरं शुक्रभूमिभौमगुरुशनिवरुणेन्द्रा उत्तरोत्तरं दूरतराः, कुबेरश्च दूरतमो ग्रहः । एषां दूरत्वस्पष्टीकरणाय (कण्ठस्थकरणाय) 'बोडे'-महोदयेन खिस्ताब्दे १७७२-तमे एकं सूत्रं निर्धारितम् । तेन दूरत्वक्रमानुसारं शनिपर्यन्तं ग्रहा लिखिताः[2], पुनस्तेषामधस्तात् ०,३,६,१२ अंकाः (अत्र ३,६,१२ आद्यो गुणोत्तरश्रेण्यां सन्ति) लिखितव्याः । तेषु ४ मितं संयोज्य दशभिर्विभज्य दूरत्वं लभ्यते । अत्र पृथिव्याः सूर्याद् दूरत्वमेकमितम् । तेनैवानुपातेनान्येषां ग्रहाणां दूरत्वं ज्ञेयम् । अग्रे 'बोडे'नियमेन दूरत्वक्रमो दीयते, अन्तिमपङ्क्त्यां द्वितीयस्तम्भस्थानपर्यन्तं वास्तविकमध्यमकर्णा दत्ताः ।

---

१. यद्येवं स्यात्तथापीदं यद् बोडेनियमः कण्ठीकरणाय रचितं सूत्रमात्रम् ।

२. यदा 'बोडे'महोदयेन सूत्रं निर्धारितं तदा शनिपर्यन्तमेव ग्रहा विदिता आसन् ।

## ६.५१ भगणकालः ( परिक्रमणकालः )

ग्रहेण भमण्डलपरिभ्रमणे किंवा सूर्यं परितः पूर्णपरिभ्रमणे यः कालोऽतिक्रम्यते, स तस्य भगणकालः परिक्रमणकालो वा। भगणकाल एव नाक्षत्रकालो ग्रहस्य। भगणकालः कक्षादैर्घ्याधीनः। यदि कक्षावृत्तं लघु, भगणकालोऽपि लघुः। यदि कक्षावृत्तं बृहत्, भगणकालोऽपि दीर्घः। भगणकाल मध्यमदूरत्व सम्बन्धः केपलरस्य आकर्षणशास्त्रीयतृतीयनियमेन नियतः। तेन नियमेन

$$\frac{(\text{ग्रहस्य मध्यमदूरत्वं})^3}{(\text{ग्रहस्य परिक्रमणकालः})^2} = \text{स्थिरः राशिः ।}$$

बुधस्य परिक्रमणकालः सर्वाधिकाल्पकालिकः। बुधः ८८ दिनान्येव सूर्यं परितो भ्रमति। कुबेरस्य भगणकालः सर्वाधिकदीर्घकालिकः, स प्रायः २४८ वर्षेषु सूर्यस्य परिभ्रमणं करोति।

## ६.५२ युतिकालः

यदा कोऽपि ग्रहो ( यथा भौमः ) भूपृष्ठस्थपुरुषेण सूर्यस्य पङ्भान्तरे वेधेन दृश्यते, तदा यावत्कालानन्तरं ( भौमः ) ग्रहः पुनर्भूपृष्ठस्थपुरुषेण पङ्भान्तरे दृश्यते, तावत्कालावधिः ( ग्रहस्य भौमस्य ) युतिकाल उच्यते। एवं युतिकालः सूर्यग्रहयुत्यन्तरम्।

युतिकालो ग्रहस्य भुवश्च भगणकालाधीनः। युतिकालानयने निम्ननियमः—

प्रधानग्रहयुतिकालानयनम्— $\frac{१}{\text{ग्रहयुतिकालः}} = \frac{१}{\text{भूपरिक्रमणकालः}} - \frac{१}{\text{ग्रहपरिक्रमणकालः}}$

लघुग्रहयुतिकालानयनम्— $\frac{१}{\text{ग्रहयुतिकालः}} = \frac{१}{\text{ग्रहपरिक्रमणकालः}} - \frac{१}{\text{भूपरिक्रमणकालः}}$

## ६'६१ लघुग्रहाणां दृष्टिः कलाश्च

लघुग्रहाणां चन्द्रस्येव कलानां वृद्धिक्षयौ स्तः। वृद्धिक्षयप्रक्रिया ग्रहस्य इनान्तर-परिसंख्यानायते। इनान्तरं भूपृष्ठस्थपुरुषस्य विभिन्नकाले ग्रहदर्शन सूर्यदर्शनसन्निकोणः, अर्थात् सूर्य भू ग्रह-कोणः। चित्रे सू भू-ग्र$_१$ ग्रहस्य ग्र$_१$ अवस्थायामिनान्तरम्।

लघुग्रहाणां परिक्रमणकालो वर्षाद् ( भूभगणकालाद् ) अल्पः, अत एव ते भुजोऽंशसीमगामिनः, सूर्यस्थानात् कदाचित्पूर्वे, कदाचित् पश्चिमे दृश्यन्ते।

### दृष्टिः

यदा लघुग्रहः सूर्यभुवोर्मध्ये आपतति तदा लघुयुतिः कथ्यते। यदा सूर्यो लघुग्रहभुवोर्मध्ये आपतति तदा प्रधानयुतिः कथ्यते। इनान्तरं सूर्यभूरेखया ग्रहभूरेखया सम्पन्नः कोणः, अस्य




लघु ग्रहस्य दृष्टि

महत्तमं मानं परमेशान्तरम्।
परमेशान्तरे कोणः सू-ग्र-भू=९०'।
शुक्रस्य परमेशान्तरं ४८°, बुधस्य
२८° मितमस्ति।

कलाः

लघुयुतौ लघुग्रहो न दृश्यते, तत्र तस्य अमावस्या लघुग्रहस्य अप्रकाशितभागस्य अस्माकं सम्मुखवर्तित्वात्। प्रधानयुतौ लघुग्रहः पूर्णो दृश्यते, तत्र तस्य पूर्णा कला:—पूर्णप्रकाशितभागस्य अस्माकं सम्मुखवर्तित्वात्। परमेशान्तरे चाष्टमीशकलं दृश्यते। लघुयुति परमेशान्तरमध्ये वर्धक्षकलां धरति ग्रहः, परमेशान्तर-प्रधानयुतिमध्ये एकादशीं कलां भजते ग्रहः।

५·६२ प्रधानग्रहाणां दृष्टिः कलाश्च

प्रधानग्रहाणां परिभ्रमणकालो वर्षाधिकः, अत एव ते सूर्यापेक्षया आरात्पूर्वदिशि मन्दतरं भ्रमन्त इव दृश्यन्ते। भूश्च काले काले सान्तिकायाति। तैषामिनान्तरं लघुग्रहाणामिव न सीमितम्, प्रत्युत तस्य मानं शून्यात् षड्भपर्यन्तं लभ्यते।

दृष्टिः

यदा भूः सूर्यग्रहयोर्मध्ये आपतति तदा ग्रहभान्तरं (प्रतियोगः) भवति। यदा सूर्यो भूग्रहयोर्मध्ये पतति तदा युतिः कथ्यते। यदा कोणः सूर्य भू-ग्रहः समकोणमितस्तदा त्रिभान्तरं (वृत्तपादः) कथ्यते।



प्रधानग्रहस्य दृष्टिः कलाश्च

१ परमेशान्तरमेवं निर्धार्यते परमेशान्तरम् = $\frac{\text{ग्रहस्य मध्यमसमन्दकर्णः}}{\text{भुवो मध्यमो मन्दकर्णः}}$

कला

षड्भान्तरे युतौ च ग्रहस्य पूर्णकला, पूर्णप्रकाशितभागस्य भूसम्मुखत्वात्। त्रिभान्तरे किञ्चित् कलाक्षयः, तथापि त्रयोदशीकलावद् दृश्यते ग्रहः। अथ कलाक्षयोऽपि केवलं भौमस्य, अन्येषां तु सुदूरवर्तित्वात् सदैव पूर्णा कला विद्यते। अमा न विद्यते प्रधानग्रहाणाम्।

## ६ ७ ग्रहाणां गतिः

नक्षत्राणां भूमिकायां ग्रहाणां विचित्रा गतिर्दृश्यते। कदाचित्ते नक्षत्रमण्डलानां मध्ये पूर्वदिशां गच्छन्तो दृश्यन्ते, कदाचित् पश्चिमदिशां गच्छन्ति। कदाचिच्च ते स्थिरा इव प्रतिभान्ति। एवं तेषां गतित्रयम्—वक्रा, स्थिरा, ऋज्वी च।

### ६ ७१ ऋज्वी गतिः

यथा यथा भूर्निजकक्षायां चिह्नाङ्कितदिशायां सूर्यं परितो भ्रमति, तथा तथा त्वत्वारेन सूर्यो विपरीतदिशायां भ्रमन्निव दृश्यते। सूर्य भू रेखा घटिकासूचिकाभ्रमणस्य प्रतिकूलदिशायां

भूपरिभ्रमणकक्षा ऋज्वी गतिः घटिकासूचिका

भ्रमति, गतिश्च ऋज्वी गतिरुच्यते। अत एव ज्योतिर्विद्भिर्निश्चितं यद् यदि ग्रह भू रेखा घटिका सूचिका प्रतिकूलभ्रमणं कुर्वन्ती प्रतीयते, तर्हि ग्रहस्य गतिः ऋज्वी, यदि च ग्रह भू रेखा घटिका सूचिकानुकूलभ्रमणं कुर्वती प्रतीयते, तर्हि ग्रहस्य गतिर्वक्रा।

ऋजुगतौ क्षेत्रफला उत्तरोत्तरं वृद्धिं लभन्ते, वक्रगतौ च तेषां ह्रासो दृश्यते।

### ६ ७२१ लघुग्रहस्य वक्रगतेर्व्याख्या

लघुग्रहस्य ( बुधस्य शुक्रस्य वा ) कक्षावृत्तं भूकक्षावृत्ताद् लघुतरम्, अत एव तस्य गतिर्भूमेर्गतेर्द्रुततरा। यदि लघुग्रहो बुधोऽस्ति लघुयुतौ स्थितः (प्रथमचित्रे तत्कालीना स्थितिः 'भू' 'बु' अस्ति), बुध भू रेखा द्वितीयचित्रे भू बु अस्ति। यदा भू स्वकक्षायां भू१ स्थाने भविष्यति, बुधश्च बु१ स्थाने। बुधभूरेखा द्वितीयचित्रे बु१ भू१ भविष्यति। शनैः शनैः भू कक्षायां भू२ भू३ भू४ भू५ स्थानेषु भविष्यति, बुधश्च बु२ बु३ बु४ बु५ स्थानेषु। बुध भू रेखा द्वितीयचित्रे बु२ भू२, बु३ भू३, बु४ भू४, बु५ भू५ भविष्यति। पूर्वानुच्छेदे वर्णितं यद् ग्रहस्य गतिः ऋज्वी वा आनुकूल्यप्रातिकूल्यभूरेखायाः परिवर्तनस्य दिशया निर्धार्यते। अत एव द्वितीयचित्रे घटिका रेखेत्यस्मात् विज्ञायते। भूबु भू१बु१ रेखा भू२बु२ रेखया घटिकासूचिका

नुकूलदिशायां परिवर्त्तनमस्ति, एवमेव भूबु$_{1}$-भूबु$_{2}$ रेखयोः भूबु$_{2}$ रेखायाः। अत एव ग्रहस्य गतिः बुबु$_{1}$-मध्ये बु$_{1}$ बु$_{2}$-मध्ये च वक्रा। भूबु$_{2}$-भूबु$_{3}$-रेखयोः भूबु$_{3}$-रेखाया घटिकासूचिकाप्रतिकूलदिशायां परिवर्त्तनमस्ति, एवमेव भूबु$_{3}$ भूबु$_{4}$-रेखयोः भूबु$_{4}$-भूबु$_{5}$-रेखयोः क्रमशः भूबु$_{4}$ भूबु$_{5}$-रेखयोः। अत एव ग्रहस्य गतिः बु$_{3}$-बु$_{5}$ मध्ये ऋज्वी अस्ति।







लघुग्रहस्य वक्रगतेर्व्याख्या

६.७२२ प्रधानग्रहस्य वक्रगतेर्व्याख्या

प्रधानग्रहस्य ( भौमगुरुशन्यादीनां ) कक्षावृत्तं भू-कक्षावृत्ताद् बृहत्तरम्, अत एव तस्य गतिर्भुवो गतेर्मन्दतरा। यदि भौमः प्रधानग्रहोऽस्य प्रतियोगे स्थितः, प्रथमचित्रेऽङ्कनीया

प्रधानग्रहस्य वक्रगतेर्व्याख्या






स्थितिः क्रमशः 'भू' 'भौ' अस्ति, भौम भू-रेखा द्वितीयचित्रे भू भौ अस्ति । ततो भूः स्वकक्षायां भू$_{१}$ स्थाने भविष्यति, भौमश्च भौ$_{१}$-स्थाने । भौम भू रेखा द्वितीयचित्रे भौ$_{१}$ भू भविष्यति । शनैः शनैः भूः स्वकक्षाया भू$_{२}$ भू$_{३}$ भू$_{४}$ भू$_{५}$ स्थानेषु संचरति, भौमश्च भौ$_{२}$ भौ$_{३}$ भौ$_{४}$ भौ$_{५}$ स्थानेषु । भौम भू-रेखा च द्वितीयचित्रे क्रमशः भौ$_{२}$ भू$_{१}$ भौ$_{३}$ भू$_{१}$ भौ$_{४}$ भू$_{१}$ भौ$_{५}$ भू भविष्यति । पूर्वानुच्छेदवद् द्वितीयचित्रे लिखिता रेखा एव विचार्याः । भूभौ भूभौ$_{१}$-रेखयोः भू-भौ$_{१}$ रेखाया घटिकासूचिमनुकूलदिशायां परिवर्तनमस्ति, एवमेव भूभौ$_{१}$-भूभौ$_{२}$ रेखयोः भूभौ$_{२}$-रेखायाः । अत एव ग्रहस्य गतिः भौ भौ$_{१}$-मध्ये भौ$_{१}$ भौ$_{२}$ मध्ये च वक्रा । भूभौ$_{२}$ भूभौ$_{३}$-रेखयोः भूभौ$_{३}$-रेखा घटिकासूचिप्रतिकूलदिशाया परिवर्तनमस्ति, एवमेव भूभौ$_{३}$-भूभौ$_{४}$-रेखयोः, भूभौ$_{४}$ भूभौ$_{५}$-रेखयोः क्रमशः भू भौ$_{४}$-रेखायाः, भू$_{५}$ भौ रेखायाः । अत एव ग्रहस्य गतिः भौ$_{२}$-भौ$_{५}$ मध्ये ऋज्वी अस्ति ।

## ६.७२३ स्थिरबिन्दवः

प्रधानग्रहस्य

प्रधानग्रहस्य भ्रमणमधुना प्रधानयुतितो विचार्यते । प्रधानयुतेः पश्चाद् ग्रहो नक्षत्राणां भूमिकायां पूर्वदिशायां चलति, विपुलांशाश्चास्य क्रमशो वर्धन्ते । किञ्चित् कालानन्तरं पूर्वगादानन्तरं

तस्य प्रतीयमाना गतिर्मन्दा मन्दतरा च भवति । तत्र एकस्मिन् बिन्दुविशेषे गतिः शून्यमिता भवति, ग्रहश्च कतिपयदिवसैः स्थिरो दृश्यते । बिन्दुविशेषोऽयं 'स्थिरबिन्दु' इत्युच्यते । स्थिरबिन्दोः

पश्चाद् ग्रहो न तारामण्डले पश्चिमदिशाया चलति, विषुवांशाश्चास्य क्रमशो हीयन्ते। प्रतियोगे वक्रभ्रमणस्य मध्य भवति। तत एकोऽन्यो बिन्दुरागच्छति यत्र वक्रगमनं समाप्तं भवति, ग्रहश्चाचलो दृश्यते। अयं बिन्दुरपि स्थिरबिन्दुरुच्यते ( एवं ग्रहपरिक्रमणमार्गे एकस्मिन् युतिकाले द्वौ स्थिरबिन्दू भवतः )। ततो ग्रहः पूर्वदिशायां चलति, विषुवांशाश्च वर्धन्ते।

लघुग्रहस्य

लघुग्रहस्य गतिः पूर्ववत्। प्रथमस्थिरबिन्दुः परयोगान्तरस्य पश्चाद् भवति। लघुयुती वक्रभ्रमणस्य मध्यं भवति। ( द्रष्टव्यं १२३ पृष्ठस्य चित्रम् )।

## ६.८ ग्रहगतिविषयकसिद्धान्ताः

यूरोपीयदेशेष्वाधुनिकसिद्धान्तस्य पूर्वमनेके सिद्धान्ताः काले काले प्रचलिता आसन्। ग्रहाः खगोले निजगत्यापि चलन्ति ( नक्षत्राणि केवलं खगोलेन सह चलन्ति, खगोलश्च पूर्वतः पश्चिमं गच्छति ) इति प्रत्ययमासीत् सर्वेषाम्। परं यदि तेषां भूकेन्द्रिकवृत्तेषु भ्रमणं स्वीकृतं स्यात्तर्हि तेषां वक्रगतिः ( द्रष्टव्यः पूर्वानुच्छेदः ) अव्याख्याता भवेत्। अत एव विभिन्नज्योतिर्विद्भिर्विभिन्नसिद्धान्तेन गतिर्व्याख्याता। अत्र 'टालेमी'सिद्धान्तोऽतिप्रसिद्ध आसीत्।

### ६.८१ 'टालेमी'सिद्धान्तः

गलेमीमहोदयस्य मतं १४० तमे खिस्ताब्दे सर्वप्रथमं प्रचलितमभवत्, प्रायश्चतुर्दश

टालेमी सम्मत-सौरपरिवार

शतकैः सम्मानित एवाभवत्। टालेमीमहोदयस्य मतेन पृथिवी ह्यचला, सूर्यादयस्तां परितो भ्रमन्ति। प्रत्येकं ग्रहस्य त्वेकं मध्यवृत्तमस्ति, परन्तु ग्रहो मध्यवृत्ते न भ्रमति। स एकस्मिन् वृत्ते (मन्दोच्चाख्ये) भ्रमति, वृत्तस्य केन्द्रञ्च मध्यवृत्ते भ्रमति। सूर्यचन्द्रयोर्मन्दोच्चं वृत्तं न वर्तते। शुक्रबुधयोरेव मध्यवृत्ते सूर्यस्य मध्यवृत्तान्तर्वर्तिनी। तयोर्मन्दोच्चवृत्तकेन्द्रस्य परिभ्रमणकालः सूर्यपरिक्रमणकालसमो वर्षैकमितः, परन्तु तयोर्मन्दोच्चकेन्द्रे एवं भ्रमतो यत् ते भूसूर्यरेखायां तिष्ठतः। भौमगुरुशनीनां मध्यवृत्तानि सूर्यस्य मध्यवृत्ताद् बहिः सन्ति, परं तेषां ग्रहमन्दोच्चकेन्द्र-रेखा सदैव सूर्यभूरेखायाः समानान्तरा वर्तते।

'टालेमी'महोदयस्य मन्दोच्चवृत्तप्रधानमतेन ग्रहाणां चक्रगतिः सफलतया व्याख्यायते (द्रष्टव्यमधश्चित्रम्)। यथा यथा ग्रहाणां वेधेषु यथार्थता आगच्छत्, तथा तथा 'टालेमी'-मते न्यूनता दृष्टा, तथा तथा च शीघ्रोच्चवृत्तादीनां कल्पना कृता। अधुना मतमिदं पूर्णतोऽस्तः कृतमाकर्षणसिद्धान्तमूलकव्याख्यया।



वक्रगतिव्याख्या

## ६.८२ केप्लरनियमाः

अधुना त्विदं सुनिश्चितमेव यत् सौरमण्डले मध्यस्थाने सूर्यो वर्तते, सर्वे ग्रहाश्च तमभितो भ्रमन्ति। तेषां परिभ्रमणहेतुराकर्षणशक्तिरेव। (आकर्षणशक्तेः सर्वपरिचितमुदाहरणं भुवो गुरुत्वाकर्षणशक्तिरस्ति, यया आकृष्टाः सर्वे पिण्डा उच्चस्थानादधो निपतन्ति)। ग्रहा रज्जुकोटिबद्ध-पिण्डा इव भ्रमन्ति। रज्जुः मध्यमकर्णमेव।

ग्रहगतिविषयकनियमनिर्धारणे सर्वाधिकः सफलः 'केप्लर'महोदयः। स 'टाइकोब्राहे'-महोदयस्य वेधफलानि गणितैरविश्लेषणैः संस्कृत्य त्रीन् महत्त्वपूर्णनियमान् प्रत्यपादयत्।

(१) प्रथमो नियमः—ग्रहाणां कक्षा दीर्घवृत्ताकाराः, सूर्यश्च अन्यतरनाभौ तिष्ठति।[1]

(२) द्वितीयो नियमः—स्वकक्षायां ग्रहस्यैवं गतिर्यद् ग्रह कक्षा केन्द्र रेखा समकाले समक्षेत्राण्याक्रामति।

(३) तृतीयो नियमः—परिक्रमणकालवर्गमानं मध्यमकर्णस्य (सूर्याद् मध्यमदूरत्वस्य) घनमानस्यानुपाति। अर्थात्

$$\frac{(\text{परिक्रमणकालः})^2}{(\text{मध्यमदूरत्वम्})^3} = \text{स्थिरो राशिः}$$

## ६.८३ ग्रहकक्षावृत्तस्य तत्त्वानि

महाकाशे ग्रहस्य स्थितिं ज्ञातुं ग्रहकक्षाञ्च निश्चेतुं सप्ततत्त्वानामावश्यकता दृश्यते। एतानि तत्त्वानि सचिह्नानि दीयन्तेऽधस्तात्—

(१) कक्षावृत्तस्य बृहदक्षार्धस्य मानम् (बृहदक्षः = मध्यमकर्णः) 'a'

(२) कक्षावृत्तस्य उत्केन्द्रिता 'e'

(३) कक्षातलस्य क्रान्तिवृत्ताद् नमनम् ( = कक्षानमनम्) 'i'

(४) उत्तरसंपातस्य भोगांशाः 'A'

(५) नीचस्य भोगांशाः 'W'

(६) कालविदोषस्य स्थितिः (भुक्तांशाः) 'T'

(७) परिक्रमणकालः 'P' अथवा मध्यमगतिः 'n'



ग्रहकक्षातत्त्वानि

1. द्रष्टव्यः § यत्र दीर्घवृत्तरचना दृष्टा

एषु तत्त्वेषु मध्ये प्रथमद्वितीयाभ्यां कक्षावृत्तस्याकारः परिमाणञ्च निश्चीयेते, तृतीयचतुर्थाभ्यां कक्षातलं निश्चीयते, पञ्चमेन कक्षातले बृहदक्षस्य दिशा निश्चीयते। षष्ठसप्तमाभ्यां कक्षावृत्ते तात्कालिकस्थितिर्ग्रहस्य लभ्यते।

१९५९ तमस्य ख्रिस्ताब्दस्य जनवरीमासस्य प्रथमदिनाङ्के यानि ग्रहकक्षातत्त्वानि तान्यत्र दीयन्ते।




सूर्यस्य परिमाणम्

६.८४ ग्रहकक्षावृत्ततत्त्वानि

| | मध्यमदूरत्वम् 'a' ( भूः = १ ) | मध्यमगतिः 'n' ( विकलाः ) |
|---|---|---|
| बुधः | ०·३८७०९९ | १४७३२·४२० |
| शुक्रः | ०·७२३३३२ | ५७६७·६७० |
| भूः | १·०००००० | ३५४८·१९३ |
| भौमः | १·५२३६९१ | १८८६·५१९ |
| गुरुः | ५·२०२८०३ | २९९·१२८ |
| शनिः | ९·५३८८४३ | १२०·४५५ |
| वरुणः | १९·१८१९६२ | ४२·२३३ |

| | | |
|---|---|---|
| इन्द्रः | ३०·०५७७३२१ | २१·५३२ |
| कुबेरः | ३९·५१७७४ | १४·२८३ |

| | उत्केन्द्रिता | कक्षानमनम् ( परमपरः ) i | | | उच्चभोगांशाः | | |
|---|---|---|---|---|---|---|---|
| बुधः | ०·२०५६२५७ | ७° | ००′ | १४·१″ | ७६° | ४६′ | १५·१″ |
| शुक्रः | ०·००६७९४० | ३ | २३ | ३९·१ | १३० | ५७ | ०७·३ |
| भूः | ०·०१६७२७६ | — | — | — | १०२ | ११ | ०१·४ |
| भौमः | ०·०९३३६४४ | १ | ५० | ५१·८ | ३३५ | १४ | ५६·६ |
| गुरुः | ०·०४८४२८८ | १ | १८ | २०·१ | १३ | ३६ | ४१·६ |
| शनिः | ०·०५५६१५६ | २ | २९ | २४·३ | ९२ | ११ | ०१·९ |
| वरुणः | ०·०४७१९८५ | ० | ४६ | २२·९ | १६९ | ५६ | ४५·८ |
| इन्द्रः | ०·००८५७२७ | १ | ४६ | २६·८ | ४४ | १४ | २०·६ |
| कुबेरः | ०·२४८६४२८ | १७ | ०८ | ३८·४ | २२१ | १० | ३०·२ |

| | ध्रुवकाः T | | | संपातस्य भोगांशाः Ω | | |
|---|---|---|---|---|---|---|
| बुधः | ३° | ३१′ | ३१·७१ | ४७° | ४८′ | ३५·०″ |
| शुक्रः | ३५३° | ३१ | ३२·९५ | ७६ | १७ | ०१·० |
| भूः | १००° | ०७ | ३८·५१ | — | — | — |
| भौमः | २१३ | ०५ | ५७·५३ | ४९ | ११ | ०५·५ |
| गुरुः | १३८ | २२ | ४४·५१ | १०० | ०० | १४·२ |
| शनिः | २११ | ४३ | ५१·४० | ११३ | ११ | २१·२ |
| वरुणः | १२४ | ०६ | ३०·८९ | ७३ | ४६ | ३३·१ |
| इन्द्रः | २०८ | ०८ | ४७·९५ | १३१ | १७ | ४४·५ |
| कुबेरः | १३७ | ३८ | ०८·०० | १०९ | २८ | ००·२ |

## विशेषद्रष्टव्यानि

§ ५·१–§ ५·२ नक्षत्राणां भूमिकायां ग्रहाणां चन्द्रमसेः प्रत्यक्षं भेदकथनात्। तेषां संख्या पञ्च आसीदिति पदाविद् ऋग्वेदस्य निम्नदत्तया ऋचा सूच्यते—

अमी ये पञ्चोक्षणो मध्ये तस्थुर्महो दिवः ।
देवत्रा नु प्रवाच्यं सध्रीचीना नि वावृतुर्वित्तं मे अस्य रोदसी ॥ ( १·१०५·१० )

गुरोर्नाम स्फुटतया दृश्यते ऋग्वेदे—

बृहस्पतिः प्रथमं जायमानो महो ज्योतिषः परमे व्योमन् । ( ४·५०·४ )

शुक्रस्य नामान्तरो 'वेन' इति शब्दो विद्यते निम्नायामृचि—

अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने । ( १०·१२३ )

अर्वाग्ज्योतिषे तु स्पष्टतया ग्रहाणामुल्लेखो दृश्यते—

आदित्यः सोमो भौमश्च तथा बुधबृहस्पती ।
भार्गवः शनैश्चरश्चैव एते सप्त दिनाधिपाः ॥

राहुकेत्वोस्तु प्रथमा गणना याज्ञवल्क्यस्मृतौ लभ्यते—

सूर्यः सोमो महीपुत्रः सोमपुत्रो बृहस्पतिः ।
शुक्रः शनैश्चरो राहुः केतुश्चैव ग्रहाः स्मृताः ॥
( आचाराध्याये )

एते नवसंख्याका ग्रहा अद्यापि पूर्ववद् गण्यन्ते ।

§ ६·४, ६·२१, ६·८ ग्रहाणां भगणकालाः, भुवो दूरत्वानि, गतिविषयकनियमाः सर्वेषु सिद्धान्तग्रन्थेषु पठिताः सन्ति । भारतीयाः प्राचीनकालिका ज्योतिर्विदो गतिविषयकसिद्धान्ताभिज्ञा आसन्निति न कोऽपि सन्देहः । सिद्धान्तैः स्वीकृता गणनापद्धतिः यूरोपीयमहोदयेन स्वीकृतायाः पद्धतेः पर्याप्तं भिन्नेति सुविदितमेव । सिद्धान्तशिरोमणिदत्तभगणकालादय आधुनिकज्यौतिषपाश्चात्यपठित-भगणकालादिभ्यो न भिन्नाः (बुधभगणकाले ०·००००८% मितमन्तरम्, भौमभगणकाले शुक्रभगण-काले च ०·०००१% मितमन्तरम्, गुरुभगणकाले च ०·०००८% मितमन्तरम् मया गणितम्) चन्द्र-शेखरसामन्तगणितभगणकालादयस्तथैव एव मन्तव्याः ।

§ ६·७ ग्रहाणां वक्रगतिः, ऋजुगतिरित्यादयो विदिता आसन् । सूर्यसिद्धान्ते त्वष्टधा गतिरुक्ता—

वक्रानुवक्रा कुटिला मन्दा मन्दतरा समा ।
तथा शीघ्रतरा शीघ्रा ग्रहाणामष्टधा गतिः ॥
( सूर्यसिद्धान्तपूर्व० )

महाभारतकालेऽपि वक्रगतिर्ज्ञाताऽऽसीत् यथा—

प्रत्यागत्य पुनर्जिष्णुर्जघ्ने संशप्तकान् बहून् ।
वक्रातिवक्रगमनादङ्गारक इव ग्रहः ॥
( कर्णपर्व अ०२० )

# सप्तमोऽध्यायः

## ग्रहाः

[ पूर्वाध्यायवर्णितसौरमण्डलग्रहाणामत्र विस्तरतो वर्णनम् ]

### ७.१ बुधः

सूर्यस्य समीपतमो ग्रहो बुधः पुरातनकालात्परिचित आसीद् ज्योतिर्विदाम्। कक्षाप्यस्य चास्य लघुतमम्, दैनिकगतिश्चात एव सर्वाधिका ग्रहाणाम्। परिमाणविषये मुख्यग्रहाणामयं लघुतमः, परन्तु दूरेन्द्रितास्य पर्याप्ता २ मिता। अस्यैवाक्षभ्रमणकालो भगणकालसमः।

### ७.११ दर्शनम्

सूर्यातिसमीपवर्तित्वात् सूर्यरश्मयो बहुलतया परावर्तन्ते, ग्रहश्चात्युज्ज्वलः शून्यकोटिक नक्षत्रमिव प्रकाशते। ज्योतिर्विद्भिर्दिवापि सूर्यकिरणान् यन्त्र विशेषेण प्रतिरोध्य, दूरदर्शकयन्त्रेण विलोक्यतेऽयम्। परन्तु सर्वदास्य दर्शनं न सुलभम्। प्रसिद्धो ज्योतिर्विद् 'कापर्निकस' महोदयोऽस्य दर्शनेच्छया सह पञ्चत्वं गतः, यतस्तस्य निवासस्थाने क्षितिजं प्रातःकाले सन्ध्याकाले वा सदैव कुज्झटिकापूर्णमेवासीत्। अयं ग्रहो यदा कदा दृश्यते, दर्शनमप्यल्पकालिकमेव, यतः सूर्यसामीप्यात् दाकाशे सूर्यसमीपमेवास्य दर्शनं सम्भवम्, तच्च सूर्यकिरणौज्ज्वल्याद् दुष्करम्। अस्य सूर्यात्कोणीयान्तरं १८-अंशाधिकम् २८-अंशाल्पम्, अत एव सूर्योदयात् किञ्चित्पूर्वमुदेति, सूर्यास्तात् किञ्चित् पश्चादस्तमेति।

सूर्योदये कतिपयदिवसानि पश्चपरमेणान्तरकाले, सूर्यास्ते कतिपयदिवसानि पूर्वपरमेणान्तरकाले च दृश्यतेऽयम्। युतिकालस्य ११६ मितदिवसत्वाद् वर्षे त्रीणि पश्चपरमेणान्तराणि, त्रीणि च पूर्वपरमेणान्तराणि सम्भवन्ति, परन्तु सर्वेषु परमेणान्तरेषु न सर्वोचितप्रेक्षणीयता। क्रान्तिवृत्तं वसन्ते क्षितिजस्य समीपतमम्, शरदि क्षितिजाद् दूरतमम्, अत एव वसन्ते पूर्वपरमेणान्तरे पश्चिमदिशायां सूर्यास्तकाले, शरदि पश्चपरमेणान्तरे पूर्वदिशायां सूर्योदयकाले अस्य तुलनया दर्शनमनुकूलतमं सुलभतमञ्च। तत्र ८–१२ कोणिकलापर्यन्तमिता भाति।

### ७.१२ परिक्रमणम्

बुधः सूर्यं परितः ८८ दिनेषु (२४०८१ वर्षभाग) परिभ्रमति, अर्थादस्य परिक्रमणकालः ८८ दिनानि। दीर्घवृत्ताकारकक्षाया मध्यमकर्णः ३,६०,००,००० क्रोशार्धानि, सूर्यादस्य दूरत्वमल्पतमं २,८०,५०,००० क्रोशार्धानि, दीर्घतमदूरत्वञ्च ४,३३,५०,००० क्रोशार्धमितम्।

---

१ १९९९-तमे खिस्ताब्दे सर्वाधिकानुकूलपश्चपरमेणान्तरं मार्चमासस्य ३१-तम दिनाङ्के, दिसम्बरमासस्य २५-तमे दिनाङ्के च भवति स्म।

दीर्घवृत्तस्योत्केन्द्रता ·२०६ मिता। कक्षाया वेगः २३ क्रोशार्धानि प्रतिनिमेषमस्ति, नीचे वेगः ३६ क्रोशार्धानि प्रतिनिमेषं भवति। दृश्यबिम्बव्यासस्य दीर्घतमं मानं १३″ मितम्, अल्पतमं मानं ५″ मितमस्ति। मध्यममानञ्च ६″·६८ विकलामितमस्ति। वास्तविकव्यासश्च गणनया ३११० क्रोशार्धमित आगच्छति।

### ७.१३ युतिः कलाश्च

युतिकालः ११६ दिनानि[1] लभ्यते। लघुयुते २२–दिनानि पूर्वं पश्चाद् वा परमेणान्तरं भवति। परमेणान्तरस्य ३३–दिनानि पूर्वं पश्चाद् वा प्रधानयुतिर्दृश्यते। प्रधानयुतौ पूर्णाः कला लभ्यन्ते, परमेणान्तरयोरष्टमी कला। लघुयुतावमा वर्तते। यथा यथा बुधः सूर्यं परितो भ्रमति तथा तथा चान्द्रकला इव कलाः प्राप्नोति। यदायं प्रधानयुतौ तदा कलास्तु पूर्णाः, परन्तु दूरत्व परमेणान्तरापेक्षयात्यधिकम्, अत एव भास्वरत्वं परमेणान्तरापेक्षया नाधिकम्। अत एव भास्वरत्व मस्य कलानां न्यूनाधिकमानाया नाधीनम्।

### ७.१४ अक्षभ्रमणम्

बुधमण्डले कानिचन धूमिलचिह्नानि दृश्यानि सन्ति। एतासपरिवर्तनशीलत्वाच्चन्द्रस्येव (द्रष्टव्य § ३·४) बुधस्याप्यक्षभ्रमणकालः परिक्रमणकालसम इति सिद्धिः। अस्य



जून १७ जून ११ जून १२

१९३४ तमे खिस्ताब्दे पूर्वपरमेणान्तरे बुधः

[ लवेल वेधशाला ]

तथ्यस्य प्रमाणमचिरात्पूर्वं माउण्टविल्सन वेधशालायामुपलब्धम्। अस्त्येक सूक्ष्मतापमापकयन्त्रे

---

1. $\frac{1}{\text{बुधयुतिकालः}} = \frac{1}{\text{बुधभगणकालः}} - \frac{1}{\text{पृथिवीभगणकालः}}$

$= \frac{1}{८८} - \frac{1}{३६५} = ·०११३६ - ·००२७४ = ·००८६२$

अत एव बुधयुतिकालः $= \frac{1}{·००८६२} = ११६$ दिनानि।

च्युतौ रहस्यपूर्णैरासीद् यावदचिरात्पूर्वम् 'आइन्स्टाईन'महोदयेन सापेक्षवादेनाप्यस्या सुष्ठु कारणं व्याख्यातम् ।



### ७१६ बुधस्य संक्रमणानि



बुधस्य सूर्यबिम्बे संक्रमणम् [ मिनिच वेधशाला ]

साधारणतो लघुग्रहौ (बुधशुक्रौ) लघुयुतौ सूर्यस्य किञ्चिद् उपर्यधो वा कक्षाया भ्रमत कक्षागमनत्वात्[1], परन्तु यदि पृथिवी तयो क्रान्तिसम्पाते तिष्ठति तर्हि तौ संक्रमणं कुर्वन्तौ दृश्येते, अर्थात् सूर्यबिम्बे तौ बिन्दुरूपेण गच्छन्तावलोक्येते । इदं ( चन्द्रकृतसूर्यग्रहणमिव ) ग्रहणं नोच्यते, यतो बुधबिम्बं शुक्रबिम्बं चाल्पमितम्, न तेन सूर्याच्छादनं सम्भवम् । अत एव सूर्यमण्डले केवलं सूर्यव्यासस्य ... भागव्यासमितमेकं श्यामं बिम्बं वीथ्यगत्या चलद् दृश्यते । (अवलोकनीयमत्रोपरि दत्तं चित्रम् ) ।

पृथिवी बुधस्य क्रान्तिसम्पातमध्यतो मईमासस्य नवमे दिनाङ्के, नवम्बरमासस्य नवमे दिनाङ्के च गच्छति । अत एव यदि लघुयुति ५ मईतः ११ मईपर्यन्तं ५ नवम्बरतः १५ नवम्बरपर्यन्तं वा भवति, तर्हि संक्रमणानि दृश्यन्ते । एकस्मिन् खिस्तीयशतके प्रायेण त्रयोदश संख्याकानि संक्रमणानि लभ्यन्ते । बुधसंक्रमणानि दूरदर्शकं विना दृष्टिपथं नायतरन्ति । अधो बुधसंक्रमणानां दिनाङ्का दीयन्ते—

| दिनाङ्क | मास | खिस्ताब्द |
|---|---|---|
| १४ | नवम्बर | १९०७ |
| ७ | नवम्बर | १९१४ |
| ७ | मई | १९२४ |

---

1 बुधकक्षायाम ... ।

| दिनाङ्कः | मास. | खिस्ताब्दः |
|---|---|---|
| ९ | नवम्बर | १९२७ |
| ११ | नवम्बर | १९४० |
| १४ | नवम्बर | १९५३ |
| ५ | मई | १९५७ |
| ७ | नवम्बर | १९६० |
| ८ | मई | १९७० |
| ९ | नवम्बर | १९७३ |
| १२ | नवम्बर | १९८६ |
| ५ | नवम्बर | १९९३ |
| १५ | नवम्बर | १९९९ |

## शुक्रः

बुधं विहाय शुक्रः सर्वेषां ग्रहाणां समीपतमः सूर्यस्य। पुरातनकालादयं परिचितः सर्वेषां सर्वत्र। सायंकालीन[1] प्रातःकालीन[2]-तारकानाम्ना प्रसिद्धोऽयमासीद् भारतदेशे पाश्चात्त्यदेशेषु च। ग्रहोऽयं सर्वाधिकोज्ज्वलत्ववान्। अस्य चाक्षुषकान्तिः −४.३ मिता (द्रष्टव्यः §), परन्त्वस्यान्तर्भागस्तत्समेव विवरणानामध्ययने न भवम्।

### ७.२१ सूर्यं परितः परिक्रमणम्

शुक्रः सूर्यं परितः २२४.७ दिनेषु (७२३३ सांपातिके वा) परिभ्रमति, अर्थादस्य परिक्रमणकालः २२४.७ दिनानि। अस्य दीर्घवृत्ताकारकक्षाया मध्यमदूरी ६,७२,००,००० क्रोशार्धानि, उत्केन्द्रिता चास्य सौरमण्डले न्यूनतमा केवलं ·००७ मिता। कक्षानमनञ्च ३°२४' मितम्। दृश्यबिम्बव्यासमानमेतावदधिकतमं ६७ विकलापर्यन्तम्। वास्तविकव्यासश्च ७,६०० क्रोशार्धानि लभ्यते। कक्षायां वेगः प्रायः २२ क्रोशार्धानि प्रतिसेकण्डमस्ति।

### ७.२२ दृष्टिः कलाश्च

युतिकालः ५८४ दिनानि[3]। यतः पञ्च युतिकाला अष्टवर्षसमाः, अतः एतावद्वर्षान्तरं शुक्रस्य पूर्ववद् रूपाणि दृश्यन्ते। न्यूनयुतेः ७१ दिनानि पूर्वं पश्चाद् वा परमेयान्तरं भवति। परमेयान्तरेऽस्य सूर्यात् कोणीयदूरत्वम् ४८ अंशमितं भवति। तदैव प्रेक्षणीयता सुलभा विद्यते, यतः शुक्रः सूर्यास्तात् पश्चात्, सूर्योदयात् पूर्वं वा होराश्रयपर्यन्तं दृश्यते।[4]

---

१. 'हेस्पेरस' नाम्ना—Εσπερος (Hesperus)

२. 'फास्फोरस' नाम्ना— Φωσφόρος (phosphorus)

३. $$\frac{1}{\text{शुक्रयुतिकालः}} = \frac{1}{\text{शुक्रपरिक्रमणकालः}} - \frac{1}{\text{पृथिवीपरिक्रमणकालः}}$$

४. ईदृशी स्थितिः १९२६ तमे खिस्ताब्दे १२ जनवरी २१-तमान्ते आसीत्।

चन्द्रस्य बुधस्य चेव शुक्रस्यापि कला दृश्यन्ते। तासां वेधेन सुलभदर्शनं यतः साधारणं दूरदर्शकमपि कलाना न्यूनाधिक्यं प्रकटीकरोति। लघुयुतौ शुक्रः सम्पूर्णकलां भजते, परन्तु शुक्रस्य लघुयुतौ समीपवर्तित्वात् सम्पूर्णकला पर्याप्ता दीर्घाकारा दृश्यते (अवलोकनीयमत्र फोटोचित्रम्)। प्रधानयुतौ पूर्णाः कला दृष्टिगोचरतां यान्ति, परन्तु प्रधानयुतौ शुक्रः सुदूरवर्तित्वात् पूर्णकला लघ्वी दृश्यते।



शुक्रस्य विविधाः कलाः [ लावेल वेधशाला ]

एवं शुक्रस्य भास्वरत्वं कलानाम् वृद्धिं दूरत्वं चापेक्षते। प्रधानयुतौ सकलाः कला दृश्यन्ते, परं तदा शुक्रस्य भुवो दूरत्वं १६,००,००,०० क्रोशार्धं मितम्। सुदूरवर्तितेयं सकलकलोद्भूताधिकभास्वरत्वं निष्फलीकरोति। लघुयुतौ च कला शृङ्गाकारा, परं भुवो दूरत्वं केवलं २,६०,००,००० क्रोशार्धानि। सामान्यगणितेन गणितं यत् शुक्रस्य परमभास्वरत्वं लघुयुतेः ३६ दिनानि पूर्वं पश्चाद् वा भवति; तदा त्विनान्तरं ३९°, कला च पञ्चमीचन्द्रकलावत्। तदा शुक्रस्य भास्वरत्वं भासुरतमनक्षत्रस्य लुब्धकस्य भास्वरत्वाद् द्वादशगुणितम्। तदा दिवापि शुक्रः सूर्यस्य समीपं दृश्यते यदि तस्य रवेः स्थानं पूर्वविदितं भवेत्।[1]

शुक्रस्य भास्वरत्वकोटिः—४·२ मिता। अयं भुवः समीपतमवर्तित्वात्, बृहद्बिम्बत्वात्, सूर्यसामीप्यात्, वायुमण्डलभावाच्च बहुप्रकाशवान् प्रतीयते। वायुमण्डलस्योपस्थितेः ५९ प्रतिशतकिरणाः परावर्तन्तेऽस्य तलात्।

### शुक्रस्य लघुयुतिप्रधानयुत्यादीनां दिनाङ्काः

| | | |
|---|---|---|
| प्रधानयुतिः | १ सितम्बर १९५५ | १४ अप्रैल १९५७ |
| पूर्वपरमैणान्तरं ( सायंनक्षत्रम् ) | १२ अप्रैल १९५६ | १८ नवम्बर १९५७ |
| लघुयुतिः | २१ जून १९५६ | २८ जनवरी १९५८ |
| पश्चपरमैणान्तरं ( प्रातर्नक्षत्रम् ) | ३१ अगस्त १९५६ | ९ अप्रैल १९५८ |

### ७२३ सतहभ्रमणम्

अतिभास्वरत्वात् सान्ध्यप्रकाशो प्रभातवेलायां सायवेलायां वा शुक्रावलोकनं सर्वोत्तमम्, तथापि तस्य पृष्ठे कानिचनापि चिह्नानि न दृश्यन्ते। सम्पूर्णशुभ्रे कानिचिच्चिह्नानि महाप्रयत्ने.

1. १९५६ तमे त्रिस्ताब्दे मईमासस्य १६ दिनाङ्के, जुलाईमासस्य च २६ तमे दिनाङ्के शुक्रस्य परमभास्वरत्वमभवत्।

वेधेन दृश्यता यान्ति, परन्तु काले काले परिवर्तनशीलानि तानि वायुमण्डलोद्भूता विकारा एव



शुक्रस्य नीललोहितोत्तरकिरणेषु गृहीतछायाचित्राणि
शुक्रपृष्ठचिह्नानि—[ माउण्ट विल्सन वेधशाला ]

प्रतीयन्ते। ( द्रष्टव्य फोटोचित्रम् )

चिह्नाभावे शुक्रस्याक्षभ्रमणकालनिर्धारणमतिदुष्करम्। अथाप्यत्र यतितं मतवैभिन्नं विद्यतु। 'वैडिनी'महोदयेन २३ हो १५ मि, 'श्रोटर'महोदयेन २३ हो २१ मि अक्षभ्रमणकालो निश्चित। अधुना बहुमतमिदं यदक्षभ्रमणकाल ३०–दिनमित। परन्तु समस्येयमधुनापि जटिलैव। रश्मिविश्लेषणयन्त्रैरपि भ्रमणकालनिर्णयार्थं प्रयत्ना कृता, परन्तु तेऽपि निष्फला जाता।

## ७.२४ शुक्रपृष्ठं वायुमण्डलश्च

शुक्रस्य परिक्षेपणशक्ति ० ५९ मिता। अचिरात् पूर्वपतितहिमस्यापि परिक्षेपिणी शक्ति ० ५९ मिता। अत एवानुमीयते यद् ग्रहोऽयमधिकांशतया सम्पूर्णतया वा मेघावृतो धूमिलवायुमण्डलावृतो वा।

शुक्रे वायुमण्डलं वर्तत इति निश्चितमेव। शुक्रो यदा सूर्यबिम्बे सङ्क्रमणं करोति तदा तस्य श्यामलबिम्ब परित किञ्चिद्भास्वरपरिमण्डल दृश्यते। सङ्क्रमणकाले वेधेन निश्चीयते यत् शुक्रवायुमण्डलस्य परिमाण ५५ कोणार्धमितम्। परन्तु कानि कानि तत्त्वानि सन्ति तत्रेति न कोऽपि निश्चयो जात। वर्णच्छत्रेण 'कार्बनडाई आक्साइड'स्योपस्थितिं सूच्यते, परन्तु 'ओषजनस्य' जलवाष्पस्य चिह्नान्यपि न विद्यन्ते।

## ७.२५ तापक्रम

प्रकाशितभागस्य तापक्रम ५५° सेन्टीग्रेडमित, अप्रकाशितभागस्य २०° सेन्टीग्रेडमित। परन्तु 'कार्बनडाई आक्साइड'वाष्प तापक्रमं वर्धयति, अत एव शुक्रस्य पृष्ठ तापक्रम शतसेन्टीग्रेडाधिको भविष्यति। तत्र धूलिमयप्रभञ्जना सर्वदा चलन्तो दृश्यन्ते।

### ७.२६ शुक्रस्य संक्रमणानि

बुधस्येव (§ ७.१९) शुक्रस्यापि संक्रमणानि सूर्यबिम्बे दृश्यन्ते। पृथिवी शुक्रस्य क्रान्ति सम्पातौ जूनमासस्य सप्तमदिनाङ्के, दिसम्बरमासस्य नवमदिनाङ्के चोल्लङ्घयति, अत एव स्थुयुति ५-जूनतः ९ जूनपर्यन्त, ७ दिसम्बरतः ११ दिसम्बरपर्यन्त वा भवति, तर्हि शुक्रस्य संक्रमणमवलोक्यते। शुक्रसंक्रमणानि सूर्यदूरत्वनिर्धारणप्रक्रियायां महत्त्वपूर्णानि सन्ति (द्रष्टव्य § ५.१२)। निम्नसारिण्यां १६०० खिस्ताब्दतः २२०० खिस्ताब्दपर्यन्त दृश्यमानानां शुक्रसंक्रमणानां दिनाङ्का दीयन्ते—

| दिनाङ्क | कालान्तरम् |
| --- | --- |
| ७ दिसम्बर १६३१ | ८ वर्षा |
| ४ दिसम्बर १६३९ | १२१½ ,, |
| ६ जून १७६१ | ८ ,, |
| ३ जून १७६९ | १०५½ ,, |
| ९ दिसम्बर १८७४ | ८ ,, |
| ६ दिसम्बर १८८२ | १२१ ,, |
| ८ जून २००४ | ८ ,, |
| ६ जून २०१२ | १०५½ ,, |
| १० दिसम्बर २११७ | ८ ,, |
| ८ दिसम्बर २१२५ | |

## भौम

बहिर्ग्रहाणामस्मत्समीपतमो भौमो रक्तवर्णत्वात् सरलतया नक्षत्राणां मध्येऽभिज्ञायते। अस्य कला प्रायेण तु पूर्णा सन्ति, यदि कदाचित् कलाहानिर्भवति, तथापि चन्द्रस्य शुक्लपक्षीय नवोदयोत्कला इव कला दृश्यन्ते। पुनश्च भौमस्य, अन्येषां बहिर्ग्रहाणां वा, इनान्तरं ०° अंशात् १८० अंशपर्यन्त सम्भवम्, अत एव बहिर्ग्रहा भौमो वा निशायां सूर्यास्तात् सूर्योदयकालपर्यन्त मवलोक्यन्ते।

### ७.३१ सर्वानुकूलप्रेक्षणीयता

बहिर्ग्रहस्य सर्वानुकूलप्रेक्षणीयता षड्भान्तरे (प्रतियोगे) भवति, यत षड्भान्तरे सोऽस्माकं समीपतमो वर्तते, रात्र्यांश्च सर्वप्रहरेषु च दृश्यते। परन्तु प्रत्येकस्मिन् प्रतियोगे भौमस्य प्रेक्षणीयता नानुकूला, यत प्रत्येकस्मिन् प्रतियोगे भौमस्य दूरत्वं न समम्। भौमस्य कक्षाया उत्केन्द्रिता पर्याप्ता ०.०९ मिता, नीचस्थभौमस्य सूर्याद् दूरत्वमुच्चस्थभौमस्य सूर्याद् दूरत्वात् पर्याप्त भिन्नम्। एवं भौमस्य सर्वाधिकानुकूलप्रेक्षणीयता नीचसमीपवर्तिप्रतियोगे एव भवति। अस्यां स्थित्यां भौमस्य भुवो दूरत्वं केवलं ३,५०,००,००० कोशार्धान्तरे।

अत्र स्थापिते चित्रे विभिन्नप्रतियोगाः सूचिताः । १९५६ तमे ख्रिस्ताब्दे सितम्बरमासस्य दशम

भौमस्य प्रतियोगानां भुवनिम्नतानि दूरत्वानि

दिनाङ्के भौमस्य सर्वाधिकानुकूलप्रेक्षणीयताभवत् । तद्दिने भौमः सायनगणनया कुम्भराशौ स्थितः, बिम्बव्यासश्च तस्य २५-विकलामित आसीत् ।

## ७.३२ परिभ्रमणम्

भौमः सूर्यं परितः ६८७ दिनेषु ( १·८८०८९ वर्षेषु ) परिभ्रमति । दीर्घवृत्तस्योत्केन्द्रता पर्याप्ता ·०९३२ मितास्ति । कक्षानमनञ्च १°५१′ मितमस्ति । युतिकालश्च सौरमण्डले दीर्घतमो ७८० दिनमितः ।

## ७·३३ अक्षभ्रमणम्

भौमपृष्ठे चिह्नानि वर्तन्ते, अतोऽक्षभ्रमणकालस्यानयनं न दुष्करम् । 'कैसिनी'महोदयेन

हो मि हो मि से
सः २४ ४० मितो निश्चितः, अधुना ज्योतिर्गणकैः २४ ३७ २२·५८–मितो निर्धारितः ।

[ पृथिव्या अक्षभ्रमणकालो भौमस्याक्षभ्रमणकालेन किञ्चित्सम एव, अतो भूपृष्ठस्थपुरुषाय भौमपृष्ठचिह्नान्यतिमन्दगत्या पश्चिमदिशां गच्छन्ति दृश्यन्ते, ३८ दिनैस्तानि पूर्वस्थानमेव लभन्ते। यूरोपीयदेशेषु गत २७५ वर्षेभ्यो भौमचित्राणि लिखितानि प्राप्यन्ते, तेषां तुलनात्मकाध्ययनात् अक्षभ्रमणकालः सरलतया आनीयते ।

अस्या भुवनिम्नताया मानं पृथिव्या भुवनिम्नतामानादधिकं नहि भिन्नम् । अत एव भुवौ २५ कोणांशमिता निम्नता भवेत् ।

### ७.३४ भौमे ऋतवः

यथा पृथिव्या निरक्षरेखा क्रान्तिवृत्ताद् २३½° यावन्मितं तिर्यक्, तथैव भौमस्य २४½° अंशमितं तिर्यक्। अक्षतिर्यक्त्वाद् भौमध्रुवावपि पार्थिवध्रुवाविव क्रमेण सूर्याभिमुखतां भजेते। अस्माकमृतव इव तत्रापि ऋतवः सन्ति, परन्तु तेषां कालावधिः प्रायो द्विगुण एव। भौमकक्षाया उत्केन्द्रिता पर्याप्ता, अतः शैत्यौष्ण्ये सूर्यदूरत्वापेक्षिणी।




भौमे ऋतुजनितपरिवर्तनानि ( भौमतिथिः )

[ लावेल वेधशाला ]

दक्षिणार्धे यदा शीतर्तुर्भवति तदा भौम उच्चस्थो वर्तते, यदा ग्रीष्मर्तुर्भवति तदा नीचस्थो वर्तते, उत्तरार्धे च विपरीतं भवति। अत एव दक्षिणार्धे शीतमात्रा, औष्ण्यमात्रा चात्यधिका। अनेन दक्षिणध्रुवे हिमच्छन्नप्रदेशा अत्यधिकं हिममया भवन्ति, शीघ्रं च तत्र ग्रीष्मे ते हिमविलीना भवन्ति। उपरि दत्तचित्रेणेदं स्पष्टं भविष्यति, यद्यपि तत्रेदमवधारणीयं यद् दूरदर्शकयन्त्रे दिशा व्यत्यासो भवति, अत एव फोटोचित्रे दक्षिणध्रुव उपरि भागे दृश्यते।

### ७.३५ वायुमण्डलम्

भौमं वायुमण्डलमस्ति, परन्तु तत् पार्थिववायुमण्डलापेक्षया सुविरलम्। कदाचित्तत्र आक्सीजनं नास्ति, यथास्माकं पर्वतशृङ्गेषु वायुविरलोऽल्पमात्रकश्च आक्सीजनः। तत्र 'कार्बन डाइ आक्साइड' वाष्पं पर्याप्तमात्रया वर्तते।

चित्रागतबिम्बात् किञ्चिद् बृहत्तरम्' ( द्रष्टव्यमत्र १४० पृष्ठस्य फोटोचित्रम् ), अत एव भौमे वायुमण्डलम् ।

### ७.३६ तापक्रमः

'रेडियो मीट्रिक'पद्धत्या तापक्रमो माप्यते । विषुवप्रान्तेऽपि मध्याह्ने तापक्रमः १२ सेन्टीग्रेडादधिको न भवति । प्रातःकाले तापक्रमः –८५° सेन्टीग्रेडमितः । भौमवायुमण्डलमति विरलम्, अतो दिवसलब्धौष्ण्यं शर्वर्यां महाकाशे विलीयते । एवं तत्र दिवसाः शीतलाः, रजन्यश्चात्यन्तशीता यथास्माकं ध्रुवप्रदेशयोः ।

### ७.३७ पृष्ठचिह्नानि

भौमस्य ध्रुवप्रदेशयोः श्वेतचिह्नान्यवलोक्यन्ते । एतानि चिह्नानि शीतकालपतितहिमराशि जनितानीति न कोऽपि सन्देहः । श्वेतचिह्नानि ऋत्वनुसारं वर्धन्ते हीयन्ते ( द्रष्टव्य § ७.३४–तमे दत्तं फोटोचित्रम् ) च ।

हिमक्षेत्राणि विहाय दृश्यन्ते क्वचिद् हरितचिह्नानि, क्वचिद् रक्तचिह्नानि च । हरित चिह्नानि प्रायः पृष्ठस्य ⅓ भागेषु विस्तृतानि, फोटोचित्रे च श्यामलानि दृश्यन्ते ( द्रष्टव्यमधो दत्तं फोटोचित्रम् ) । एतानि प्रायो दक्षिणगोलार्धे विद्यन्ते । रक्तचिह्नानि प्रायः पृष्ठार्धभागे विस्ती





भौमस्य

फोटोचित्रम् — रेखाचित्रम्

[ लिक-वेधशाला ]

र्णानि, फोटोचित्रे च श्वेताभानि दृश्यन्ते । एतानि च मुख्यतश्चोत्तरीयगोलार्धे विद्यन्ते । हरितचिह्नानि वस्तुतो सस्यदेशाः, रक्तचिह्नानि च सस्यदेशा इति ज्योतिर्विदामनुमानम् ।

---

1. उपरक्तकिरणा वायुमण्डलं भित्त्वा प्रविशन्ति नीललोहितोत्तरकिरणाश्च वायुमण्डलं न प्रविशन्ति, अत एव नीललोहितोत्तरच्छायाचित्रं किञ्चिद् बृहत् ।

'फोबस'नामक केन्द्र दशक्रोशार्धमितव्यासः, द्वितीयो 'डाइमस नामकः' केन्द्रः पञ्चक्रोशार्धमितव्यासः ।

तावुभावपि चन्द्राद् भिन्नौ । प्रथमस्य परिक्रमणकालः केवलमष्टहोरामित, अत एव यावति काले भौम एकमक्षभ्रमणं करोति, स तावति काले त्रीण्यक्षभ्रमणानि करोति ।

डाइमस          फोबस



भौमस्योपग्रही          [ लावेल वेधशाला ]

एतस्योपग्रहस्याष्टहोरामितमासो ग्रहस्य दिनमानादल्पत्वान्न्यून । अत एव रात्रौ स पश्चिमे भाग उदेति, ४½ होरान्तरमस्तमेति, एकस्यामेव रात्रावस्य अमावास्या पूर्णिमा च भवितः ( कदाचिदेकस्यामेव रात्रौ द्विवारमप्युदयोदय स्यात् ) ।

होरा मि

द्वितीयस्य 'डाइमसस्य' मासोपि ( ३१ १८ मित ) भौमाक्षभ्रमणकालात् किंचिद धिकः । यथा यथाऽक्षभ्रमणाद् भौमपृष्ठे स्थानविशेष पश्चिमं गच्छति, तथा तथा तेन सहोपग्रह पश्चिमं गच्छति, अत एव त्रिदिनपर्यन्त 'डाइमस' अस्तं न याति, एतावति च कालेऽस्य द्विवारममावास्या पूर्णिमा च भवत ।

द्वावुपग्रहौ महाद्वतिदूरत्वेन भिन्नौ । प्रथमस्य भौमाद् दूरत्व ५,८०० क्रोशार्धमितम्, द्वितीयस्य च १४,६०० क्रोशार्धमितम् ।

—सारिणी—

| नाम | निरूपितारः | उपलम्भ | भौमाद् दूरत्वम् | परिक्रमणकालः दि हो मि | व्यासमानम् | नाक्षत्रकोटि |
|---|---|---|---|---|---|---|
| फोबस | 'हाल'महोदय | १८७७ | ५,८०० | ०–७–३९ | १० (?) | +१२ |
| डाइमस | ,, | ,, | १४,६०० | १–६–१८ | ५ (?) | +१३ |

### ७·४१ अवान्तरग्रहाः

ग्रहाणां सूर्याद् दूरत्वकण्ठस्थीकरणे 'बोड'नियमोऽतिप्रसिद्धः[1], परन्तु १७७२ तमे खिस्ताब्दे प्रथमप्रतिपादनानन्तरं एतस्मिन्नियमे गम्भीरोऽपवादः। भौमगुरुमध्यान्तरे २·८ मितस्थाने कोऽपि ग्रहो दृष्टो नासीत्। ज्योतिर्विद्भिस्तत्र ग्रहोपलब्धये महान्तः प्रयत्नाः कृताः, परन्तु ते सर्वथा निष्फला जाताः। खिस्ताब्दे १७८१ तमे वरुणोपलब्धिर्'बोड'नियमागते स्थाने १९·६ मितस्थाने जाता। अनेनोत्साहिता ज्योतिर्विदः पुनर्ग्रहदर्शनाय प्रयत्नसहस्राण्यकुर्वन्। खिस्ताब्दे १८०१ तमे जनवरीमासस्य प्रथमदिनाङ्के यदा 'पिआजी'महोदय आकाशस्य तस्य क्षेत्रस्य नक्षत्र-मानचित्रलेखनार्थं वेधान् कुर्वन्नासीद् तदाऽकस्माद् दृष्टवान् २·८ मितस्थाने एकं चलं प्रकाश बिन्दुम्। स च दर्शनत्स्वाचिरानन्तरं सूर्यसामीप्याद् लुप्तोऽभवत्, परन्तु 'गाउस'महोदयेन गणितेन तस्य बिन्दोः कक्षा निर्धारिता। वर्षानन्तरं स प्रकाशबिन्दुर्गणितागतस्थाने पुनर्दृष्टिपथ-मागच्छत्। तस्य ग्रहत्वमेव सुस्थापितमासीत्, तस्य च नाम 'सेरेस' इति कृतम्।

खिस्ताब्दे १८०२-तमे 'सेरेसम्' अन्विष्यता 'ऑल्बर्स'महोदयेनैकोऽपरो ग्रहः 'पैलस'-नामकः प्राप्तः। १८०४-तमे खिस्ताब्दे 'जूनो' नामकग्रह उपलब्धः, १८०७-तमे खिस्ताब्दे च



नक्षत्राणामन्तरेऽवान्तरग्रहाणां भ्रमणचिह्नानि [प्रो॰ वुल्फ]

सर्वाधिकभास्वरो 'वेस्टा'नामकः। तत्र प्रतिवर्षं नूतना नूतना ग्रहा दर्शनपथमायाताः। १८९१ खिस्ताब्दपर्यन्तं तीदृशाः ३२२-सङ्ख्याका प्राप्ता आसन्। परन्तु तत्पर्यन्तमन्वेषणकार्यं प्रधान

1 द्रष्टव्य. § ६·४

तया चाक्षुषोपायैरेव कृतम्। अधुना फोटोचित्रोपपद्धत्यानान्तरग्रहाः सरलतयान्विष्यन्ते। पृथिवी गतिसमगतिकेन चलितेन दूरदर्शकयन्त्रेण, फोटोफलके होराद्वयस्य होरात्रयस्य प्रकाशदर्शनं प्रदाय फोटोचित्रं गृह्यते। अस्मिन् चित्रे नक्षत्राण्यचलत्वाद् बिन्दव इव दृश्यन्ते, परन्त्ववान्तरग्रहा गतिशीलत्वात् भ्रमणचिह्नरूपेण लभ्यन्ते।[1] अनेन विधिना प्रायः १,५०० सङ्ख्याका अवान्तरग्रहा उपलब्धाः सन्ति।

### ७४२ विस्तार आकारश्च

अवान्तरग्रहाणां परिमाणमत्यल्पकम्। यद्येते सर्वे १५०० सङ्ख्याका मिलित्वैकः पिण्डो भवेयुः, तर्हि स पिण्डश्चन्द्रतुल्यो भवेत्। अवान्तरग्रहेषु कतिपयास्त्ववान्तरग्रहाः केवलं क्रोशार्धमितव्यासकाः। प्रायेण च तेषां व्यासाः ५०-क्रोशार्धाल्पमितः। प्रायो दशसङ्ख्याकानां व्यासः शतक्रोशार्धाधिकोऽस्ति। 'वेस्टा'नामकस्य व्यासः २४२-क्रोशार्धमितः, पैलसस्य ३०६ क्रोशार्धमितः, विशालतमस्य सेरेसस्य च ४८०-क्रोशार्धमितः।

कतिपयानां लघुपरिमाणकानामवान्तरग्रहाणामाकारो गोलेतरोऽस्ति। 'एरोस'महस्य आकार इष्टिकाकारः, इष्टिकामध्यस्थितोर्ध्वाधररेखा परितोऽयमक्षभ्रमणं करोति। अस्या इष्टिकायाः परिमाणानि १५ क्रोशार्धानि × ५ क्रोशार्धानि × ५ क्रोशार्धानि सन्ति।



### ७४३ परिक्रमणानि

प्रायेण कक्षा वृत्ताकारा अथवैषद्वृत्ताकाराः सन्ति। ग्रहाश्च सर्वे राशिचक्रे भ्रमन्ति, कक्षाणमनञ्च क्रान्तिवृत्तादत्यधिकं न। परन्तु कतिपयेषु केषाञ्चन येषां विचित्रा गतिः। 'हिडल्गो'नामकस्योत्केन्द्रिता ६६ मिता, कक्षाणमनञ्च ४३° मितम्। अस्योच्चबिन्दुः शनिकक्षायाः समीपं वर्तते।

सर्वे एते ग्रहाः परिवाहं पूर्वं गच्छन्ति। एषां परिक्रमणकाल ३½-वर्षादारभ्य ६-वर्षं पर्यन्तमस्ति।

## गुरुः

शुक्र विशेषावस्थासु भौमं विहाय ग्रहाणां भासुरतमो गुरुः। ग्रहाणां मध्ये विशाल तमस्याप्यस्याक्षभ्रमणकालो न्यूनतमः। अस्य बिम्बे मेखला दृश्यन्ते, एकादशसङ्ख्याकाश्चास्योपग्रहाः सन्ति, अत एव दूरदर्शकेऽस्याद्भुतं दर्शनम्।

---

[1] पूर्वं प्रथमं भ्रमणचिह्नेनानुमीयते ग्रहमत्ता, पुनर्दूरदर्शकयन्त्रमेव भ्राम्यते यद् नक्षत्राणि तदा भ्रमणचिह्नरूपेण दृश्यन्ते, ग्रहश्च बिन्दुरूपेण। अनया पद्धत्या प्रदाय दीर्घप्रकाशदर्शनं धूमिलग्रहा अपि लभ्यन्ते।

## ७·५१ परिभ्रमणम्

गुरुः सूर्यं परितः ४३३२·६ दिनेषु ( ११·८६—वर्षेषु वा ) परिभ्रमति। दीर्घवृत्ताकारकक्षाया मध्यमकर्णः ४८,३३,००,००० कोशार्धमितः, सूर्यादल्पतमदूरत्वं ४६,००,००,००० कोशार्धानि, दीर्घतमदूरत्वञ्च ५०,६०,००,००० कोशार्धानि। दीर्घवृत्तस्योत्केन्द्रिता ·०४८३ मिता। युतिकालश्च ३९९ दिनानि लभ्यते। युतौ गुरोर्भुवो दूरत्वं ५,६७,००,००० कोशार्धानि भवति, प्रतियोगे ( पद्भान्तरे ) च केवल ३,९०,००,००० कोशार्धानि। युतौ बिम्बव्यासः ३२ विकलामितः, सर्वानुकूलप्रतियोगे च ५० विकलामितो भवति।

## ७·५२ अक्षभ्रमणम्

गुरुपृष्ठे चिह्नानि दृश्यन्ते, अत एवाक्षभ्रमणकालनिर्णये सरलता विद्यते। विषुवप्रदेशाः ९$^{घं}$ ५०$^{मि}$ २५$^{से}$ समयेन, मध्यमकटिबन्धप्रदेशाश्च ९$^{घं}$ ५५$^{मि}$ ४०$^{से}$ समयेनैकमक्षभ्रमणं कुर्वन्ति। अक्षभ्रमणवेगस्यातितरत्वाद् ध्रुवनिम्नता स्पष्टं लभ्यते, अर्थाद् ध्रुवलग्नव्यासमान ८२,८०० कोशार्धानि, विषुवलग्नव्यासमानञ्च ८८,७०० कोशार्धानि।

## ७·५३ वायुमण्डलं तापक्रमश्च

गुरौ वायुमण्डलं वर्तत इति निर्विवादम्। निम्नफोटोचित्रद्वय एकं फोटोचित्रं नीललोहितो त्तरकिरणेषु गृहीतम्, द्वितीयञ्चोपरक्तकिरणेषु गृहीतम्। उपरक्तच्छायाचित्रगतबिम्बं नीललोहितो



उपरक्तौ नीललोहितोत्तरे

गुरोरुपरक्ते नीललोहितोत्तरे छायाचित्रे

( एक उपरक्त, न छाया च शुक्लम् दृश्यते, द्वितीयचित्रे नीललोहितोत्तरछाया-चित्र उपरिभागे दृश्यते। )

[ मैक्डोनाल्ड-वेधशाला ]

तरश्छायाचित्रागतबिम्बापेक्षया लघुपरिमाणकम् । अत एव वायुमण्डलं वर्तते (कारणव्याख्यार्थं द्रष्टव्या पृष्ठ-१११ तमेऽधःटिप्पणी)।

गुरोर्वायुमण्डले हाईड्रोजनं बहुलतया वर्तते । कार्बननाइट्रोजने अपि पूर्वमासाम्, यतोऽत्र 'मीथेन'बाष्पम्, अमोनियाबाष्पञ्च दृश्येते[1]।

मेघानां तापक्रमः—१३० सेन्टीग्रेडमितः । अस्मिन् तापक्रमे मीथेनबाष्पं बाष्परूपेण वर्तते, परन्त्वमोनियाबाष्पं घनीभवति ।

## ७.५४ गुरो रचना

बिदुप्रदेशानां बहिर्मण्डलस्य मानं यावन्मात्रकं प्रत्यक्षेण दृश्यते तावन्मात्रमधिकं गणनया लभ्यते । अत एवेदं प्रतीयते यद् गुरुः केन्द्रवर्तिभागेषु घनः पृष्ठस्थले च विरलः । 'विल्ड' महोदयेन गुरो रचनायाः काल्पनिकचित्रमालिखितं तदधो दीयते—



गुरोः संरचना

## ७.५५ पृष्ठचिह्नानि

दूरदर्शकेन दृष्टो गुरुर्बिम्बगोऽपि विभिन्नवर्णान्, नैकानि च पृष्ठचिह्नानि । विषुवप्रदेशे सतत एवं मेघस्य लीनस्रोतस्त्वं । तस्या उपरिपृष्ठस्य समानान्तराः रेखाः प्रकाशमानाश्च मेघाश्च दृश्यन्ते । मेघस्तरमध्यप्रभवजनितवायुमण्डलीयप्रवाहा द्रुततया विचरन्तो यत्र तत्रानिय-

1 मीथेन ($CH_4$) कार्बन-हाईड्रोजनयोः संयोगेन, अमोनिया च ($NH_3$) नाइट्रोजन हाईड्रोजनयोः संयोगेनोत्पद्येते ।

मिताकारा मेघाश्च दृश्यन्ते । एतानि प्रायः मेघादिजनितचिह्नानि परिवर्तनशीलानि—कानिचित् शीघ्रतया, कानिचिद् विलम्बेन वा ।



सितम्बर १४ अक्टूबर ६ नवम्बर १० [ लावेल वेधशाला ]

गुरौ मेघचिह्नानि

### ७.५५१ विशालरक्तचिह्नम्

सर्वप्रथमं खिस्ताब्दे १८७८ तमे ज्योतिर्विद्भिर्गुरुपृष्ठेऽस्य स्थितिर्निरूपिता । तदेदं पाटलितं दीर्घवृत्ताकारं चासीत् । अधुनेदं दक्षिणगोलार्धे ( दूरदर्शके पतिते बिम्बे चोत्तरार्धे ) दृश्यते । अस्य परिमाणञ्च ३०,००० क्रोशार्धानि दैर्घ्ये, ७०,००० क्रोशार्धान्यायामे ।

अस्य समीपमुत्तरेण द्वितीयं चिह्नं दृश्यते । सर्वप्रथमं १९०१ तमे खिस्ताब्दे तस्य दर्शनमभवत् । अस्य दैर्घ्यं ४५,००० क्रोशार्धमितम्, अस्य भ्रमणकालश्च विशालरक्तचिह्नस्याक्षभ्रमणकालात् किञ्चिदल्पमितः, अत एव प्रत्येकस्मिन् तृतीये वर्षे तद् विशालरक्तचिह्नस्य पार्श्वतो गच्छति ।

### ७.५६ उपग्रहाः

सन्ति गुरोरेकादशोपग्रहाः । तेषां त्रयो वर्गाः—प्रथमवर्गे पञ्च समीपवर्तिन उपग्रहाः, ते च पश्चिमतः पूर्वं परिक्रामन्ति । द्वितीयवर्गे त्रयो दूरवर्तिन उपग्रहाः, तेऽपि पश्चिमतः पूर्वं परिक्रामन्ति । तृतीयवर्गे त्रयोऽतिदूरवर्तिन उपग्रहाः, ते च पूर्वतः पश्चिमं परिक्रामन्ति ।

प्रथमवर्गीयोपग्रहेषु विद्यन्ते चत्वारो भासुरा उपग्रहाः ( ते १४°, पृष्ठस्थचित्रयोः स्पष्टतया दृश्यन्ते ), एकोऽतिधूमिल उपग्रहः । तेषां परिभ्रमणकक्षा प्रायो वृत्ताकारा । अत्र परिमाणविषये द्वावस्माकं चन्द्राद् विशालतरौ, द्वावस्माकं चन्द्रेण तुल्यौ, एकश्च ( महान्तेदिय ) चन्द्राद् लघीयान् ।

द्वितीयवर्गीयोपग्रहाणां परिक्रमणकालः प्रायः २६० दिनमितः, त उपग्रहाश्च ७,००,००० क्रोशार्धदूरत्वे स्थिताः सन्ति। तृतीयवर्गीयाणां च परिक्रमणकालः प्रायः ७०० दिनानि, दूरत्वञ्च १५,००,००० क्रोशार्धानि।



गुरोश्चत्वारो भासुरा उपग्रहाः
[ यर्किज वेधशाला ]

## ७.४७ उपग्रहाणां ग्रहणं संक्रमणं छायासंक्रमणम् आच्छादनञ्च



गुरोश्चत्वार उपग्रहा ध्रुव एकरेखाया चलन्तो दृश्यन्ते।

चत्वारो भासुराः प्रथमवर्गीयोपग्रहाः सर्वदैकस्मिन्नेव धरातले परिक्रामन्ति, अस्माकं भूरपि तस्मिन्नेव तले स्थिता, अत एव त उपग्रहा वस्तुतः परिक्रमणं कुर्वन्तोऽप्येकरेखायामेवेतस्ततश्चलन्त इव दृश्यन्ते। परिक्रमणं कुर्वन्तस्त एकपार्श्वतो गुरोः सम्मुखमागच्छन्ति, पुनर्बिम्बमुल्लङ्घ्य द्वितीयपार्श्वं प्राप्नुवन्ति, ततः प्रत्यागच्छन्तस्ते गुरोः पृष्ठतो गुरुच्छायामतिक्रम्य पुनः पूर्वस्थानमा-

गच्छन्ति। अस्मिन् क्रमे तेषां गुरुबिम्बे संक्रमणानि, तेषां छायानां गुरुबिम्बे संक्रमणानि, गुरुबिम्बेन तेषामाच्छादनानि, गुरुच्छायया तेषां ग्रासाश्च भवन्ति।



उपग्रहाणां संक्रमणानि, छायासंक्रमणानि, ग्रहणानि, आच्छादनानि च

संक्रमणानि—अ स्थाने एष उपग्रहो विद्यते। गुरु-भू-प्रोतरेखायां स्थितः स परिक्रमन् गुरोः पृष्ठे दूरदर्शकेन श्यामवर्णबिन्दुमिव चलन् दृश्यते (यथा बुधशुक्रौ रविबिम्बे §§ ७.१९, ७.२६)।

छायासंक्रमणानि—उपग्रहस्य छायापि गुरुपृष्ठे पतति, साऽप्युपग्रहवत् संक्रमणं कुर्वती दृश्यते। चित्रे आ स्थाने छाया दृश्यते।

ग्रहणानि—यदा परिक्रमन् उपग्रहः इ स्थानं प्राप्नोति तदा स गुरोश्छायां प्रविशति। यथा भूछायायां चन्द्रग्रहणं भवति, तथैव गुरुच्छायायामुपग्रहस्य ग्रहणमवलोक्यते।

आच्छादनानि—परिक्रमन् उपग्रहः काले काले गुरुपृष्ठे भवति, यद्यपि तेन गुरुणा दूरीणां, तथापि गुरुपृष्ठस्थितत्वात् स न दृश्यते (यथा चन्द्रेण नक्षत्राण्याच्छाद्यन्ते § ४.५१)। इदमाच्छादनं कथ्यते।

### ७.५८ उपग्रहग्रहणानां महत्त्वम्

सर्वप्रथम 'रोमर'महोदयेन गुरोरुपग्रहाणां ग्रहणेन प्रकाशवेगो निर्धारितः। तेन वेधेन दृष्टं यत् कदाचिद् ग्रहण गणनागतकालात् पूर्वम्, कदाचिच्च ग्रहणं गणनागतकालस्य पश्चाद् भवति। पुनस्तेन निरीक्षितं यदिदमन्तरं भुवः परिक्रमणमार्गे भुवः स्थितिमपेक्षते, यदा भूः गुरोः समीपं तदा ग्रहणं पूर्वं भवति, यदा भूः गुरोर्दूरवर्तिनी तदा ग्रहणं पश्चाद् भवति। सर्वाधिकमीदृशमन्तरं = ८½ मिनटमस्ति। अनेन 'रोमर'महोदयेन प्रकाशकिरणाः सीमितवेगेन गच्छन्तीति कथितम्। यदा भूर्गुरोः समीपं तदा प्रकाशकिरणा अविलम्बेन भुवं प्राप्नुवन्ति, ग्रहणञ्च गणनागतकालात् पूर्वं भवति, यदा च भूर्गुरोर्दूरवर्तिनी तदा प्रकाशकिरणा विलम्बेन भुवं प्राप्नुवन्ति, ग्रहणञ्च गणनागतकालस्य पश्चाद् भवति। यत इदमन्तरं +८′ १९″, पृथिव्याः सूर्याद् दूरत्वं ८′ १९″ मितमस्ति। पृथिव्या दूरत्वमन्येनोपायेन ९,२९,००,००० क्रोशार्धानि पूर्वमेव ज्ञातम्, अतः प्रकाशकिरणाः ८′ १९″ समये ९,२९,००,००० क्रोशार्धानि चलन्ति, अर्थाद् एकस्मिन् सेकिण्डे १,८६,००० क्रोशार्धानि चलन्ति।

उपग्रहग्रहणात् प्रकाशवेगनिर्णयः



### ७.५९ उपग्रहाणां सारिणी

| उपग्रह. | विशृतिपार: | वर्ष: | गुरोर्दूरत्वम् (क्रोशार्धानि) | परिक्रमणकाल: दि | हो | मि | व्यासमानम् (क्रोशार्धानि) | नाक्षत्रकोटि: |
|---|---|---|---|---|---|---|---|---|
| पञ्चम: | बर्नार्ड | १८९२ | ११२, ६०० | ० | ११ | ५७ | १०० (!) | + १३ |
| प्रथम: | गलेलियो | १६१० | २६१, ८०० | १ | १८ | २८ | २३०० | ५ |
| द्वितीय: | " | " | ४१६, ६०० | ३ | १३ | १४ | २००० | ६ |
| तृतीय: | " | " | ६६४, २०० | ७ | ३ | ४१ | ३२०० | ५ |
| चतुर्थ: | " | " | १,१६९,००० | १६ | १६ | ३२ | ३२०० | ६ |
| षष्ठ. | पेरिं | १९०४ | ७,११४,००० | २५० | १६ | | १०० (!) | १४ |
| सप्तम: | " | १९०५ | ७,२९२,२०० | २६० | १ | | ४० (!) | १६ |
| दशम. | निकल्सन | १९३८ | ७,३४०,००० | २६४ | | | | |
| एकादश: | " | " | १४,०००,००० | ६९२ | | | | |
| अष्टम: | मेलो | १९०८ | १४,६००,००० | ७३९ | | | ४० (!) | १६ |
| नवम: | निकल्सन | १९१४ | १४,९००,००० | ७५८ | | | २० (!) | १७ |

## शनिः

भानुग्रहाणां मध्ये शनेः शनैश्चरस्य सर्वाधिकदूरत्वं च प्राचीनज्योतिर्विदां सुविदिते एवास्ताम्। अधुना शनिकक्षाबहिर्वर्तिनां मन्दतरगतिकानां यरुणेन्द्रकुबेराणां विज्ञानन्तरम् प्यस्य महिमा कदापि न न्यून., यतोऽस्य वलयानि ( यानि दूरदर्शकयन्त्रेणैव दृश्यन्ते ) सौरमण्डलेऽपूर्वरम्याणि सन्ति।

### ७.६१ परिक्रमणम्

शनि. सूर्यं परितः १०७५९.२ दिनेषु ( २९½ वर्षेषु वा ) परिभ्रमति। दीर्घवृत्ताकार कक्षाया मध्यमकर्णं ८८,६०,००,००० क्रोशार्धानि। उत्केन्द्रता च ०५५९ मिता। सूर्यादस्य दीर्घतमं दूरत्वं ९३,६३,८८,००० क्रोशार्धानि, अल्पतमं दूरत्वञ्च ८३,७१,७०,००० क्रोशार्धानि। भुवोऽस्य दीर्घतमं दूरत्वं १,०३,०९,१२,००० क्रोशार्धानि, अल्पतमं दूरत्वञ्च ७८,२६,४६,००० क्रोशार्धानि।

युतिकाल. ३७८ दिनमितोऽस्ति। युतौ बिम्बव्यासः १४ विकलामित., सर्वानुकूलप्रतियोगे च २० विकलामितः।

### ७.६२ अक्षभ्रमणकाल:

१० होरा १४ मिनटमितोऽस्याक्षभ्रमणकाल पर्याप्तमल्प। ( 'लिक'वेधशालाया रश्मिविश्लेषणात्मकविधिनाऽस्य विषुवीयाक्षभ्रमणकाल. १० हो २ मि मितो लभ्यते )। विभिन्नाक्षांशेषु स्थितानां प्रदेशानां विभिन्नोऽक्षभ्रमणकाल.। अस्य व्यासः पार्थिवव्यासस्य नवगुणित, अक्षभ्रमणकालश्च केवल दशहोरामित, अत एव शनिरतिवेगेनाक्षभ्रमणं करोति। अक्षभ्रमणदर

वेगाधिक्यादत्र ध्रुवनिम्नता पर्याप्ता ·०९७ मिता ( $\frac{६०}{१००}$—मिता ) दृश्यते। विषुववर्तिव्यासस्य मानं ७४,९०० क्रोशार्धान्यस्ति, ध्रुवलग्नव्यासस्य च मानं केवलं ६७,७०० क्रोशार्धानि।

### ७·६३ वायुमण्डलं तापक्रमश्च

गुरुवदत्रापि वायुमण्डलं वर्तते। शनेः परिक्षेपणशक्तिः ·४२–मिता सान्द्रमेघाना-मुपस्थितिं सूचयति। वर्णच्छत्रेणापि वायुमण्डलभावो लभ्यते। वर्णच्छत्रे 'अमोनिया'-रेखा अल्पमात्रया 'मीथेन' रेखाश्च बहुमात्रया दृश्यन्ते। तापक्रमः १५५ सेन्टीग्रेडमितो विद्यते।

### ७·६४ रचना

शनेर्ध्रुवनिम्नता ( मध्यबहिर्निम्नत्वं वा ) सौरमण्डले सर्वाधिकमिता, तथापि मध्योत्सारिशक्तिं विचार्य या गणना कृता तया मध्यबहिर्निम्नत्वस्य वेधलब्धमानाद् अधिकतरत्वं प्रकट्यते। गणनागतमानाद् वेधोपलब्धमानस्य न्यूनत्वं मध्यकेन्द्रे घनत्वमधिकं पृष्ठतले च घनत्वं विरलमस्तीति सूचयति। अत एव शने रचना गुरुवदनेन चित्रेण स्पष्टीक्रियते—


शनेः संरचना

### ७·६५ पृष्ठचिह्नानि

गुरुवदत्रापि विषुवरेखायाः समानान्तरे मेखला दृश्यन्ते, यद्यपि तास्तावन्मात्रं न प्रकाशमाना यावन्मात्रं गुरुमेखलाः। विषुवप्रान्ताः किञ्चित्प्रकाशमानपीतवर्णकाः, ध्रुवप्रान्ताश्च ईषद्धूमिलहरितवर्णकाः सन्ति। काले काले श्यामलचिह्नानि दृश्यन्ते, परन्तु तानि सर्वदा क्षणिकानि।


शनेश्छायाचित्रम्

### ७.६६ शनिवलयानि

शनिः विषुवरेखातले त्रिभिः समकेन्द्रिकैर्वलयैः परिवेष्टितोऽस्ति । साधारणदूरदर्शकेन वलयत्रये परस्परं भिन्नता न दृश्यते, अपितु एकमेव वलयं दृश्यते, परन्तु तीक्ष्णदूरदर्शकेन तस्य त्रिसंख्याकत्वं सिध्यति सरलतया । शनेर्दूरवर्ति वलयं बहिर्वलयं मध्यमदूरवर्ति मध्यवलयं समीपवर्ति चान्तर्वलयं कथ्यते । बहिर्वलयस्य पृथुत्वं ११,००० क्रोशार्धसमम्, मध्यवलयस्य च १८,००० क्रोशार्धमितमस्ति । बहिर्वलय मध्यवलयमध्ये रिक्तस्थानं वर्तते । अस्य २,२०० क्रोशार्ध विस्तृतस्य रिक्तस्थानस्य नाम 'कैसिनी' विभागोऽस्ति । बहिर्वलयमध्यभागेऽपीदृशं रिक्तस्थानं दृश्यते, तस्य नाम 'एनकी' विभागोऽस्ति । अन्तर्वलयं धूमिलमीषत्कृष्णवर्णं दृश्यते इदमर्धपारदर्शकमप्यस्ति ।



शनिवलयानि

एतानि वलयान्यतिसूक्ष्माणि सन्ति । वलयसमूहस्य व्यासः १,७१,००० क्रोशार्धसमः, गुरो र्व्यासस्य द्विगुणितोऽस्ति ।

#### कथं तानि सर्वदा न दृश्यन्ते

एतानि वलयानि सर्वदास्माकं दृष्टिपथं नागच्छन्ति । एषामदर्शनस्य त्रिधोऽवस्थाः—

( १ ) यदा पृथिवीवलयानि चैकस्मिन्नेव धरातले वर्तन्ते, तदानीं वलयानां केवलम् अग्रिमं दृश्यते तच्च चातिसूक्ष्मत्वाददृश्यमेव ।

( २ ) यदा सूर्यो वलयानि चैकस्मिन्नेव धरातले वर्तन्ते, तदानीं वलयानाम् अग्रिमैव सूर्यकिरणैरालोकिता भवति, परन्त्वतिसूक्ष्मत्वात् सा न दृश्यते ।

( ३ ) यदा वलयानां धरातलं सूर्यपृथिवीमध्ये वर्तते, तदानीं तेषां वलयानामप्रकाशिताः भागा अस्माकं सम्मुखे वर्तन्ते, अप्रकाशितत्वात् न दृश्यन्ते ।

### ७.६७ वलयानां कलाः

वलयानां भगनल्ग शनिभागात २७° मिता प्रवणतास्ति, वलयानि च सदैव शनिविषुवत्तलानि समानान्तराणीव तिष्ठन्ति, अत एव भ्रमणतोयां दक्षिणभागा उत्तरभागाश्चापि



समक्षं भवन्ति। परिक्रमणकाले द्विवारं शनिरेनं विशति यद् वलयधरातलं सूर्यं स्पृशति, प्रत्येकमवसरे शनिर्भुवः कक्षां वर्षैककालेनोल्लङ्घयति। भूः स्वयमेकस्मिन् वर्षे पर्याप्तमितस्ततो भ्रमति, अत एव प्रत्येकस्मिन् ह्यवसरे शनिवलयान्येकवारं लुप्तानि भवन्ति।

यदा वलयानि पूर्णविस्तारेण दृश्यन्ते तदा तेषामायतिर्व्यासस्य ४·१५ भवति, वलयानि च तदा शनिप्रकाशस्य १·७ गुणितं प्रकाशं प्रक्षिपन्ति।

१



३







४

२

७.६८ वलयानां निर्मितिः

वलयानि घनपिण्डा न सन्ति, प्रत्युतासंख्यानां कणानां परस्परवियुक्तानां समूहाः सन्तीति प्रायेण निश्चितम्। वलयानां पृथक्कणा ग्रहं परितो भ्रमन्ति, केवलमतिदूरवर्तित्वादस्माभि-रेकपिण्डरूपेण दृश्यन्ते। विरलकणनिर्मितिः सर्वप्रथमं 'कैक्सिनी' महोदयेन निशापितासीत्, परन्त्वधुना शतवर्षानन्तरं नैकानि प्रमाणानि दीयन्ते—

(१) गणनाविषयकप्रमाणानि—१८५६ तमे खिस्ताब्दे 'मेक्सवेल' महोदयेन गणितेन सिद्धीकृतं यद् घनद्रव्यमयपिण्डस्य द्रवमयपिण्डस्य वा स्थायिरूपेण तत्र परिभ्रमणं न सम्भवम् (शनेरतिसामीप्यात्), केवलमेकस्मिन्नेव धरातले वृत्ताकारे भ्रमन्तो विरलाः परस्परासम्बद्धपदार्था एवास्यां स्थित्यां स्थायित्वं भजन्ते।

फ्रैंचगणितज्ञेन 'रोशे' महोदयेनापि गणनयास्य समर्थनं कृतम्। कोऽप्युपग्रहो वलयं वा महाद् ग्रहव्यासार्धस्य २·५ गुणितदूरत्वान्तरे न तिष्ठति, यदि कदाचिदस्मिन्नन्तरे समायाति, नूनं तस्य पदार्थाश्छिन्ना भिन्ना भवन्ति। शनेर्वलयान्यस्मिन् दूरत्वाभ्यन्तरे वर्तन्ते, अत एव तानि छिन्नानि भिन्नानि भूत्वाधुनासम्बद्धपदार्थमूलकानि।

(२) वेधोपलब्धप्रमाणानि—रश्मिविश्लेषणात्मकविधिना (डाप्लरसिद्धान्तेन) 'कीलर'-महोदयेन शनिसमीपवर्तिभागापेक्षया शनिदूरवर्तिभागानां परिक्रमणकालस्य मान्यं ज्ञातम्।

बहिर्वलयस्य बहिर्भागस्याक्षभ्रमणकालः १४$^{\text{हो}}$ २७$^{\text{मि}}$ मितः, मध्यवलयस्य शनिसमीपवर्तिभागस्याक्षभ्रमणकालः ७$^{\text{हो}}$ ४६$^{\text{मि}}$ मितः, अन्तर्वलयस्य शनिसमीपवर्तिभागस्य चाक्षभ्रमणकालोऽत्यल्प एव। यदि वलयानि घनपिण्डरूपाण्यभविष्यन्, शनिवर्तिभागस्य शनिसमीपवर्तिभागापेक्षया गतिस्तीव्राऽभविष्यत्।

'जेलिगर'महोदयेनापि वलयानां कणमयत्वं साधितम्। यदा सूर्योऽस्माकं पृष्ठे तिष्ठति, वलयानि पूर्णचन्द्र इव प्रकाशन्ते, परन्तु किञ्चिद्वेधेनान्तरं प्राप्य तेषां प्रकाशः पर्याप्त न्यूनो भवति। अनेन वलयेषु बहवोऽसम्बद्धकणाः सन्तीति संभाव्यते, यतः कणानां किञ्चिद्वेधेनान्तरे दीर्घच्छायाः पतन्ति, छायाभागाच्च प्रकाशहानिर्भवति।

### ७.६६ शनेरुपग्रहाः

शनेर्नवोपग्रहाः सन्ति। एषां 'टाइटन'नामक उपग्रहः सर्वाधिकप्रकाशमानोऽष्टमकोटिकनक्षत्रमिव भाति। अयं दूरदर्शकेनैव दृश्यते। चन्द्राद् विशालतरोऽयमेवैकस्तुपग्रहो यत्र वायुमण्डलं वर्तते। अस्य वर्णश्च किञ्चिद् रक्तपीतः।

शनेर्दूरतमो 'फीब'नामक उपग्रहो विचित्रगतिकोऽस्ति। अयं पूर्वतः पश्चिमे परिक्रामति।

निम्नलिखितसारिण्यामुपग्रहाणां दूरत्वादयो वर्णिताः सन्ति।

### ७.६६१ शनेरुपग्रहाणां सारिणी

| नाम | निरूपितारः | अब्द. | दूरत्वं शनेः (क्रोशात्मकानि) | परिभ्रमणकालः दि | हो | मि | व्यासमानं (क्रोशात्मकानि) | नाक्षत्र कोटिः |
|---|---|---|---|---|---|---|---|---|
| मिमस् | हर्शेल | १७८९ | १,१५,००० | ० | २२ | ३७ | ३०० (?) | १२ |
| एन्सेलडुस | ,, | ,, | १,४८,००० | १ | ८ | ५३ | ४०० (?) | १२ |
| टेथस् | कैसिनी | १६८४ | १,८३,००० | १ | २१ | १८ | ६०० (?) | ११ |
| डाइना | ,, | ,, | २,३४,००० | २ | १७ | ४१ | ६०० (?) | ११ |
| री | ,, | १६७२ | ३,२७,००० | ४ | १२ | २५ | ९०० (?) | १० |
| टाइटन | ह्यूगेंस | १६५५ | ७,५५,००० | १५ | २२ | ४१ | २९०० | ८ |
| हाइपेरियन | बांड | १८४८ | ९,२०,००० | २१ | ६ | ३८ | ३०० (?) | १३ |
| आइपेटस | कैसिनी | १६७१ | २२,१०,००० | ७९ | ७ | ५६ | | ११ |
| फीब | पिकरिंग | १८९८ | ८०,३४,००० | ५५० | — | — | ३०० (?) | १४ |

### ७.७१ वरुणः (यूरेनस)

प्राचीनानां ज्योतिर्विदां सौरमण्डलेऽन्तिमग्रहः शनिरासीत्। ज्योतिर्विदां सौरमण्डलीय ग्रहाणां विषये शनिरेवान्त्य इत्यमासीत्। बुधादीनां ग्रहाणां स्थितिः केन कदा ज्ञातेति न जानाति कोऽपि, यतः पूर्वं ज्योतिर्विदामेषां ज्ञानमासीत्। परन्तु ग्रहस्यास्य ... न कस्यचिदपि ग्रहस्य स्थितिर्ज्ञाता। १७८१-तमे खिस्ताब्दे मार्चस्य १३-तमे दिनाङ्के 'सर्विलियमहर्शेल'महोदयेन

कोऽन्यनक्षत्रेभ्यो भासुरतरो ज्योतिर्बिन्दुर्दृष्टः स्वरचितेन नवदूरदर्शकेन। यदाधिकशक्तिकं चक्षुस्तालं दूरदर्शके तेन स्थापितं तदा तस्य बृहत्तरं बिम्बं जातम्। एवं तस्यानक्षत्रत्वं सिद्धम्। कालान्तरे भ्रष्टस्थानः स प्रथमं धूमकेतुर्मतः, परन्तु वर्षपर्यन्तकृतगणनया तस्य कक्षावृत्तं दीर्घवृत्ताकारं लब्धम्। ततस्तस्य ग्रहभावः सिद्धः, तस्य नाम च 'यूरेनस' कृतम्।

वरुणस्य सूर्यकेन्द्राद् दूरत्वं १,८०,००,००,००० क्रोशार्धमितम्। प्रतिसेकिण्डं ४-क्रोशार्धगत्या दीर्घवृत्तकक्षायां परिभ्रमन् वरुणः ३०६८६ दिनेषु (८४ वर्षेषु) सूर्यस्य परिक्रमं करोति। अस्य कक्षाया उत्केन्द्रता ०४७२-मिता, कक्षानमनञ्च ०°४६' कलामितम्। वरुण आकाशे षष्ठकोटिकनक्षत्रमिव भाति दूरदर्शके हरिद्वर्णको दृश्यते। अस्य वास्तविकव्यासः ३१,००० क्रोशार्धानि, प्रतीयमानबिम्बव्यासश्च ३·८ विकलामितः। अस्य भुवनिम्नता ·०८ मिता, अक्षभ्रमणकालश्च १०$^{\text{हो}}$ ४८$^{\text{मि}}$ मितः। दूरदर्शकेनास्मिन् घनाविव धूमिला मेखला दृश्यन्ते, वर्णविश्लेषणेन चास्य निर्मितिः धानिवद् गुरुत्वञ्च निर्धारिता।



वरुणस्य पञ्च उपग्रहाः [ मैकडोनल्ड वेधशाला ]

वरुणस्य पञ्चोपग्रहाः सन्ति (द्रष्टव्यमत्र फोटोचित्रम्)। चत्वारः प्रकाशमानाः, पञ्चमो ग्रहस्य समीपतमो धूमिलश्च। सर्वे तीक्ष्णदूरदर्शकयन्त्रैरेव दृश्यन्ते। तेषां कक्षातलं वरुणकक्षातलात् प्रायः समकोणान्तरे। तेषां दूरत्वादीन्यधो दीयन्ते सारिण्याम्।

पृथ्व्यपेक्षया इन्द्रस्य सूर्याद् दूरत्वं ३० गुणितम्। १६८ वर्षमितोऽस्य परिक्रमणकालः। दूरदर्शकेनायं हरिद्वर्णोऽष्टमकोटिकनक्षत्रवदाभाति। वर्णच्छत्रविश्लेषणात्मकपद्धत्याऽस्य भ्रमणकालः १६ होरामितो भवति।

इन्द्रस्य द्वावुपग्रहौ। प्रथमश्चन्द्राद् विशालतरः पूर्वतः पश्चिमं परिभ्रमति, द्वितीयो दूरवर्ती लघुपरिमाणकोऽतिधूमिलश्च निम्नलिखितसारिण्या दूरत्वादीनि दीयन्ते—

### ७.७२१ इन्द्रस्योपग्रहयोः सारिणी

| नाम | विवृतिकार | अब्द | दूरत्वं इन्द्रात् (क्रोशार्धानि) | परिक्रमणकाल | व्यासमानम् (क्रोशार्धानि) | नाक्षत्रकोटि |
|---|---|---|---|---|---|---|
| ट्रिटन | लैसेल | १८४६ | २२०,००० | ५दि २१हो ३मि | २८०० (?) | १३ |
| नेरियड | कीपर | १९४९ | —— | वर्षद्वयम् | १०० (?) | १९ |

### ७.७३ कुबेर ( प्लूटो )

कुबेरस्यापि विवृतिर्गणनयैवाभवत्। इन्द्रविवृत्यनन्तरं वरुणस्य गतिभेदं किञ्चिद् व्याख्यातं, परन्तु गणनायामिन्द्रजनितविक्षेपसंस्कारान् कृत्वापि वरुणस्य गतिभेदं व्याख्यातुमसमर्था अभवन् ज्योतिर्विदः। खिस्ताब्दे १९१५ तमे 'लावेल' महोदयेन तदज्ञातपिण्डस्य गणना प्रारब्धा, येनाकृष्टो वरुणो गतिभेदं प्राप्नोत्। दुर्भाग्यवशात् स विवृतेः पूर्वमेव मृतः, तथापि तस्य सहकारिणः कार्यतत्पराः सन्तः खिस्ताब्दे १९३० तमे मार्चमासे 'लावेल' सूचितस्थाने नूतनग्रहस्योपस्थितिं फोटोफलके प्राप्तवन्तः।



विवृतिकाले कुबेरः [ लावेल वेधशाला ]

लावेलमहोदयस्याज्ञातपिण्डविषयकगणना कीदृशी यथार्थमानानां समीपेति निम्नसारिण्या स्पष्टं भवति। गणनायां दृश्यं पुङ्खानुपुङ्खनिरूपणं तस्यासाधारणकौशलं प्रकटी करोति।

| | गणनया ज्ञातपिण्डस्य मानानि | वेधोपलब्धमानानि |
|---|---|---|
| दूरत्वं ( ज्योतिःप्रमापकाणि ) | ४३.०० | ३९.५२ |
| परिक्रमणकालः ( वर्षाः ) | २८२ ०० | २४८ ४३ |
| उत्केन्द्रिता | ० २०२ | ०.२४९ |
| नीचभोगांशाः | २०४°४८′ | २२२°३०′ |
| कक्षानमनम् | १०° | १७°९′ |
| नाक्षत्रकोटिः | १३ | १४ ५ |

सौरमण्डले कुबेरस्य कक्षाया उत्केन्द्रिता सर्वाधिका, कक्षानमनञ्च सर्वाधिकम् । उत्केन्द्रितामानस्य पर्याप्तत्वात् कुबेरः १९८९–तमे खिस्ताब्दे इन्द्रकक्षाया अपि समीपतरमायास्यति ।




कुबेरस्य कक्षावृत्तम्

## ७.८ ग्रहाणां सारिणी

| नाम | सूर्याद् दूरत्वम् (ज्योतिःप्रमापकाणि) | दूरत्वम् (नियुतक्रोशमानानि) | नाक्षत्रकालः (दिनानि) | युतिकालः (दिनानि | उत्केन्द्रिता | कक्षानमनम् |
|---|---|---|---|---|---|---|
| बुधः | .३८७१ | ३५.९६ | ८७.९६९ | ११५.८८ | ०.२०६ | ७°०′ |
| शुक्रः | .७२३३ | ६७.२० | २२४.७०१ | ५८३.९२ | ०.००७ | ३ २४ |
| भूः | १.०००० | ९२.९० | ३६५.२५६ | | ०.०१७ | ० ० |
| भौमः | १.५२३७ | १४१.६ | ६८६.९८० | ७७९.९४ | ०.०९३ | १ ५१ |
| | | | ( वर्षाः ) | | | |
| सेरेसः | २.७६७३ | २५७.२ | ४.६०४ | ४६६.६० | ०.०७७ | १० ३७ |
| गुरुः | ५.२०२८ | ४८३.३ | ११.८६२ | ३९८.८८ | ०.०४८ | १ १८ |

| नाम | सूर्याद् मध्यम (ज्योतिष्प्रमापकाणि) | दूरत्वम् (नियुतकोशार्धानि) | नाक्षत्र कालः (दिनानि) | युतिकालः दिनानि | उत्केन्द्रता | कक्षागमनम् |
|---|---|---|---|---|---|---|
| शनिः | ९·५३८८ | ८८६·२ | २९·४५८ | ३७८·०९ | ०·०५६ | २ २९ |
| वरुणः | १९·१९१० | १७८३ | ८४·०१५ | ३६९·६६ | ०·०४७ | ० ४६ |
| इन्द्रः | ३०·०७०७ | २७९४ | १६४·७८८ | ३६७·४१ | ०·००९ | १ ४७ |
| कुबेरः | ३९·४५७४ | ३६७० | २४७·६९७ | ३६६·७४ | ०·२४१ | १७ १ |

| नाम | व्यासमानं (कोशार्धानि) | पिण्डमात्रा [पार्थिवपिण्ड-मात्रा १ | घनत्वम् जलस्य=१ | अक्ष-भ्रमण कालः | विषुवरेखायाः प्रवणता (क्रान्तिवृत्तात्) | ध्रुव-निम्नता | महत्तमभास्वरत्वकाले नाक्षत्र-कोटिः |
|---|---|---|---|---|---|---|---|
| | | =१] | | दि | | | |
| सूर्यः | ८६४००० | ३३११५० | १·४१ | २४·६९ | ७°१०′ | ∎ | —२६·८ |
| चन्द्रः | २१६० | ०·०१२ | ३·३३ | २७·३२ | ६ ४१ | ० | —१२·६ |
| बुधः | ३१०० | ०·०४ | ३·८ | ८८ | | ● | —१·१ |
| शुक्रः | ७७०० | ०·८१ | ४·८६ | ३० (!) | | ० | —४·४ |
| भूः | ७९२७ | १·०० | ५·५२ | २३[हो] ५६[मि] | २३°२७′ | १/२९९ | |
| भौमः | ४२१५ | ०·११ | ३·९६ | २४ ३७ | २४ | १/१९२ | —२·८ |
| गुरुः | ८८६४० | ३१६·९४ | १·३४ | ९ ५० | ३ ७ | १/१५ | —२·५ |
| शनिः | ७४१०० | ९४·९ | ०·७१ | १० ०२ | २६ ४१ | १/९·५ | —०·४ |
| वरुणः | ३२००० | १४·७ | १·२७ | १० ४१ | ९८ | १/१४ | +५·७ |
| इन्द्रः | ३१००० | १७·२ | १·५८ | १५ ४८ | २९ | १/४० | +७·६ |

# अष्टमोऽध्यायः

## धूमकेतुः

[ सौरमण्डले भ्रमतां ग्रहव्यतिरिक्तपिण्डानां स्वरूपगत्यादीन्यत्र द्रष्टव्यानि । ]

### ८.१ धूमकेतवः

धूमकेतव उत्पातचिह्नानीति प्राचीनानां प्रसिद्धिः । अस्याः प्रसिद्धेर्मूलं तेषां विरलागमनमेव, यतो विरलदर्शनेषु प्रायेण रहस्यपूर्णशक्तिमत्ता मन्यते । वस्तुतः प्रकाशमानानां चाक्षुष-(चक्षुर्दृष्ट) धूमकेतूनां दर्शनं विरलमेव । मानवस्य शतवर्षायुष्के जीवने दशाधिकानां नेत्रदृष्टधूमकेतूनां दर्शनं प्रायोऽसम्भवम् । परमधुना धूमकेतुषु न कापि रहस्यपूर्णा शक्तिर्मन्यते, यतो दूरदर्शकयन्त्रेण तेषां दर्शनानि सुलभान्येव । अकस्मादेव नक्षत्रावलोकनकार्ये सायंकाले आकाशस्य पश्चिमभागे, सूर्योदये आकाशस्य पूर्वभागे ते काले काले दृष्टिपथमवतरन्ति । प्रतिवर्षं पञ्चषकेतव आलोक्यन्ते । एषां चत्वारो वा नूतना धूमकेतवः, शेषाः पुनरागताः पूर्वपरिचिताश्च ।

### ८.११ परिक्रमणमार्गः

सर्वे धूमकेतव एकरूपेण दृश्यन्ते । न दृश्यते तेषां किमपि स्पष्टं प्रत्यक्षं भेदकम्, येन ते सजातीयेभ्यो भिन्नाता भवेयुः । तथापि ज्योतिर्गणकैस्ते सूर्यमभितः स्वपरिक्रमणमार्गेणाभिज्ञायन्ते ।

परिक्रमणमार्गस्य द्वावाकारौ—(१) दीर्घवृत्ताकारः, (२) परवलयाकारश्च । दीर्घवृत्ताकारमार्गस्था धूमकेतवो नियमिता आख्यायन्ते, परवलयाकारमार्गस्थाश्चानियमिताः ।

दीर्घवृत्ताकारमार्गस्था धूमकेतवः सूर्यं परितो दीर्घवृत्तेषु भ्रमन्ति । दीर्घवृत्तानामेकस्मिन्नाभौ सूर्यस्तिष्ठति । मार्गस्य दीर्घवृत्ताकारत्वाद्धे धूमकेतवः पुनः पुनः सूर्यं प्रत्यागच्छन्ति, तेषां भगणकालादयोऽपि ग्रहभगणकालादिवन्नियमिताः । न कस्यापि धूमकेतोर्भगणकालः शतवर्षाधिकः, परमुत्केन्द्रिता च तेषां पर्याप्तमिता, कक्षागमनञ्च साधारणम् । परिक्रमणे ते प्रायः पश्चिमतः पूर्वं गच्छन्ति ।

परवलयाकारमार्गेण ये धूमकेतवो भ्रमन्ति तेषां परवलयाकारमार्गस्याप्येकस्मिन्नाभौ सूर्यस्तिष्ठति । परं यथा परवलयस्य द्वे शाखे अनन्तस्थानं प्रति सर्वदा गच्छतः, न च कदापि परिवर्तेते, तथा धूमकेतव एते एकदा सौरमण्डलेऽतिथिरूपेणागच्छन्ति, पुनश्च न दृश्यन्ते । एषां कक्षागमनं पर्याप्तमितम् । एषामर्धाः पूर्वतः पश्चिमं भ्रमन्ति, अर्धाश्च पश्चिमतः पूर्वं भ्रमन्ति ।

### ८.१२ धूमकेतोः स्वरूपम्

धूमकेतोः त्रीणि प्रमुखाङ्गानि—(१) शीर्षम् (नाभ्यावरण), (२) नाभिः, (३) पुच्छञ्च । अत्र पुच्छमस्य महत्तममङ्गम्, यतः पुच्छवत्त्वादस्य नाम 'पुच्छलतारा' प्रसिद्धम् । धूमकेतुशब्दस्य व्युत्पत्त्यापि धूमपूर्णकेतोः (धूमपूर्णपुच्छस्य) महत्ता दृश्यते ।

सर्वेषां धूमकेतूनां शीर्षमवश्यं विद्यते। तन्न्यूनाधिकं वृत्ताकारम्। इदं मेघसदृशं पर्याप्तं धूमिलं महापरिमाणकञ्च। अस्य व्यासो न कदापि १५,००० क्रोशार्धादल्पः।

शीर्षमध्यभागो नाभिरुच्यते। केन्द्रभागस्येयं नाभिर्नक्षत्रमिव भाति। अस्याकारश्च गोलः, परिमाणञ्चाल्पं ५००-९०० क्रोशार्धमितकम्। धूमकेतोः क्वचिद् द्वे नाभी, क्वचिदेका नाभिः (साऽपि केवलं सूर्यसामीप्ये), क्वचिदेकापि न।

तृतीयमङ्गं पुच्छमस्य प्रधानमङ्गम्। पुच्छमतिदीर्घं (कदाचित् कोटिक्रोशार्धमितमपि) परिमार्जिनीव दृश्यते। सा शीर्षाद् निस्सरति। पुच्छं शीर्षापेक्षया किञ्चिद् धूमिलम्। तत् कस्मात् स्थानाद् निःसृतमिति निश्चयो दुष्कर एव। यद्यपि पुच्छं सर्वाधिकदीर्घाङ्गं प्रमुखञ्च, तथापि कतिपयानां दूरदर्शकेनैव दृश्यानां लघुधूमकेतूनां पुच्छं न विद्यते।



धूमकेतु १९१०-अ
[ लावेल वेधशाला ]



धूमकेतु-१९४८
[ लावेल-वेधशाला ]

## ८·१३ पुच्छम्–उत्पत्तिर्गतयश्च

यदा धूमकेतुः सूर्यस्य सामीप्यं भजते तदा तस्यैकं पुच्छं जायते। पुच्छं शीर्षात् सूर्यप्रतिकूलदिशायां प्रथमं निस्सरति। यथा यथा सूर्यस्य समीपं धूमकेतुर्गच्छति तथा तथा पुच्छं दीर्घं दीर्घतरञ्च भवति। एवं पुच्छं वस्तुतः शीर्षस्थवाष्प-सूक्ष्मरजःकण समूह एव, यः सूर्यप्रकाशकिरणैः प्रणुदितः सूर्यप्रतिकूलदिशायां शीर्षाद् निस्सरति। एवं सूर्यकिरणप्रणोद एव पुच्छस्य हेतुः।


पुच्छनिर्भातिम्

पुच्छस्य तिस्रो गतयः। प्रथमा तद् नाभेः प्रतिसेकिण्डं नैककोशार्धगत्या बहिर्निस्सरति। द्वितीया यथा यथा पुच्छं शीर्षाद् दूरं भवति तथा तथा प्रणोदात्स्वात् तस्य परिमाणं वर्धते। अत एव तत् सूर्यप्रतिकूलदिशायां शङ्क्वाकारं भवति। तृतीया सूर्यं परितो भ्रमणशीलत्वात् 'केप्लर'नियमेन पुच्छस्य सूर्यदूरवर्तिभागा मन्दगत्या भ्रमन्ति, सूर्यसमीपवर्तिभागास्तु शीघ्रगत्या भ्रमन्ति। अत एव पुच्छं नाभेः पश्चात् तिष्ठति, अर्थात् पुच्छं किञ्चिद् वक्रता भजते।

पुच्छे यानि वाष्पाणि विरलसूक्ष्मरजःकणाश्च वर्तन्ते तेषां विषपूर्णप्रभावो भूवासिनां भविष्यति यदि धूमकेतोः पुच्छं भुवः समीपं भूवायुमण्डलमध्याद् वा गच्छतीति साधारणजनानां भयं न निर्मूलम्। तथापि पुच्छस्य वाष्पाणीयद्विरलानि यत् खिस्ताब्दे १८६१ तमे १९१० तमे चेदृशी घटना घटिता, न च कोऽपि प्रत्यक्षविषपूर्णप्रभावो दृष्टः।

## ८.१४ वर्णच्छत्रम्

वर्णच्छत्रे काश्चिद् रेखाः सूर्यवर्णच्छत्रीयरेखासमाः काश्चिच्च सूर्यवर्णच्छत्रीयरेखाभ्यो भिन्ना दृश्यन्ते। अत एव धूमकेतुप्रकाशकिरणेषु केचन किरणा धूमकेतुकणपरावर्तिताः सूर्यप्रकाशकिरणा एव, केचन च धूमकेतोः स्वकीया इति सिद्ध्यति। धूमकेतोः स्वकीयकिरणानां वर्णच्छत्रीयरेखाभिर्ज्ञायते यत्तत्र वाष्पाणि सूर्यकिरणप्रणुदितानि सन्ति प्रकाशमानानि भवन्ति। वर्णच्छत्रविश्लेषणेन $C_2$, NH, CN, CH, OH आदिव्यूहाणूनामुपस्थितिः सूच्यते। एतेषु व्यूहाणुषु कतिपया व्यूहाणवः पृथिव्यां न लभ्यन्ते।

## ८.१५ पिण्डमात्रा, रचना च

धूमकेतुर्मुख्यतयौल्किकद्रव्यरचितो भवति। एते विरलघनत्ववन्त औल्किकद्रव्यकणाः सूक्ष्मरजोमिश्रितवाष्पैः सम्मिलिता भवन्ति। सूर्यसामीप्ये वाष्पाण्यौल्किकद्रव्यकणेभ्यः पृथग् भूत्वा सूक्ष्मरजःकणैः सह वाष्पावरणं रचयन्ति, ततः सूर्यकिरणप्रणुदितानि भूत्वा पुच्छं रचयन्ति। तत्र

---

१. प्रकाशस्यापि भारो वर्ततेऽयमाश्चर्यविषयः परं विज्ञानविद्भिः सुसाधितः।

च परावर्तितसूर्यकिरणैः सूर्यप्रकाशप्रणुदनजनितवाष्पीयप्रकाशकिरणैश्च भास्वरत्वं दृश्यते। औल्किकद्रव्यकणेभ्यो वाष्पाणां पृथग्भवनस्य, वाष्पावरणपुच्छरचनायाः प्रकाशमानत्वस्य च प्रक्रिया शनैः शनैः सूर्याद् दूरत्ववृद्धौ समाप्ता भवति। अन्ततोऽप्रकाशमान औल्किकद्रव्यपुञ्ज एव धूमकेतुर्भवति। पिण्डमात्रा नूनं किञ्चिद् न्यूना भवति, यतः पुच्छरूपेण निस्सृता पिण्डमात्रा प्रायेण पुञ्जे पुनर्नागच्छति।

धूमकेतोः परिमाणं सुदीर्घकम्, पिण्डमात्रा चाल्पा,[1] अत एव तस्य घनत्वमत्यल्पमितम्। महस्योपग्रहस्य सामीप्येऽपि धूमकेतुमार्गस्य च्युतिहीनत्वमनेकं प्रमाणम्, पुच्छानां पारदर्शकत्वं द्वितीयम्।

## ८.१६ धूमकेतूनां परिवाराः

दीर्घवृत्ताकारमार्गकाणां धूमकेतूनां प्रायेण त्रिंशत्संख्याका गुरुपरिवारीयाः कथ्यन्ते। एषेषां सर्वेषामुच्चबिन्दुः सम्पातबिन्दुर्वा गुरुकक्षायाः समीपे दृश्यते। भगणकालः पञ्चवर्षाधिको नववर्षाल्पश्च भवति। कक्षाणमन साधारणमेव दृश्यते। सर्वे पश्चिमतः पूर्वं भ्रमन्ति। 'एन्की'धूमकेतुरस्मिन्नेव परिवारे वर्तते, स प्रत्येकस्मिन् चतुर्थे वर्षे दृश्यते।

ग्रहेषु गुरोः पिण्डमात्रा सर्वाधिका, अत एव स समर्थः पर्याप्तसंख्याया धूमकेतूनां कर्षणे। अन्यैरपि ग्रहैः कतिपया धूमकेतवो वशीकृताः—शनिना षट्, वरुणेन द्वौ, इन्द्रेण चाष्टौ।

## ८.१७ धूमकेतूनां वर्गाः

सन्ति कतिपया धूमकेतवो येषां कक्षातत्त्वानि प्रायः समानानि। एते एकवर्गीयाः कथ्यन्ते। १६६८-१८४३ प्रथम-१८८२ द्वितीय-१८८७ प्रथमधूमकेतवः एकवर्गीयाः सन्ति। एते सूर्यस्यातिसमीपमपि गच्छन्ति। १८८२ खिस्ताब्दस्य सितम्बरमासे दृष्टः १८८२-द्वितीय धूमकेतुरद्भुत आसीत्। स दिवापि दृष्टः। स सूर्यमण्डलस्यपार्श्वात् सूर्यपृष्ठस्य ३,००,००० क्रोशार्धदूरस्थान्तरे प्रविश्य कोटिक्रोशार्धगत्या निरगच्छत्। सूर्यस्यातिसामीप्या-

---

1. दशमाके वायुमण्डलापेक्षया $\frac{१}{२०,००,००,००,००,००,००,००,०}\left(=\frac{१}{२\times१०^{१६}}\right)$ मापमिता हार्त्रिकेतोः पिण्डमात्रा।

तस्य नाभिश्चतुर्धाभवत् । अर्थादेक एव धूमकेतुश्चतुर्धाऽभवत् । चत्वारो नवप्राप्त धूमकेतव पृथग्भूय भ्रमन्ति । तेषां परिक्रमणकाल क्रमश ६६४ वर्षाणि, ७६९ वर्षाणि, ८७१ वर्षाणि, ९५९ वर्षाणि चास्ति, अत एव ते २१-तमशतकात् प्रारभ्य २८-तमशतकपर्यन्त पुनरेकवार द्रक्ष्यन्ते ।

### ८.१८ प्रसिद्धा धूमकेतव

#### हालिधूमकेतु

सर्वप्रथमं 'न्यूटन'महोदयेन धूमकेतूना भ्रमनत् यत्परिक्रमणमनुमितम्, पर न तेन कृता कस्यचन धूमकेतुविशेषस्य गणना । तस्य मित्रेण 'हालि'महोदयेन १६८२-तमे खिस्ताब्दे तत्कालदृष्टोगागतधूमकेतो यथावृत्ततत्त्वानि गणयित्वा, तस्य परिक्रमणकालस्य मान ७६-वर्षाणि लब्धम् । पूर्वोल्लेखैस्तेन दृष्ट यत् प्रत्येक ७६-तमे वर्षे एको धूमकेतुरदृश्यत । अत एव हालि





हालिधूमकेतु

महोदयेन १७५८ तमे खिस्ताब्दे धूमकेतो पुनर्दर्शन भविष्यतीति घोषितम् । हालिमहोदयोऽति वृद्ध आसीत्, पुनरागमनात् पूर्वमेव पञ्चत्व गत, तथापि पूर्वसूचितवर्षे पूर्वसूचितस्थाने धूमकेतो

दर्शनमभवत्। धूमकेतोश्च नाम 'हालि'धूमकेतुः कृतो ज्योतिर्विद्भिः। हालिधूमकेतुः १९१०-तमे खिस्ताब्दे दृष्ट आसीत्। पुनरयं १९८६-तमे खिस्ताब्दे दृश्यते।

**'श्वापमन-वाश्मन'-धूमकेतुः ( १९२५-द्वितीय-धूमकेतुः )**

१९२७-तमे खिस्ताब्दे लब्धो धूमकेतुर्ग्रहवद् भ्रमति। अस्य कक्षावृत्त पूर्णतया गुरुकक्षा-शनिकक्षा-मध्ये वर्तते। साधारणतोऽयमष्टादशकोटिकिलोमीटरमित माति, परन्तु काले कालेऽस्य भास्वरत्वमकस्माद् वर्धते स्म। १९३४-तमे खिस्ताब्दे चतुर्दिवसान्तरे तस्य भास्वरत्वमकस्मात् शतगुणितमभवत्। ( द्रष्टव्य निम्न फोटोचित्रम् )—



धूमकेतु-१९२५ द्वितीयस्योज्ज्वल्ये विकास
[ यरकिज वेधशाला ]

**बिएला-धूमकेतु**

सर्वप्रथम १८२६ तमे खिस्ताब्दे 'बिएला' महोदयेन गणनयास्य परिक्रमणकाल ६३ वर्षमितो निश्चित। यदायं केतुः १८४६ तमे खिस्ताब्दे दृष्टस्तर्हि स द्विधा दृष्ट। तस्य द्वौ भागौ पृथक् पृथग् भ्रमन्तौ दृष्टौ। १८५२ तमे खिस्ताब्दे द्वौ भागौ द्वौ धूमकेतू अभवताम्। १८५९-तमे, १८६६ तमे खिस्ताब्दे च महाप्रयत्नैरप्येतयोर्दर्शनं नाभवत्। परन्तु १८७२ तमे खिस्ताब्दे गणनागतदर्शनकाले २७-नवम्बरे पृथिव्या उपर्यसंख्या उल्का अपतन्। एवं प्रतीयते यद् धूमकेतुः छिन्नभिन्नो भूत्वा ह्युल्कापुञ्जोऽभवत्। एवं धूमकेतवो यदा कदा विनाशं गच्छन्ति।

## ८.२ उल्काः

यदा कदा रजनीकरविहीनायां निशायामम्बरे रत्नवत्प्रकाशमानेषु नक्षत्रेषु कतिपये प्रकाशबिन्दवो दृश्यन्ते, ये क्षणं नभमण्डले चलन्त एव लुप्ता भवन्ति। साधारणजनेषु लोपोऽय

तारापतननाम्ना प्रसिद्धः। परन्त्विदं वस्तुतस्तारापतनं न, न चैते पिण्डा वस्तुतस्ताराः। तारा (नक्षत्राणि) अतिविशालकायाः सन्ति, परन्त्वेते पिण्डाः केवलं प्रकाशहीना अतिलघुपिण्डाः। एते लघुपिण्डा भुवः सामीप्ये, भुव आकर्षणशक्त्याकृष्टा वायुमण्डलसङ्घर्षजनिततापेन प्रज्वलिताः सन्तः क्षणिकप्रकाशं प्रदर्श्य भस्मीभवन्ति।

एषां धूमकेतुभ्यो भिन्नत्वं निम्नतथ्यैः समर्थ्यते—

(१) धूमकेतूनां गतिरतिमन्दा। आकाशे कतिपयदिनपर्यन्तं (केचन नैकसप्ताह पर्यन्तमपि) दृश्यन्ते, रात्र्याः सर्वप्रहरेषु च चन्द्रवद् आलोक्यन्ते। उल्काः क्षणमाकाशेऽचिरप्रभया प्रकाशन्ते, क्षणिकां दीप्तिञ्च प्रदाय विलीना भवन्ति। एषां प्रकाशमानरेखा मिनटैककालपर्यन्तं दृश्यन्ते।

(२) धूमकेतवः सुदूरवर्तिखगोलीयपिण्डाः सन्ति, उल्काश्च प्रकाशमानकाले भुवो वायुमण्डले भवन्ति।

(३) धूमकेतवः परिमाणे पृथिव्या बृहत्तराः सन्ति (केचन तु सूर्य इव विशालकायाः सन्ति। तेषां सर्वेषां मध्यमानं दशपृथिवीसमं गण्यते), उल्काश्च सर्वथातिसूक्ष्मपिण्डा एव।

## ८.२१ उल्कापतनस्य संख्या

प्रतिहोरं १०,००,०००–संख्याका उल्का भुवि पतन्ति (गणनेयं केवलं नेत्रदृष्टोल्कानामस्ति)। अर्थात् प्रतिदिनं २,४०,००,०००–संख्याकोल्कानां पिण्डमात्रा पार्थिवपिण्डमात्रया युज्यते। उल्कानां प्रत्येकं भारोऽतिलघुर्दृश्यते, तथापि प्रतिदिनं पतितानामुल्कानां सम्मिलितो भारः २४ 'सेर' मितो भवति।



८.५-चित्र उत्तरार्धकाले उल्का अधिकसंख्यया पतन्ति।

उल्का रजन्या उत्तरार्धकालेऽधिकं दृश्यन्ते। पूर्वार्धकाले पृथिव्या गोलाकारभूतो महाकाशोऽस्माकं सम्मुखं वर्तते। अत एव केवलं पृष्ठत उल्का आगच्छन्ति। प्रातःकाले वयं सम्मुखादागताः भवामः, अत एवोल्का अधिकसंख्यायाम् अधिकवेगेनागच्छन्ति (द्रष्टव्यमत्र चित्रम्)।

## ८.२२ उल्कासम्पातबिन्दु

उल्काः सर्वदा समसंख्याया न दृश्यन्ते। यदा कदा तासां संख्यात्याधिक्यं भवति। एवं प्रतीयते यदाकाशे उल्कावृन्दानि भ्रमन्ति। यदा सूर्यं परितो भ्रमणं पृथिवी उल्कावृन्दपथमुल्लङ्घयति तदोल्का महासंख्यायां भुवि पतन्ति। इदमुल्कावृष्टिः कथ्यते।

यदि तूल्कावृष्ट्यवसरे दृष्टिगोचराणामुल्कासहस्राणां मार्गाः खगोले अङ्क्यन्ते, तर्हि ता
एकस्माद् बिन्दोरागच्छन्त्यो दृश्यन्ते। बिन्दुरयमुल्कासम्पातबिन्दुरुच्यते (द्रष्टव्यमधश्चित्रम्)।




उल्कावृन्दानि च सम्पातबिन्दुनामभिः प्रसिद्धानि भवन्ति। (यथा यदि सम्पातबिन्दुः सिंहराशौ स्थितस्तर्हि उल्कावृन्दं 'सैही' वृन्दमुच्यते)। उल्कावृन्दानि प्रायेण धूमकेतुमार्गेण सम्बद्धानि भवन्ति (द्रष्टव्यः § ८·१८)। निम्नधारिण्यामुल्कावृन्दानि, तत्सम्बन्धिधूमकेतूनां च नामानि दीयन्ते।

| उल्कावृन्दम् | महत्तमवृष्टि | सम्बद्धधूमकेतु | धूमकेतोः परिभ्रमण कालः |
|---|---|---|---|
| वीणाविषयकम् | अप्रेल २२ | १८६१-प्रथम | ४०० वर्षाणि |
| कुम्भविषयकम् | मई ४ | 'हालि' | ७६ |
| ययातिविषयकम् | अगस्त ११ | १८६२-तृतीय | १२० |
| कालियविषयकम् | अक्टूबर ९ | १९३३-तृतीय | ६३ |
| मृगविषयकम् | अक्टूबर २१ | हालि | ७६ |
| वृषविषयकम् | नवम्बर ९ | एन्की | ३३ |
| 'सैही' (सिंहविषयकम् | नवम्बर १५ | १८६६ प्रथम | ३३ |
| देवयानीविषयकम्) | नवम्बर २७ | बियेला | ६३ |

## ८.३ उल्कापिण्डाः

प्रायेणोल्का वायुमण्डलं प्रविश्य भूपृष्ठमप्राप्यमाणा एव भस्मीभवन्ति, परं याः पारधन
भस्मीभवनादवशिष्टा भूतलं प्राप्नुवन्ति ता उल्कापिण्डाः कथ्यन्ते।
उल्कापिण्डेषु प्रायः 'मैग्नेशिया' 'निकेल' लोहचूर्णादीनि लभ्यन्ते। उल्कापिण्डानां भार
'तोला'द्वयात् प्रारभ्य नैकटनपर्यन्तं दृश्यते।
यदा कदा बृहत्कायका उल्कापिण्डा दृश्यन्ते। उल्कापिण्डाश्च यदा कदातिवेगेन भुवि
निपत्य तत्र छिद्रमुत्पादयन्ति (द्रष्टव्यं १७० पृ० प्रथम चित्रम्)।

उल्कादर्शनवदेकोऽन्योऽपि दृश्यिषयोऽत्यन्तमद्भुत । मेघविहीने रजनीकरशून्ये निर्मले व्योमनि शरदर्तौ सूर्योदयात् किञ्चित्पूर्वं वसन्तर्तौ च सूर्यास्तस्य किञ्चित्पश्चात् सूर्यसमीपवर्तिभागा दुद्धे श्वेतप्रकाशो दृश्यते । अय क्षितिजे पृथुतम उज्ज्वलतमश्च वर्तते, उच्चोच्चांशेषु चाल्पीभवत्यस्य पृथुतोज्ज्वलता च । प्रकाशोऽय राशिचक्रमनुदृश्यते, अत एव राशिचक्रप्रकाशनाम्ना प्रसिद्ध । क्रान्तिवृत्तधरातले भूकक्षासूर्यमध्यवर्तिभागेषु सूक्ष्मा विरलश्चौल्किकणा वर्तन्ते, एतेभ्यश्च सूर्य किरणा परावृत्ता सन्त इम प्रकाश जनयन्ति ।

## विशेषद्रष्टव्यानि

§ ८१ धूमकेतवो ज्योतिर्विदा चिरपरिचिता सन्ति । अथर्ववेदसहितायां तेषामुल्कानाञ्चो ल्लेखो लभ्यते—

"उत्पाता पार्थिवान्तरिक्षाच्छ नो दिविचरा ग्रहा । श नो भूमिर्वेपमाना शमुल्कानिर्हत च यत् ॥ श नो मृत्युधूर्मकेतु श रुद्रास्तिग्मतेजस ।" (१९ ९) । बृहत्सहितायां केतुचार नामकाध्याये धूमकेतूना विवरणानि दत्तानि । धूमकेतूना भेदा, तेषा सख्या (शत सहस्र वा), तेषा स्वरूपाणि, तेषा दर्शनस्य शुभाशुभफलानि च विस्तरेण व्याख्यातानि तत्र । तेषा द्विज चूलस्य सामान्यतो वर्णितम् । तेषा परिवारा सन्ति (§ ८१६) इति वराहसहितायां निम्नवर्णितेन विभागेन सूच्यते । तत्र ६० सख्याकबुधपुत्रा धूमकेतव, ५६ सख्याकगुरुपुत्रा धूमकेतव, ६० सख्याकभौमपुत्रा धूमकेतव, इत्यादिधूमकेतवो वर्णिता । यथात्र (§ ८१८) प्रसिद्धा धूमकेतवो निवृत्तिकारनाम्ना (हालि धूमकेतु ) मन्नलिता सन्ति, तथैव पैतामहश्चलकेतु, उद्दालकश्वेतकेतु, काश्यपश्वेतकेतु, इत्यादय पराशरसहितायां लिखिता । पाश्चात्यदेशेषु तु सर्वप्रथम 'हालि' महोदयेन ( १७५८ तमे खिस्ताब्दे ) विज्ञापित यद् धूमकेतूना केचित् पुन पुनर्निश्चितसमया नन्तर दर्शन ददति, परन्त्वस्माक पूर्वाचार्यै पूर्वमेव केषाञ्चिद् धूमकेतूना परिभ्रमणमानानि सूचितानि, यथा—

"पैतामहश्चलकेतु पञ्चवर्षशत प्रोष्य उदित । अथोद्दालक श्वेतकेतुर्दशोत्तर वर्षशत प्रोष्य दृश्य । अथ रश्मिकेतुर्विभावसुज प्रोष्य शतम् ।" (पराशर०)

§ ८२ उल्का वस्तुत पतन्ति नक्षत्राणि नेति ज्ञान पाश्चात्यदेशेषु नातिप्राचीनम्, परन्त्वस्माक ज्यौतिषाचार्याणामिद पूर्वमेवाधिगतमासीत् । श्रीपति भास्कराचार्यादिभिरुल्का कुनायोरन्तरेव गणिता । वराहसहितायामुल्काना पञ्च भेदा वर्णिता—

दिवि भुक्तशुभफलाना पतता रूपाणि यानि तान्युल्का ।
धिष्ण्योल्काशनिविद्युत्तारा इति पञ्चधा भिन्ना ॥ (अध्याय ३३)

अत्राशनि 'meteorite उल्कापिण्ड' सम, विद्युत् 'Trai' समा, धिष्ण्या 'fireball' समा, ताराश्च 'meteor train' समा प्रतीयन्ते । वराहसहितायां निम्नश्लोकास्तुल्नाशीर्यार्थं दीयन्ते—

अशनि—अशनि स्वनेन महता नृगजाश्वमृगाश्मवेश्मतरुपशुषु ।
निपतति विदारयन्ती धरातल चक्रसस्थाना ॥

विद्युत्— विद्युत्सत्त्वत्रासं जनयन्ती तटतटस्वना सहसा ।
कुटिलविशाला निपतति जीवेन्धनराशिषु ज्वलिता ॥

धिष्ण्या— धिष्ण्या कृशाल्पपुच्छा धनूंषि दश दृश्यतेऽन्तराभ्यधिकम् ।
ज्वलिताङ्गारनिकाशा द्वौ हस्तौ सा प्रमाणेन ॥

तारा— तारा हस्तं दीर्घा शुक्ला ताम्राब्जतन्तुरूपा वा ।
तिर्यगधश्चोर्ध्वं वा याति वियत्युह्यमानेव ॥

§ ८.३ अशनिनाम्ना उल्कापिण्डाः प्रसिद्धा आसन् । उपर्यशनिविवरणं दत्तमेव ।

५.३१५ ध्रुवप्रकाशस्य ज्ञातारोऽपि पूर्वाचार्या दृश्यन्ते । 'गन्धर्वनगर'-इति नाम ध्रुवयोः दृश्यमानं दृग्विषयं निम्नरूपेण वर्णितं लभ्यते—

अनेकवर्णाकृति खे प्रकाशते पुरं पताकाध्वजतोरणान्वितम् ।[1]
यदा तदा नागमनुष्यवाजिनां पिबत्यसृग्भूरि रणे वसुन्धरा ॥



1. डा० गोरखप्रसादलिखितसौरपरिवारे ध्रुवप्रकाशचित्रयोः स्पष्टतया तोरणपताकाध्वजादीनि दृश्यन्ते ।

# नवमोऽध्यायः

## वेधशाला

[ खगोलीयपिण्डानां निरीक्षणे नेत्रसहायकानां वेधशालावर्तमानविविधयन्त्राणां प्रक्रियोपयोगितयोश्चित्रादिसाहाय्येन वर्णनमत्र दीयते । ]

## ९.१ वेधशाला

ज्योतिर्विद्याया आत्मा वेधकार्यमेव, अतो वेधशालानां तत्र परमं महत्त्वपूर्णस्थानम् । पुरा वेधशालासु केवलं वेधयन्त्राण्यवर्तन्त । परमधुना वेधशाला वेधोपयोगिनां दूरदर्शकादियन्त्राणां शाला एव न, तत्र वेधोपलब्धसूचनागणनार्थं गणनाविभागः, यथार्थव्याख्याकरणार्थं भौतिकशास्त्रविषयकप्रयोगशाला, यन्त्ररचनागृहम्, पुस्तकालयादयस्त्वावश्यं वर्तन्ते ।

आधुनिकवेधशालानामग्रणी 'पलोमर'पर्वते[1] स्थापिता वेधशालास्ति, यत्र विशालतमं परावर्तनात्मकं द्विशत इञ्चीयदूरदर्शकयन्त्रं वर्तते । स्थानमिदं समुद्रतलात् ६००० फिटोच्छ्रये विद्यते, अत एव वायुमण्डलं सर्वदा निर्मलं रजःकणादिशून्यं मेघैरनावृतं वायुसंक्षोभविहीनञ्च वर्तते । समीपे च न किमपि महानगरं विद्यते, यत्रत्यविद्युद्दीपप्रकाशः फोटोफलकगृहीतनक्षत्रचित्रेषु धूमिलत्वं जनयेत् । एवमादर्शस्थाने[2] प्रतिष्ठापिता वेधशालेयं नीहारिका अस्माकमाकाशगङ्गासम्बन्धिनाना विशेषाध्ययनं कुर्वती विश्वरहस्योद्घाटने प्रयत्नशीलास्ति ।

आधुनिकवेधशालासु नैकानि महाभीमकायकानि यन्त्राणि दृश्यन्ते, परन्तु प्राङ्गणजनानां नयने सर्वाधिकमाकर्षति दूरदर्शकयन्त्रं तस्यारोहणकक्षञ्च । दूरदर्शकयन्त्रमेकस्मिन् विशिष्टेऽर्धगोलाकारगृहे तिष्ठति । तच्च सुदृढकक्षकोष्ठभूमिकायां निर्मीयते । दूरदर्शकमाधारस्य प्रत्येकदिग्विभागं प्रदर्शयितुं समर्थं भवेत् । अत एव शिखरगोलार्धो ( द्रष्टव्यमपरपृष्ठे शिखरगोलार्धस्य चित्रम्) वृत्ताकारलौहपथमारूढो वर्तते । शिखरगोलार्धोऽतिभारकः, अत एव लौहपथे स विशालविद्युन्मोटरैर्भ्राम्यते । ( यथा महत्त्वपूर्णरेलवेस्टेशनेषु 'इञ्जिन'स्य मुखं प्रतिकूलयितुं लौहपथाः सन्ति ) ।

दूरदर्शकं क्षितिजात् खस्वस्तिकपर्यन्तं प्रदर्शयितुं समर्थं भवेत्, अत एव शिखरगोलार्धे एकं पृथुविवरं वर्तते (द्रष्टव्यमपरपृष्ठस्य छायाचित्रम्) । विशालविद्युच्चालितयन्त्रैर्दूरदर्शकमुपर्यधस्तश्च

---

१. अमेरिकायाः कैलीफोर्नियाप्रान्ते ।

२. सर्वथा रजःकणादिशून्यं मेघेभ्योऽप्युच्चं स्थितं नगराद् दूरवर्ति स्थानं वेधशालोपयुक्तम् । अस्मादेव कारणात् 'उत्तरप्रदेशीयशासनेन' स्वराज्यकीयवेधशाला नैनीताले स्थापिता ।

( ऊर्ध्वाधरदिशायां ) पृथुचिरमध्यादाकाशं पश्यति। एवं दूरदर्शकं प्रत्येकमुन्नतांशं प्रति ( ऊर्ध्वाधरदिशायां भ्रामयित्वा ) प्रत्येकं दिगंशं प्रति ( शिखरगोलार्धं भ्रामयित्वा ) क्रियते।

नक्षत्राणां सततवेधनार्थमिदमावश्यकं यद् दूरदर्शकमपि नक्षत्रानुसारं पूर्वतः पश्चिमं गच्छेत्। नक्षत्राणि भ्रान्त्यक्षाणां स्थिरत्वादहोरात्रवृत्तेषु भ्रमन्ति। अत एव विद्युच्चालितयन्त्रे



द्विशत इञ्चीयदूरदर्शकस्य शिखरगोलार्धं
[ 'पलोमर' कैलिफोर्निया ]

प्रथमं दूरदर्शकस्य मुखं नक्षत्रं प्रति क्रियते, ततो विद्युच्चालित'घटिका'यन्त्रेण शिखरगोलार्धं सदूरदर्शकोऽहोरात्रवृत्ते भ्रमति। 'घटिका'यन्त्रं पृथ्वीयाक्षमनेन भ्रमति यद् नाक्षत्रदिने पूर्णचक्रं करोति, एवञ्च पृथिव्यक्षभ्रमणं निष्फलीकरोति।

शिखरगोलार्धे वेधकर्तॄणां सौकर्याय कृत्रिमधरातलमस्ति, यद् विद्युच्चालकयन्त्रेणोर्ध्वमधो वा क्रियते। ( क्षितिजवर्तिनक्षत्रवेधार्थं दूरदर्शकं प्रायः क्षैतिजधरातले स्थाप्यते, दूरदर्शकस्य चक्षुस्तालमत्यूर्ध्वे भवति, खस्वस्तिकवर्तिनक्षत्रवेधार्थं दूरदर्शकं प्रायः ऊर्ध्वाधरदिशायां स्थाप्यते

दूरदर्शनस्य चषुतालं वेधशालाकुट्टिमतलं आगच्छति। वेधकर्ता च सदैव चषुतालस्य सम्मुखे वर्तते, अत एव तस्योर्ध्वाधोगमनमपस्य माति )।

उपरि शिखरगोलार्धस्य संक्षिप्त विवरणं दत्तम्। अधुना वेध शालास्थयन्त्राणां विवरणानि दीयन्ते, प्रथमं दूरदर्शनयन्त्रस्य, तत्पश्चाद् दूरदर्शोपकारकयन्त्राणाम्।

## ९.२ दूरदर्शक यन्त्राणि

वेधकार्येषु नियामकानां यथार्थज्ञानाय, खगोलीयपिण्डानां स्पष्ट दर्शनलाभाय, तेषां भौतिकसंरचनां रासायनिकसंरचनाञ्च ज्ञातुं विविधानि यन्त्राणि प्रयुज्यन्ते। एतेषां यन्त्राणां दूरदर्शकयन्त्राणि परममहत्त्वपूर्णानि। दूरदर्शनानि नानाप्रयोजनेषु सहायकानि दृश्यन्ते। तैरेव सूक्ष्मता यथार्थता चापाव, तैः खगोलीयपिण्डाः साक्षात् भवन्ते। नक्षत्राणां फोटोचित्राणि गृह्यन्ते, वर्णच्छत्रादीनां ग्रहणमपि तैः सम्भवम्। एवं दूरदर्शकयन्त्रं परमोपयोगि।



### ९.२१ प्रकाशकिरणानां नियमाः

प्रकाशकिरणा एव वेधकर्तारं नक्षत्रग्रहादिभिः संयोजयन्ति। अत एव प्रकाशकिरणग्रहनियमाः अवश्यं ज्ञातव्याः। एते नियमाः केवलं संक्षेपेणात्र दीयन्ते, विशेषविवरणार्थं भौतिकशास्त्रग्रन्था अवलोकनीया।

(१) प्रकाशकिरणा सामान्यतया तालेन विपाटवेग वा गृह्यन्ते। प्रकाशकिरणास्तालं प्रविश्य यदा निस्सरन्ति तदा ते सदृशा भवन्ति, असमुता वा भवन्ति। तालरचनापेक्षीदं समुत्तलमवतलं वा। समुन्न तोदरतालानि तर्हि एकत्रकिरणमुखो भवेत्, यदि च नतोदरतालानि तर्हि असमुन्नकिरणमुखो भवेत्।

---

१. द्रष्टव्यम् § ४.१

## ( २ ) बिम्बनिर्माणम्



बिम्बनिर्माणम्

उन्नतोदरतालानि नतोदरदर्पणा एव वास्तविकबिम्बं कल्पयन्ति, अत एवैत एव दूरदर्शकेषु प्रयुज्यन्ते । उन्नतोदरतालं प्रविश्य किरणाः संसृतकिरणपुञ्जं सृजन्तीति पूर्वमेवोक्तम् । अत्र काश्चित् परिभाषा दीयन्ते—

तालकेन्द्रम्—तालस्य मध्यवर्तिकेन्द्रं तालकेन्द्रं कथ्यते ।

नाभिः—संसृतकिरणपुञ्जो यस्मिन् बिन्दौ संसरति स नाभिः कथ्यते ।

मुख्याक्षः—नाभि-तालकेन्द्र प्रोतरेखा मुख्याक्षः ।

अनुबद्धनाभिः—मुख्याक्षे नाभिस्तालकेन्द्रस्य एकस्मिन् पार्श्वे वर्तते, तालकेन्द्रात् तस्मिन्नेव दूरत्वे तालकेन्द्रस्य द्वितीये पार्श्वे मुख्याक्षवर्तिबिन्दुः अनुबद्धनाभिः कथ्यते ।

नाभ्यन्तरम्—केन्द्र नाभेरन्तरं नाभ्यन्तरं कथ्यते ।

अत्रोपरि चित्रं द्रष्टव्यम् । चित्रेणैताः परिभाषाः स्पष्टीभविष्यन्ति ।

(१) बिम्बस्य चित्रनिर्माणे प्रयुक्ता नियमाः

(अ) मुख्याक्षसमानान्तराः किरणास्तालं प्रविश्य नाभिं स्पृशन्तो गच्छन्ति ।

(आ) तालकेन्द्रं स्पृशन्तो निर्गताः किरणाः सरलरेखया ( भुग्नतामप्राप्य ) गच्छन्ति ।

(इ) अनुबद्धनाभिं स्पृष्ट्वा गताः किरणास्तालं प्रविश्य मुख्याक्षसमानान्तरा भवन्ति ।



बिम्बनिर्माणे प्रयुक्ता नियमाः

अभिदृश्यतालः

यदि वस्तु तालस्य नाभ्यन्तराद् दूरतरं तर्हि तालं प्रविश्य निर्गताः किरणा वस्तुनोऽधोमुखि बिम्बं कल्पयन्ति। यदि वस्तु सुदूरं वर्तते तर्हि प्रकाशकिरणाः सर्वे नाभिं संस्पृश्य गच्छन्ति। अधोमुखं लघ्वाकारकं बिम्बं नाभ्या भवति।



अभिदृश्य तालम्

चक्षुस्तालम्

यदि वस्तु नाभ्यन्तरात्पदूरे वर्तते तर्हि तालं प्रविश्य निर्गताः किरणा वस्तुन एकमुन्नतं विलुप्तं काल्पनिकं बिम्बं रचयन्ति। साधारणवृद्धिदर्शकस्याचे नियमोऽयं प्रयुज्यते।



६·२२ वर्तनात्मकदूरदर्शकानि

साधारणदूरदर्शकयन्त्र उपर्युक्ततालद्वयस्य प्रयोगः क्रियते। एकस्या नलिकाया एकस्या कोट्यामभिदृश्यतालं स्थाप्यते। द्वितीयकोट्याञ्च चक्षुस्तालम्। नलिकाया दीर्घत्वं द्वयोस्तालयो-

नाभ्यन्तरयोर्योगेन तुल्यम्। चक्षुस्तालं नलिकायामग्रे पश्चाद् वा मृदु सर्पति। प्रथमं बृहन्नाभ्यन्तरकं तालं बिम्बं नाभ्या कल्पयति। द्वितीयं चक्षुस्तालमल्पनाभ्यन्तरकं प्रथमतालकल्पितयथार्थबिम्बस्यातिविस्तृतं बिम्बं कल्पयति।



अभिदृश्यकं दूरदर्शकम्

नतोदरदर्पणजनितबिम्बम्

यदा प्रकाशकिरणाः स्वच्छमसृणदर्पणे पतन्ति, तदा ते किरणाः परावर्तन्ते। यदि दर्पणस्य तलं गोलाकारं तर्हि तत् तालवद् बिम्बं कल्पयति। अनन्तदूरवर्तिनः प्रकाशकिरणा नाभ्यामधोमुखे बिम्बं लम्बाकारकं जनयन्ति। अत एव दूरदर्शकेऽभिदृश्यतालस्थाने नतोदरदर्पणः प्रयुज्यते।



९.२३ परावर्तनात्मकदूरदर्शकम्

परावर्तनात्मकदूरदर्शके त्वभिदृश्यतालस्थाने नतोदरदर्पणः प्रयुज्यते। नतोदरदर्पणो वृत्ताकारः काचनिर्मितो भवति, अस्य बाह्यपृष्ठम् 'अल्मुनियमा'दिपरावर्तनकारिधातुभिराच्छादित भवति। वर्तनात्मकदूरदर्शकेऽभिदृश्यतालमूर्ध्वे वर्तते चक्षुस्तालं चाधः। अत एवाधोवर्तिजना अपि चक्षुस्ताले बिम्बानि पश्यन्ति। परन्तु परावर्तनात्मकदूरदर्शके चाभिदृश्यदर्पणोऽधो वर्तते, नाभिश्चोर्ध्वं वर्तते। तत्र वेधकर्तॄणां गमनं न सम्भवम्। अत एव नाभ्यां (यत्र बिम्बं कल्प्यते)

समतलदर्पणप्रयोगेण बिम्बमन्यत्र गम्यस्थले दृश्यते। समतलदर्पणस्य द्वौ प्रयोगौ प्रसिद्धौ—न्यूटोनियन विधिः, कैसेग्रेनियन विधिश्च।

'न्यूटोनियन'-प्रकारके दूरदर्शकनलिकायामेको लघुः समतलदर्पणः ४५ अंशैः तिर्यक् तिष्ठति। ततो बिम्बं परावर्त्य पार्श्वे पतति। 'कैसेग्रेनियन'-प्रकारक एको लघुरुन्नतोदरदर्पणः



न्यूटोनियन – कैसेग्रेनियन – विधी

प्रतिबिम्बं पुनरभिदृश्यदर्पणं प्रति प्रक्षिपति। अभिदृश्यदर्पणमध्ये एकं विवरं वर्तते, यतो बिम्बं निर्गत्य चक्षुस्ताले पतति।

## ९-२४ दूरदर्शकयन्त्रस्य शक्तयः

दूरदर्शकस्य तिस्रः शक्तयः। प्रथमया तद् लघुवस्तूनि विस्तृतानि करोति, द्वितीयया तद् धूमिलं वस्तु किञ्चित् स्पष्टं करोति, तृतीयया च द्विकादीनां नक्षत्रद्वयस्य परस्परं वैभिन्न्यं प्रकटीकरोति। प्रथमा अभिवर्धनशक्तिः, द्वितीया प्रकाशग्राहिता शक्तिः, तृतीया विश्लेषिणी शक्तिरुच्यते।

### अभिवर्धनशक्तिः

यन्त्रस्याभिवर्धनशक्तिः साधारणतया सर्वाधिकमहत्त्वपूर्णा। द्विनेत्रयन्त्रेण जनो दूरस्थानि वस्तूनि, यानि नेत्राभ्यामेव बिन्दुरूपेण दृश्यन्ते, किञ्चिद् विस्तृततरं पश्यति। अभिवर्धनशक्तिर्नाभिदूरत्वाधीना—

$$\text{अभिवर्धनशक्तिः} = \frac{F}{f} = \frac{\text{अभिदृश्यतालस्य नाभ्यन्तरम्}}{\text{चक्षुस्तालस्य नाभ्यन्तरम्}}$$

यथा यथा चाभिदृश्यतालस्य नाभ्यन्तरस्य मानं वर्धते, चक्षुस्तालीयनाभ्यन्तरस्य मानञ्च हीयते तथा तथाभिवर्धनशक्तिर्वर्धते। अत एव F-स्य मानं वर्धयित्वा f-स्य मानमतिलघु कृत्वाभिवर्धनशक्तिर्वर्ध्यते। परन्त्वस्ति सीमाभिवर्धनशक्तेर्वर्धनस्य। एक इञ्चीयदूरदर्शकस्य महत्तमाभिवर्धनशक्तिः ५०-मिता। शत-इञ्चीयदूरदर्शकस्य ५०००-मिता, द्विशत इञ्चीयदूरदर्शकस्य च १००००-मिता।

### प्रकाशग्राहिता शक्तिः

यथा गृहे कक्षाया वातायनागतः प्रकाशो वातायनक्षेत्राधीनः, तथैव दूरदर्शकस्य प्रकाशग्राहिताभिदृश्यतालस्य क्षेत्रस्याधीना। अत एव यथा यथा ह्यभिदृश्यतालक्षेत्रं वर्धते तथा तथा प्रकाशग्राहिता शक्तिर्वर्धते।

प्रकाशग्राहिता ह्यभिदृश्यतालक्षेत्राधीना, क्षेत्रञ्च सदैव व्यासस्य वर्गाधीनम्। अत एव प्रकाशग्राहिता शक्तिरभिदृश्यतालस्य व्यासवर्गाधीना। अर्थात्

$$\text{प्रकाशग्राहिता शक्तिः} = (\text{अभिदृश्यतालस्य व्यासः})^2 \times \text{स्थिरराशिः।}$$

निशाया मनुष्यस्य नयनतारिका $\frac{1}{4}$ इञ्चमिता भवति। अत एव एक-इञ्चीयदूरदर्शकस्य प्रकाशग्राहिता नयनापेक्षया $\frac{(१)^2}{(\frac{1}{4})^2}$ = १६ गुणिता। अर्थात् तेन दूरदर्शकेन चाक्षुष-नक्षत्राणां १/१६ गुणितभास्वरत्ववतां नक्षत्राणां दर्शनं सम्भवम् (अर्थात् नवमकोटिकनक्षत्राण्यपि दृश्यन्ते)। शत-इञ्चीयदूरदर्शकेन चाक्षुषनक्षत्रस्य १६०००० गुणितभास्वरत्ववताम्, २००-इञ्चीय दूरदर्शकेन चाक्षुषनक्षत्रस्य ६४०००० गुणितभास्वरत्ववतां नक्षत्राणां दर्शनं सम्भवम्।

### विश्लेषिणी शक्तिः

नक्षत्रस्य बिम्बं विवर्तनेन नैकैरेककेन्द्रिकैर्मिलितैर्वलयैरावृतं दृश्यते। अत एव यदि द्वे नक्षत्रे एवं स्थिते यत् तयोरन्तरं वहिर्वलयव्यासादल्पं तर्हि बृहत्याऽप्यभिवर्धनशक्त्या तयोः पृथक्करणं दुष्करम्। विश्लेषिणी शक्तिर्महत्तमकोणीयदूरत्वम्, यतो भिन्ने नक्षत्रे स्पष्टतया विभिन्ने दृश्येते।

$$\text{विश्लेषिणी शक्तिः} = \frac{4''.56}{\text{अभिदृश्यतालस्य व्यासः}}$$

द्विशत-इञ्चीयदूरदर्शकस्य विश्लेषिणी शक्तिः ०''.०२३, अर्थात् यदि द्वे नक्षत्रे परस्परं ०''.०२३ दूरे तिष्ठतस्तर्हि ते पृथक् पृथग् दृश्येते। यदि द्वे नक्षत्रे परस्परं ०''.०२३-मितादल्पदूरे तिष्ठतस्तर्हि ते एकमिव दृश्येते।

क्षैतिजो द्वातन्तुः, प्रायेण दशसंख्यका ऊर्ध्वाधरद्वातन्तवश्च सन्ति। नक्षत्रं सर्वप्रथमं अन्यतम-



याम्योत्तरवृत्तम्

भागं आत्मानं दर्शयित्वा अन्येतरभागं प्रति धावति। वेधकर्ता दूरदर्शकं भ्रामयित्वा नक्षत्रं क्षैतिजतन्तौ स्थापयति। उन्नतांश-कुड्मलश्च स्थिरीक्रियते। नक्षत्रं क्रमश एकैकमूर्ध्वाधरतन्तुं स्पृशति। प्रत्येकस्मिन्नूर्ध्वाधरतन्तुस्पर्शे वेधकर्ता क्षेपक विद्युद्घुण्डिकां संपीडयत्यङ्गुल्या। ततो विद्युद्धारया कालाङ्कक नामके यन्त्रे .. चिह्नानि जायन्ते। कालाङ्ककश्च नाक्षत्रकाल घटिकया सम्बद्धं वर्तते (द्रष्टव्यः § ९·४)। क्षैतिजतन्तुरप्यूर्ध्वाधर-दिशायामितस्ततश्चाल्यते। नक्षत्र-बिम्बञ्च तेन द्विविभक्तं क्रियते। प्रत्ये-कस्मिन् विभाजनकाले विद्युद्घुण्डिका वेधकर्त्रा संपीड्यते। एवं कालाङ्कके चिह्नानि जायन्ते।



दूरदर्शनस्य चतसृषु दिशासु स्थापितानि चत्वारि दीर्घनलिकानि सूक्ष्मदर्शकयन्त्राणि। वैश्वनांशलिखितवृत्ते विभिन्नानि परीक्षणानि दृश्यन्ते। परीक्षणानि च पश्चाद् विश्लेष्यन्ते। यद्यपि वेधकार्याणि सर्वाणि द्रुतगत्या क्रियन्ते, यतो नक्षत्रं क्षिप्रमेव दृश्यक्षेत्राद् बहिर्गच्छति, तथापि विश्लेषणे वर्तते महती गणना। सा सुदीर्घकालेन विभिन्नान् संस्कारान् विधाय क्रियते।

एवं परीक्षणानां निश्लेषणेन नक्षत्रस्य तावदुन्नतांशाः क्रान्त्यंशा याम्योत्तरोल्लङ्घनकालश्च सूक्ष्मतया यथार्थतया च निश्चीयन्ते ।

अधुना वेधकर्ता विद्युद्घुण्डिका न पीडयति । व्यक्तित्वविहीनसूक्ष्ममापक[1]मत्र प्रयुज्यते । वेधकर्ता केवलमूर्ध्वाधरं चक्रं तन्तुनेत्रं भ्रामयति यद् नक्षत्रबिम्बं निरन्तरं द्विविभक्तं वर्तते । कालाङ्के च स्वयंचालित-यन्त्रेण चिह्नान्यङ्क्यन्ते ।

### ९.४ कालाङ्ककयन्त्रम्

याम्योत्तरचक्रस्थविद्युद्घुण्डिकां सम्पीड्य वेधकर्ता विद्युद्धारया कालाङ्के चिह्नानि स्थापयति । कालाङ्ककयन्त्रे एकं पत्रं गोलनलिकोपरि समगत्या मिनटद्वये एकं परिभ्रमणं करोति ।



कालाङ्कयन्त्रम्

अस्मिन् पत्रे एका विद्युल्लेखिनी प्रत्येकस्मिन् सेकिण्डे एकं चिह्नं करोति । सूचिका (लेखिनी) च नाक्षत्रघटिकायन्त्रेण सम्बद्धा वर्तते । यदा वेधकर्ता विद्युद्घुण्डिकां सम्पीडयति तदान्यया लेखिन्या चिह्नं भवति । प्रतिसेकिण्डेऽङ्कितानां चिह्नानां दर्शनेन, वेधकर्तृकृतचिह्नानि सापेक्षतया $\frac{1}{100}$ सेकिण्डभागपर्यन्तं शुद्धतया पठ्यन्ते, कालश्च सूक्ष्मतया ज्ञायते ।



कालाङ्कयन्त्रे चिह्नितं पत्रम्

अत्र वेधकर्तृकृतचिह्नानि X अङ्कितानि ।

1. व्यक्तित्वविहीनसूक्ष्ममापकम् = Impersonal Micrometer

## ९.५ विषुवदीयदूरदर्शकम्

याम्योत्तरचक्रेण खगोलीयपिण्डा अत्यल्पकालपर्यन्तं दृश्यन्ते, यतो दूरदर्शकं सदैव याम्योत्तरदिशायां तिष्ठति, पिण्डाश्च झटिति याम्योत्तररेखामुल्लङ्घ्य लुप्ता भवन्ति। परन्तु खगोलीयपिण्डानां सुष्ठु ज्ञानाय सुनिरीक्षणाय सरलतया फोटोचित्रग्रहणाय च यन्त्रान्तरं प्रयुज्यते। इदं विषुवदीयदूरदर्शकयन्त्रनाम्ना प्रसिद्धम्।

सामान्यतया दूरदर्शकमिदं बृहदाकारकम्। याम्योत्तरचक्रादिषु नक्षत्रधावनस्य कारणं भुवोऽक्षभ्रमणम्, अत एवाक्षभ्रमणकृतधावनस्य प्रतीकारार्थं दूरदर्शकमिदं नाक्षत्रकालघटिकासञ्चालित आरोहणविशेषे स्थाप्यते। नाक्षत्रकालघटिकासञ्चालितयन्त्रं भुवोऽक्षभ्रमणस्य प्रतिकूलदिशायामक्षभ्रमणवेगसमजवेन भ्रमति।

दूरदर्शकमिदमेवमारोह्यते यदाकाशस्य कस्यचिदपि भागस्याभिमुख्यमिदं भजेत। अत्र द्वौ परिभ्रमणाक्षौ परस्परं समकोणकृत् मन्यमानौ वर्तेते। प्रथमः पृथिव्याः परिभ्रमणाक्षसमानान्तरः, द्वितीयश्च परिभ्रमणाक्षलम्बवर्ती। प्रथमो ध्रुवीयाक्षः, द्वितीयश्च क्रान्त्यक्षः कथ्यते। प्रत्येकमक्षस्याधो भचक्रांशचिह्नितं वृत्तं वर्तते। ध्रुवीयाक्षस्याधो होराचक्रं क्रान्त्यक्षस्य चाधः क्रान्तिचक्रं दृश्यते। एतच्चक्रद्वयमेवं सामञ्जस्यपूर्णं यद् यदा दूरदर्शकं याम्योत्तरवृत्तवर्तिबिन्दुं प्रति



विषुवदीयदूरदर्शकम्

तिष्ठति तदा होराचक्रे शून्याङ्को दृश्यते, यदा च विषुववर्तिबिन्दुं प्रति तिष्ठति तदा क्रान्तिचक्रे शून्याङ्को दृश्यते।

यन्त्रान्तराणि च चाल्यति । 'शार्ट'घटिकायामधिकाधिको गतिविकार केवल प्रतिदिन ०.०१ सेकिण्डभागमित ।

अधुना महत्या वेधशालया 'स्फटिकघटिकायन्त्राणि' प्रयुज्यते । नैनीतालस्थ-उत्तरप्रदेशीयवेधशालया स्फटिकघटिकायन्त्र वर्तते । घटिका विद्युत्सचालकयन्त्रेण चाल्यते । सञ्चालकयन्त्रस्य स्फटिकपट्टिकाया स्वतन्त्रकम्पनै: पूर्णतया नियन्त्रितम् । स्फटिक पट्टिका २″+१½″+१″ परिमाणे । स्फटिक पट्टिका प्रदोलीविद्युत्परिपथे नियोजितास्ति । परिपथान्तर्गतावयवा ह्येव संयोजिता वर्तन्ते, यत्तेषां दोलनकाल स्फटिकस्य स्वाभाविकदोलनकालेन सम । स्फटिकपट्टिका चैकस्मिन् सेकिण्ड लक्षवार (१,००,००० वार) कम्पते । अस्या परिपथेऽप्येतावत् अल्पकालिकानि कम्पनानि भवन्ति । विद्युत्सहत्या प्रतिसेकिण्ड १,००० कम्पनानि क्रियन्ते । ततो नैका विद्युद्घटिका चलन्ति । स्फटिकघटिकाया प्रतिदिन ०.००१ सेकिण्डभागादधिको गतिविकारो न भवति ।



स्फटिकघटिकायन्त्रम्

## ९.७ विविधानि यन्त्राणि

### ९.७१ फिलरसूक्ष्ममापकम्

विद्युद्दीयदूरदर्शकयन्त्रेण गृहीतानि छायाचित्राणि वेधस्य पश्चात् परीक्ष्यन्ते, सूक्ष्ममापकेन च माप्यन्ते । परन्तु यदा कदा नेत्राभ्यामेव मापनस्यावश्यकता दृश्यते तथा पिण्डानां योगाय व्यासमानानयने, द्विताना प्रधाननक्षत्र सहचारिनक्षत्र-दूरत्वमानानयने । एतदर्थं फिलरसूक्ष्ममापक प्रयुज्यते । अस्य विवरण § १२.१८ दास्यते ।

## ६७२ नताशदूरदर्शकयन्त्रम् ( नतांशनलिका )

अक्षांशनिर्णयो नतांशदूरदर्शकयन्त्रेण सुकरो भवति। दूरदर्शकविशेषेण नक्षत्रद्वयस्य नतांशा वेधेन ज्ञायन्ते। द्वे नक्षत्रे ईदृशे चीयेते, यत्र प्रथम याम्योत्तरवृत्तोल्लङ्घन यावदस्तस्वस्तिक दक्षिणेन करोति, द्वितीय तावदखरेणोत्तरेण करोति। तयोर्याम्योत्तरवृत्तोल्लङ्घनकालयोरन्तर प्रायेणाल्पमेव। एव यदि स्थानस्याक्षांशा /, तर्हि प्रथमस्य नक्षत्रस्य नतांशा १, /, द्वितीयस्य च नतांशा / ९, । तयोरन्तरञ्च ४,+३, २/ ।

सूक्ष्ममापकस्य तन्तु प्रथम प्रथमस्य बिम्बस्य मध्यस्थानादूर्ध्वत्व मिनोति। यत्र ततोऽधोमुख क्रियते। ततो द्वितीयस्य बिम्बस्य मध्यस्थानादूर्ध्वं तन्तुर्मिनोति। सूक्ष्ममापकस्य तन्तुर्यावदन्तर गच्छति तद् मीयते। तच्चास्ति ,३+३,−२/। यत ५,३, ज्ञातराशी स्त, अत एव / ( अक्षांशा ज्ञायन्ते।



अधुना त्वेकमत्यन्त परिष्कृत यन्त्र प्रयुज्यते। ऊर्ध्वाधरभ्रमणाद् एक पारदयन्त्र भ्रमति। वेधाना फोटोचित्राणि च गृह्यन्ते। तत सूक्ष्ममापकयन्त्रेण दूरत्व मीयते, यन्त्रमिद 'फोटोग्राफिक जेनिथ ट्यूब' नाम्ना प्रसिद्धम्।

## ६७३ अट्टालिकादूरदर्शकयन्त्रम्

विद्युद्दीपारोहणेन दूरदर्शन प्राप्यते, परन्तु सुदीर्घनाभ्यन्तरवतो दीर्घदूरदर्शकयन्त्रस्य भ्रामण न सरल कार्यम्। अत एव सूर्यस्य वर्णमण्डलादीना परीक्षणेषु, यत्र सुदीर्घनाभ्यन्तरवतो दूरदर्शकस्या वश्यकता दृश्यते, तत्रात्र दूरदर्शक प्रयुज्यते।

अट्टालिकादूरदर्शकयन्त्रम्

अट्टालिकादूरदर्शकयन्त्रस्योर्ध्वभाग एक शिखर वर्तते। तत्र 'कोलास्टर' नामक यन्त्र वर्तते। तत्रैको दर्पण समतलको भुवोऽक्षभ्रमणप्रतिकूलदिशाया घटिकायन्त्रेण चाल्यते। विद्युद्दीपारोहणात्स्वदर्पणादस्मात् परावृत्य किरणा द्वितीये दर्पणे पतन्ति। तत परावृत्य दूरदर्शकयन्त्रमतीत्याट्टालिकाधस्तलवर्तिचक्षुस्थाने पतन्ति,

विम्बञ्च कल्पयन्ति। तत्र छायाचित्राणि, वर्णच्छत्रादीनि च गृह्यन्ते। सर्वोच्छ्रयशालि महाविलिम्बदूरदर्शकं 'माउण्टविल्सन' वेधशालायां वर्तते। तस्योच्छ्रयः १५० फिटमितः।

### ६.७४ रश्मिविश्लेषकयन्त्रम्

ज्योतिर्भौतिकविज्ञाने वर्णच्छत्रविश्लेषणस्य परमं महत्त्वं वर्तते। अनेन वर्णच्छत्रेणैव नक्षत्राणां नीहारिकाणामत्याकाशगङ्गासंस्थानानां रासायनिकरचना नक्षत्राणाञ्च वर्णतापक्रमभौतिकस्थित्यादीनि लभ्यन्ते।



रश्मिविश्लेषकयन्त्रम्

रश्मिविश्लेषकयन्त्रेण प्रकाशरश्मीनामवर्णविश्लेषणं क्रियते। रश्मिविश्लेषणप्रक्रियायाः सर्वैरनुभूतमुदाहरणमिन्द्रधनुरस्ति। सूर्यरश्मयो गोलाकारजलबिन्दुभ्यो वर्तिता वर्णविश्लेषणं प्राप्य इन्द्रधनूरूपेण दृश्यन्ते। त्रिपार्श्वस्थापने प्रयोगेण प्रकाशरश्मयो विश्लेषणं भजन्त इति सर्वप्रथमं 'न्यूटन' महोदयेन विदितम्। तेन दृष्टं यत् त्रिपार्श्वमुल्लङ्घ्य सूर्यप्रकाशकिरणा विभिन्नवर्णाः —यथा नीललोहित नील-आसमानीनील हरित् पीत रक्तपीत रक्तवर्णाः भवन्ति। वर्णानां समुदायोऽयं वर्णच्छत्रं कथ्यते।



सरश्मिविश्लेषकदूरदर्शकम्

रश्मिविश्लेषकयन्त्रस्य त्रयोऽत्र भागाः सन्ति। (१) संधानकम् ('कालीमीटरम्'), (२) त्रिपार्श्वम्, (३) दूरदर्शकयन्त्रम्। 'कालीमीटरम्' एका नलिकास्ति यस्या एककोट्यां निर्गमनाल वर्तते, द्वितीयकोट्यामेकं सकीर्णच्छिद्रम्। एष

निर्माणार्थं गृह्यन्ते, अथवा रश्मिविश्लेषकयन्त्रेण वर्णच्छत्रनिर्माणार्थं गृह्यन्ते, अथवा 'धर्मोकूपल' यन्त्रेण तापकमनिर्णयार्थं गृह्यन्ते।




विभिन्नोद्भावनकालैर्विभिन्नवर्णानि लभ्यन्ते । [ चित्र-वैद्यशाला ]

१. अधुना फोटोविद्युत्कोषयन्त्रैः ( फोटो इलेक्ट्रिक सेल )।

नेत्रतारकयोर्गतिस्थिरत्वप्रभावः क्षणिकः, परन्तु फोटोफलके दीर्घकालीनोद्घाटनेन दीर्घकाल-पर्यन्तं प्रकाशः पतति, अतिधूमिलानि नक्षत्राण्यपि प्रकाशतां यान्ति। (द्रष्टव्यान्यधिचित्राणि)।



मन इर्षापतूरदर्शनम्



द्विशत इञ्चीयदूरदर्शकम्

## विशेषद्रष्टव्यानि

अग्रे वर्ण्यमानप्राचीनयन्त्राणां विवरणेन स्पष्टीभविष्यति यद् वयं भारतीया वेधकार्येष्वपि तात्कालिकपाश्चात्यज्योतिर्विद्भ्यो नितरामग्रेसरा आस्म। परमस्माकं वेधशालाः पाश्चात्यवेधशालाभ्यो भिन्ना आसन्। अस्माकं यन्त्राणि सुगमाण्यासन्। तेषां स्थापनमपि नातिदुष्करमासीत्। अत एव ज्योतिर्विद्भिः स्वस्वगृहेषु सामान्या वेधशालाः प्रतिष्ठापिता आसन्। यद्येभ्यो यद्यपि तानि यन्त्राणि सुग्राह्यत्वात् सर्वौचित्य वेधकर्मसु प्रायुज्यन्त।

श्रीजयसिंहमहाराजेन 'दिल्ली' 'जयपुर' 'मथुरा' 'काशी' 'उज्जयिनी' इत्यादिषु नगरेषु वेधशालाः स्थापिता इति सर्वैरपि विदितम्। तत्र प्रायेण निम्नानि यन्त्राणि दृश्यन्ते—

१. सम्राड्यन्त्रम्, २. षष्ठांशयन्त्रम्, ३. राशिवलययन्त्रम्, ४. जयप्रकाशयन्त्रम्, ५. कपालयन्त्रम्, ६. रामयन्त्रम्, ७. दिगंशयन्त्रम्, ८. नाडीवलययन्त्रम्, ९. दक्षिणोत्तरभित्तियन्त्रम्, १०. उन्नतांशयन्त्रम्, ११. चक्रयन्त्रम्, १२. क्रान्तिवृत्तयन्त्रम्।

भास्कराचार्येण सिद्धान्तशिरोमणौ, श्रीपतिना सिद्धान्तशेखरे च यथागमं विस्तरेण वर्णनं कृतम्। प्रमुखयन्त्राण्यत्र वर्ण्यन्ते—

( १ ) गोलयन्त्रम् । अनेन सूर्यस्योन्नतांशानामुन्नतघटिकायाश्च ज्ञानं भवति ।

अपवृत्तगरविचिह्नं क्षितिजे धृत्वा कुजेन संसक्ते ।
नाडीवृत्ते बिन्दुं कृत्वा धृत्वाऽथ चलसमं क्षितिजम् ॥
रविचिह्नस्य च्छाया पतति कुमध्ये यथा तथा विधृते ।
तद्गोले कुजबिन्दोर्मध्ये नाड्यो द्युयाताः स्युः ॥ ( सि० शिरोमणिः

( २ ) नाडीवलयम् । भास्कराचार्येणोक्तम्—

अपवृत्ते कुजलग्ने लग्नं प्राचो लगोलनलिकान्तः ।
भूस्थं ध्रुवयष्टिस्थं चक्रं पट्या निजोदयैश्चाङ्क्यम् ॥
व्यस्तैर्यष्टीभायामुदयेऽर्कं न्यस्य नाडिका ज्ञेयाः ।
इष्टच्छायासूत्रान्तरेऽथ लग्नं प्रमाणं च ॥
केनचिदाधारेण ध्रुवाभिमुखकीलकेऽथ धृते ।
अथवा कीलच्छायातलमध्ये स्युर्नता नाड्यः ॥ ( सि० शि० )

( ३ ) यष्टियन्त्रम् । अनेन दिग्देशकालानामवगमः क्रियते । यथा श्रीपतिना वर्णितम्—

संसाधितायां कृतचक्रमार्गं विधाय वृत्तं समभूप्रदेशे ।
त्रिज्याङ्गुलाङ्कां सुसमां च यष्टिं नष्टद्युति तत्परे निदध्यात् ॥
तदग्रलग्नः खलु शङ्कुवृत्तसन्मूलकेन्द्रान्तरमत्र दृग्ज्या ।
पूर्वापराच्चद्विवरं भुजः स्याच्छङ्कुक्रमस्तोदयसूत्रमध्यात् ॥
शङ्कुक्रमर्कगुणितं विभक्तं तल्लम्बकेन स्फुटमक्षभा स्यात् ।
अभाग्रभागाद्यतभागमौर्वी कार्येह खलु तत्खलु तुल्यजाता ॥

कालावगमनार्थम्—

शङ्कुयष्टिधनुश्चक्रैश्छायायन्त्रैरनेकधा ।......
तोययन्त्रकपालाद्यैर्मयूरनरवानरैः ॥
ससूत्ररेणुगर्भैश्च सम्यक्कालं प्रसाधयेत् ॥ ( सूर्यसिद्धान्ते )

अन्यान्यपि यन्त्राण्यासन् । तेषां विवरणानि तत्रैव द्रष्टव्यानि ।

# दशमोऽध्यायः

[ निरभ्रनभसि प्रोज्ज्वलनक्षत्रनिचयाः केषु केषु परिचितप्राण्यादिरूपेषु नेत्राभ्यामेव पूर्वैर्दृष्टा इत्यत्र वर्ण्यते । ]

## नक्षत्रमण्डलानि

पाश्चात्यज्योतिषग्रन्थेषु सर्वप्रथमं टालेमीमहोदयस्य ग्रन्थे ४८ संख्याकनक्षत्रमण्डला-



नक्षत्रसमूहानां आकृतिस्वरूपाणि

नामुल्लेखो दृश्यते । तत्पूर्वं होमरादिविरचितमहाग्रन्थेषु मृग बहुल सप्तर्ष्यादिनक्षत्रमण्डलानामुल्लेखो वर्तते । आकाशस्य प्रायेण विभिन्नभागे नक्षत्राणां विभिन्नरूपाणि दृश्यन्ते । तानि नक्षत्रमण्डलानि कथ्यन्ते । एतेषां नामानि प्रायेण परिचितानां पशूनां पक्षिणां जलजीवानां ग्रीक रोमकीयपुराणवर्णितनरनारीणां नामभिः सम्बद्धानि । आधुनिकज्योतिर्विदामनुमानमिदं यदिदमाकाशस्य नक्षत्रमण्डलेषु विभाजनं तद्ग्रीकविदुषां कृतिर्नास्ति । ते ग्रीकवासिन इदं ज्ञानं कदाचित् स्वपूर्ववर्ति 'बेबिलोनिया' निवासिभ्योऽर्जितवन्तः । ते च कदाचित् स्वपूर्ववर्तिजनेभ्यः ।[1]

अधुनापि नक्षत्रमण्डलानां महत्ता ज्योतिर्विद्यायां दृश्यते । नक्षत्रमण्डलानां कल्पना नक्षत्राणां नीहारिकाणामन्याकाशगङ्गादिस्थानानाञ्च स्थितिनिर्देशनायोपयुक्ता । यथा 'पोस्टकार्ड'दिषु पत्रसंज्ञायां नगरस्य नाम्नः पश्चात् प्रान्तस्य नाम्नो लेखनेन प्रेषणी (= डाकविभाग) विभागस्य सौविध्येन गन्तव्यस्थानं प्रेषयति, तथैव नक्षत्रं कस्मिन् मण्डले वर्तते इति ज्ञानेन तस्यावलोकनं सरलं भवति ।

नक्षत्रमण्डलानां पुरा सीमा पूर्णतया निर्धारिता नासीत्, परमधुना खिस्ताब्दे १९२८ तमे 'अन्ताराष्ट्रिय ज्योतिषसंघेन' प्रत्येकं सीमा सूक्ष्मतया निर्धारिता । एवं निश्चितानां नक्षत्रमण्डलानां संख्या ८८ अस्ति । नक्षत्रमण्डलानां नामान्यग्रिमानुच्छेदे दास्यन्ते ।

## १०.११ नक्षत्राणां नामानि

प्रायेण पञ्चाशत्संख्याकनक्षत्राणां नामानि पुरातनानि सन्ति । कतिपयानां नामानि 'ग्रीक' भाषायां, 'रोमन'भाषायां वा सन्ति, अन्येषाञ्च 'अरबी'भाषायाम् । अधुना नक्षत्राणां नामानि वैज्ञानिकग्रन्थेषु प्रायेण न प्रयुज्यन्ते । अधुना नामकरणं वैज्ञानिकपद्धत्या क्रियते । अर्थात् प्रथमं नक्षत्रमण्डलस्य नाम लिख्यते, ततश्च 'ग्रीक'वर्णमालायां वर्णाः प्रयुज्यन्ते । नक्षत्रमण्डलस्य भासुरतमस्य नक्षत्रस्य पश्चात् $\alpha$ (ग्रीकवर्णमालायाः प्रथमवर्णः) स्थाप्यते, ततस्तदल्पतरभासुरस्य नक्षत्रस्य पश्चात् $\beta$ (द्वितीयो वर्णः) स्थाप्यते, तत उत्तरोत्तरधूमिलत्वक्रमेण $\gamma$, $\delta$, $\epsilon$ आदयो वर्णाः प्रयुज्यन्ते । अस्मिन् नामकरणे नक्षत्रमण्डलस्य षष्ठ्या रूपं प्रयुज्यते । यथा $\alpha$ Geminorum नक्षत्रम् Gemini (मिथुन) नक्षत्रमण्डलस्य भासुरतमं नक्षत्रमस्ति ।

द्वितीया पद्धतिः 'फ्लामस्टीड'महोदयस्याभिमता, प्रथमपद्धत्या किञ्चिद् भिन्नास्ति । नक्षत्रमण्डलस्य पश्चिमतमनक्षत्रस्य पश्चात् '१' लिख्यते, एवमुत्तरोत्तरं पश्चिमदिशायाः पूर्वदिशां चलित्वा '२' '३' आदि संख्या लिख्यन्ते । यथा हंस ६१ नक्षत्रं हंसमण्डले पश्चिमतमभागात् ६१ तमं नक्षत्रम् ।

परन्तु दूरदर्शकीयनक्षत्राणां गणना लक्षाधिकसंख्याका, अत एवैका तृतीया पद्धतिरवलम्ब्यते । नक्षत्राणां नामकरणं नक्षत्रसूच्या, नक्षत्रसूच्यां तस्य क्रमसंख्यया च क्रियते । एवं HD ३२४१६ नक्षत्रं 'हेनरी ड्रेपर'महोदयस्य नक्षत्रसूच्यां ३२४१६ तमायां संख्यायां वर्तते ।

(नक्षत्रमण्डलानां सारिण्यपरपृष्ठे द्रष्टव्या)

---

1. कदाचिद् भारतीयार्येभ्यः (?)।

१०.२ नक्षत्रमण्डलानां सारिणी

| लैटिन नामानि | षष्ठ्या रूपाणि | आंग्ल नामानि | संस्कृत नामानि |
|---|---|---|---|
| Andromeda | Andromedae | Andromeda | देवयानी |
| Antlia | Antlia | Air Panp | रिक्तीकरः |
| Apus | Apodis | Bird of Paradise | खगः |
| Aquarius | Aquarii | Watercarrier | कुम्भः |
| Aquila | Aquilae | Eagle | गरुडः |
| Ara | Arae | Altar | वेदी |
| Aries | Arietis | Ram | मेषः |
| Auriga | Aurigae | Chariooteer | रथी |
| Bootes | Bootis | Herdsman | भूतपः |
| Caelum | Caeli | Graving Tool | टङ्कम् |
| Camelopardalis | Camelopardalis | Giraffe | करभः |
| Cancer | Cancri | Crab | कर्कः |
| CanesVenatici | CanumVenaticorum | Hunting Dogs | मृगयाश्वानः |
| Canis Major | CanisMajoris | Larger Dogs | प्रश्वा |
| Canis Minor | Canis Minoris | Smaller Dog | श्वा |
| Capricornus | Capricorni | Sea-Goat | मकरः |
| Carina | Carinae | Keel | नौतलम् |
| Cassiopeia | Cassiopeiae | Cassiopeia | शर्मिष्ठा |
| Centaurus | Centauri | Centaur | किन्नरः |
| Cepheus | Cephei | Cepheus | वृषपर्वा |
| Cetus | Ceti | Whale | तिमिः |
| Chamaeleon | Chamaeleontis | Chameleon | कृकलासः |
| Circinus | Circini | Compasses | कर्कटकः |
| Columba | Columbae | Dove | कपोतः |
| Coma Berenices | ComaeBerenices | Bernicis Hair | केशाः |
| Corona Australis | Coronae Australis | Southern Crown | दक्षिणकिरीटः |
| Corona Borealis | Coronae Borealis | Northern Crown | उत्तरकिरीटः |
| Corvus | Corvi | Crow | काकः |
| Crater | Crateris | Cup | चषकः |
| Crux | Crucis | Cross | स्वस्तिकः |
| Cygnus | Cygni | Swan | हंसः |

| लैटिन नामानि | षष्ठ्या रूपाणि | आङ्ग्ल-नामानि | संस्कृत-नामानि |
|---|---|---|---|
| Delphinus | Delphini | Dolphin | धनिष्ठा |
| Dorado | Doradus | Dorado | अक्षिमीन |
| Draco | Draconis | Dragon | कालिय |
| Equuleus | Equulei | Little Horse | अश्वक |
| Eridonus | Eridani | River | वैतरणी |
| Fornax | Fornacis | Furnace | अश्मन्तम् |
| Gemini | Geminorum | Twins | मिथुनम् |
| Grus | Gruis | Crane | बक |
| Hercules | Herculis | Hercules | शौरी |
| Horologium | Horologii | Clock | होरामापकम् |
| Hydra | Hydrae | Sea Serpent | वासुकि |
| Hydrus | Hydri | Water Snake | जलिका |
| Indus | Indi | Indian | सिन्धु |
| Lacerta | Lacertae | Lizard | शरट |
| Leo | Leonis | Lion | सिंह |
| Leo Minor | Leonis minoris | Smaller Lion | सिंहक |
| Lepus | Leporis | Hare | शशक |
| Libra | Librae | Scales | तुला |
| Lupus | Lupi | Wolf | वृक |
| Lynx | Lyncis | Lynx | बिडाल |
| Lyra | Lyrae | Lyre | वीणा |
| Mense | Mensae | Takle Mountain | शैल |
| Microscopium | Microscopii | Microscope | सूक्ष्मदर्शकम् |
| Monoceros | Monocerotis | Unicorn | एकशृङ्ग |
| Musca | Muscae | Fly | मक्षिका |
| Norma | Normae | Level | अह्निनी |
| Octans | Octantis | Octant | अष्टांश |
| Ophiuchus | Ophiuchi | Serpent Holder | सर्पधर |
| Orion | Orionis | Orion | मृग |
| Pavo | Pavonis | Peacock | मयूर |
| Pegasus | Pegasi | Pegasus | उच्चैःश्रवा |
| Perseus | Persei | Perreus | ययाति |
| Phoenix | Phoenicis | Phoenix | गरुड |

| लैटिन-नामानि | षष्ठ्या रूपाणि | आंग्ल नामानि | संस्कृत-नामानि |
|---|---|---|---|
| Pictor | Pictoris | Easel | शिल्पिभः |
| Pirces | Piscium | Fishes | मीनः |
| Pisiis Austrinus | Piscis Austrini | Southern Fish | दक्षिणमीनः |
| Puppis | Puppis | Stern | नौपृष्ठम् |
| Pyxis | Pyxidis | Marineris Compass | दिक्सूचकम् |
| Reticulum | Reticuli | Net | जालम् |
| Sagitta | Sagittae | Arrow | शरः |
| Sagittarius | Sagittarii | Archer | धनुः |
| Scorpins | Scorpii | Scorpion | वृश्चिकः |
| Sculptor | Sculptoris | Sculptois Apparatus | मूर्तिकारफलकम् |
| Scutum | Scuti | Shield | ( ढालम् ) चर्मम् |
| Serpens | Serpentis | Serpent | सर्पः |
| Sextans | Sextantis | Sextant | षडंशः |
| Taurus | Tauri | Bull | वृषः |
| Telescopium | Telescopii | Telescope | दूरदर्शकम् |
| Triangulum | Trianguli | Triangli | त्रिभुजम् |
| Triangulum Australe | Trianguli Australis | Southern Triangle | दक्षिणत्रिभुजम् |
| Tuoana | Tucanae | Toucan | चक्रवाकः |
| Ursa Major | Ursa Majoris | Larger Bear | सप्तर्षिः |
| Ursa Minor | Ursa Minoris | Smaller Bear | ऋक्षकः |
| Vela | Velorum | Sails | नौवस्त्रम् |
| Virgo | Virginis | Virgin | कन्या |
| Volans | Volantis | Flying Fish | उड्डायिमीनः |
| Vulpecula | Vulpeculae | Fox | लोमाशः |

१०.३१ याम्योत्तरवृत्तोल्लङ्घनकालः

पूर्वं वर्णितमेव यद् नक्षत्रस्य याम्योत्तरोल्लङ्घनकालो नक्षत्रस्य विषुवांशतुल्यः, अत एव विदितविषुवांशकस्य नक्षत्रस्य खगोले स्थितिर्नाक्षत्रकालेन ज्ञातुं शक्या। निम्नधारिण्यां प्रतिपक्ष-मिथ्यवेलायां याम्योत्तरवृत्तोल्लङ्घनकारिनक्षत्रस्य नाक्षत्रकालो दत्तः।

## सारिणी १०.३१

| मास दिनाङ्कश्च ↓ / लाग्नराशि: होरामानेन | १८ हो | १९ हो | २० हो | २१ हो | २२ हो | २३ हो | २४ हो | १ हो | २ हो | ३ हो | ४ हो | ५ हो | ६ हो |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ६ जनवरी | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ |
| २१ जनवरी | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ |
| ५ फरवरी | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ |
| २१ फरवरी | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ |
| ५ मार्च | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ |
| २१ मार्च | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ |
| ७ अप्रेल | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ |
| २२ अप्रेल | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० |
| ७ मई | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० | २१ |
| २१ मई | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० | २१ | २२ |
| ७ जून | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० | २१ | २२ | २३ |
| २२ जून | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० | २१ | २२ | २३ | २४ |
| [illegible] जुलाई | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० | २१ | २२ | २३ | २४ | १ |
| २१ जुलाई | १४ | १५ | १६ | १७ | १८ | १९ | २० | २१ | २२ | २३ | २४ | १ | २ |
| ७ अगस्त | १५ | १६ | १७ | १८ | १९ | २० | २१ | २२ | २३ | २४ | १ | २ | ३ |
| २२ अगस्त | १६ | १७ | १८ | १९ | २० | २१ | २२ | २३ | २४ | १ | २ | ३ | ४ |
| ६ सितम्बर | १७ | १८ | १९ | २० | २१ | २२ | २३ | २४ | १ | २ | ३ | ४ | ५ |
| २१ सितम्बर | १८ | १९ | २० | २१ | २२ | २३ | २४ | १ | २ | ३ | ४ | ५ | ६ |
| ७ अक्टूबर | १९ | २० | २१ | २२ | २३ | २४ | १ | २ | ३ | ४ | ५ | ६ | ७ |
| २२ अक्टूबर | २० | २१ | २२ | २३ | २४ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |
| ६ नवम्बर | २१ | २२ | २३ | २४ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
| २१ नवम्बर | २२ | २३ | २४ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० |
| [illegible] दिसम्बर | २३ | २४ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ |
| २२ दिसम्बर | २४ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |

(शीर्षक: रात्रिकालिकहोरा:)

विशेषवक्तव्यानि—

(१) [illegible] ।

(२) [illegible] 'सायंकाल' [illegible], अत एव [illegible] कार्यः ।

(३) [illegible], अत एव [illegible] कार्यः ।

उदाहरणानि—

(अ) नक्षत्रविशेषस्य विषुवांशा ५ होरामिताः सन्ति। ६ नवम्बरे कदा याम्योत्तर मुल्लङ्घयिष्यति ?

६ नवम्बरे ५ होराङ्कः रात्रिकालिकद्वितीयहोराया अधः, अत एव नक्षत्रविशेषः रात्रौ द्वियाद्नवेलायामुल्लङ्घयिष्यति।

(आ) इष्टनक्षत्रस्य विषुवांशा १७ होरामिताः। नक्षत्र कस्मिन् दिनाङ्केऽर्धरात्रौ याम्योत्तरवृत्तमुल्लङ्घयिष्यति ?

रात्रिकालिक २४ होराया अधः १७ अङ्कः ७ जूने अग्रे दृश्यते। अत एव नक्षत्र जूने, अर्धरात्रौ याम्योत्तरवृत्तमुल्लङ्घयिष्यति।

## १०.३२ नक्षत्राणां दिनमानम्

अहोरात्रे नक्षत्र यावत्कालं क्षितिजादुपरि तिष्ठति तावन्मात्रकः कालो नक्षत्रस्य दिनमान मुच्यते। दिनमान दर्शकस्य स्थानाक्षांश नक्षत्रस्य क्रान्त्यंश चापेक्षते। नक्षत्रदर्शनगणनाया दिनार्धमानान्यधिकं प्रयुज्यन्ते, अत एव भारतवर्षोपयुक्ता सारिण्यधो दीयते—

### सारिणी १०,३२

#### नक्षत्राणां दिनार्धस्य मानम्

| इष्टस्थानस्य | δ = नक्षत्राणां क्रान्त्यंशाः | | | | | | |
|---|---|---|---|---|---|---|---|
| अक्षांशाः | +० | +१० | +२० | +३० | +४० | +५० | +६० |
| φ = | हो मि | हो मि | हो मि | हो मि | हो मि | हो मि | हो मि |
| ० | ६ ० | ६ ० | ६ ० | ६ ० | ६ ० | ६ ० | ६ ० |
| +५ | ६ ० | ६ ४ | ६ ८ | ६ १२ | ६ १४ | ६ २४ | ६ ३२ |
| +१० | ६ ० | ६ ७ | ६ १५ | ६ २२ | ६ ३० | ६ ५० | ७ १० |
| +१५ | ६ ० | ६ ११ | ६ २३ | ६ ३६ | ६ ५२ | ७ १५ | ७ ४१ |
| +२० | ६ ० | ६ १५ | ६ ३१ | ६ ४८ | ७ ८ | ७ ४३ | ८ ३६ |
| +२५ | ६ ० | ६ १९ | ६ ३९ | ७ ४ | ७ ३२ | ८ १९ | ९ ३४ |
| +३० | ६ ० | ६ २४ | ६ ५४ | ७ २० | ७ ५६ | ८ ५२ | १२ ०० |
| +३५ | ६ ० | ६ २८ | ६ ५८ | ७ ३६ | ८ २४ | ९ ४४ | —— |

सूत्र कोज्या ( होराकोण ) = − स φ स δ

अस्याः सारिण्याः प्रथमे प्रथमस्तम्भे इष्टस्थानस्याक्षांशाः पठितव्याः, ततस्तेषां सम्मुखवर्तिपङ्क्त्याभिष्टनक्षत्रस्य क्रान्त्यंशानामधो दत्तः कालः पठितव्यः।

उदाहरणम्—नक्षत्रस्य क्रान्त्यंशा +५०। देहरादूने (+३० अक्षांशाः) तस्य कियत्प्रमाणको दिनार्धं।

| | हो | मि |
|---|---|---|
| उत्तरम्— | ८ | ५२ |

## १०.३३ याम्योत्तरवृत्तोल्लङ्घनकाले नक्षत्रस्य नतांशाः

याम्योत्तरवृत्तोल्लङ्घनकाले नक्षत्राणां नतांशा[1] निम्नसारिण्या ज्ञायन्ते।

### सारिणी १०.३३

#### याम्योत्तरवृत्तोल्लङ्घनकाले नक्षत्राणां नतांशाः

| स्थानविशेषस्य | नक्षत्रस्य क्रान्त्यंशाः | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| क्रान्त्यंशाः अक्षांशाः— | $\delta$=० | १० | २० | ३० | ४० | ५० | ६० | ७० | ८० | ९० |
| $\phi$ = | नतांशाः | | | | | | | | | |
| ० | ० | १० | २० | ३० | ४० | ५० | ६० | ७० | ८० | ९० |
| ५ | −५ | ५ | १५ | २५ | ३५ | ४५ | ५५ | ६५ | ७५ | ८५ |
| १० | −१० | ० | १० | २० | ३० | ४० | ५० | ६० | ७० | ८० |
| १५ | −१५ | −५ | ५ | १५ | २५ | ३५ | ४५ | ५५ | ६५ | ७५ |
| २० | −२० | −१० | ० | १० | २० | ३० | ४० | ५० | ६० | ७० |
| २५ | −२५ | −१५ | −५ | ५ | १५ | २५ | ३५ | ४५ | ५५ | ६५ |
| ३० | −३० | −२० | −१० | ० | १० | २० | ३० | ४० | ५० | ६० |
| ३५ | −३५ | −२५ | −१५ | −५ | ५ | १५ | २५ | ३५ | ४५ | ५५ |
| ४० | −४० | −३० | −२० | −१० | ० | १० | २० | ३० | ४० | ५० |

सूत्रं नतांशाः $= -\phi + \delta$

उदाहरणम्—देहरादूनस्याक्षांशाः +३० सन्ति। हंसनक्षत्रमण्डलस्य (क्रान्त्यंशाः +४०°) याम्योत्तरवृत्तोल्लङ्घनकाले किंप्रमाणका नतांशाः।

प्रथमं प्रथमस्तम्भे देहरादूनस्याक्षांशाः +३० पठितव्याः। ततस्तेषां सम्मुखमपि च हंसनक्षत्रमण्डलस्य क्रान्त्यंशानाम् (+४०) अधो दत्तः '१०' अङ्कः पठितव्यः। अत एव याम्योत्तरवृत्तोल्लङ्घनकाले तस्य नतांशा १० मिता भविष्यन्ति। नतांशा धनात्मकाः सन्ति। अत एव याम्योत्तरवृत्तमनु उत्तरदिशायां १० अंशान्तरे हंसमण्डलं द्रष्टव्यम्।

## १०.३४ नक्षत्राणां याम्योत्तरवृत्तोल्लङ्घनकालः, उदयकालः, अस्तकालश्च

६-१०-३१-१०.३३ तमेषु दत्ताभिः सारिणीभिर्नक्षत्राणां याम्योत्तरवृत्तोल्लङ्घनकालादयः सहीविर्धं लभ्यन्ते। प्रथमाभिष्टनक्षत्रस्य विषुवांशाः क्रान्त्यंशाश्च नक्षत्रसूच्यां (मानचित्रे वा) पठ्यन्ते। ततः सारिण्या १०.३१-तमया मध्यरात्र्या नाक्षत्रकालः पठ्यते। सारिण्या १०.३२-तमया च नक्षत्रस्य दिनार्धमानं पठ्यते। नक्षत्रविषुवांशेभ्यो मध्यरात्रिनाक्षत्रकालो विकल्यते, नक्षत्रस्य याम्योत्तरवृत्तोल्लङ्घनस्य स्थानीयकालो लभ्यते। तत उदयकालः (याम्योत्तरवृत्तोल्लङ्घनस्य स्थानीयकालः−नक्षत्रदिनार्धमानम्) अथवास्तकालः (याम्योत्तरवृत्तोल्लङ्घनस्य स्थानीयकालः +

1. नतांशाः = ९०-उन्नतांशाः। याम्योत्तरवृत्तमनु उत्तरदिशायां ×, दक्षिणदिशायां नतांशा गण्यन्ते।

नक्षत्रदिनार्धमानम् ) लभ्यते। सारिण्या १०·२३–तमया च याम्योत्तरवृत्तोल्लङ्घनकाले नक्षत्रस्य नतांशा लभ्यन्ते। एवं कालविशेषे खगोले नक्षत्रस्य याम्योत्तरवृत्तोल्लङ्घनकालं ज्ञात्वा नक्षत्रं सुसौविध्यं दृश्यते।

उदाहरणम्—देहरादूनस्याक्षांशाः+३० । स्वातीनक्षत्रस्य विषुवांशाः ( आसन्नमानेन ) १४ $^{\text{हो}}$, क्रान्त्यंशाश्च ( आसन्नमानेन )+७°३० । ७=दिसम्बरे स्वातीनक्षत्रस्य याम्योत्तरवृत्तोल्लङ्घनकालादीन् लभस्व।

७–दिसम्बरे मध्यरात्र्या नाक्षत्रकालः ५ $^{\text{हो}}$ मितः ( सारिण्या $^{१०·२१}$ तमया ) नक्षत्रस्य दिनार्धमानं ( सारिण्या $^{१०·२१–}$ तमया त्रैराशिकेन ) ६ $^{\text{हो}}$ १८ $^{\text{मि}}$–होरादिकम्। नक्षत्रस्य याम्योत्तरवृत्तोल्लङ्घनस्य स्थानीयकालः

$$६^{\text{हो}} - ५^{\text{हो}} = १^{\text{हो}}$$

अत एव उदयकालः $= १^{\text{हो}} - ६^{\text{हो}}\ १८^{\text{मि}} = १८^{\text{हो}}\ ४२^{\text{मि}}$ ( सायकालिकः अस्त $६^{\text{हो}}\ ४२^{\text{मि}}$ )

कालः $= १^{\text{हो}} + ६^{\text{हो}}\ १८^{\text{मि}} = ७^{\text{हो}}\ १८^{\text{मि}}$ ( प्रातःकालिकः ) याम्योत्तरवृत्तोल्लङ्घनकाल.
$= १^{\text{हो}}$ [ सर्वमेतद् स्थानीयकालेन दत्तम् ] सारिण्या १०.२२ तमया याम्योत्तरवृत्तोल्लङ्घनकाले स्वातीनक्षत्रस्य नतांशाः—२२°१०–मिताः, अर्थात् खस्वस्तिकाद् दक्षिणदिशायां याम्योत्तरवृत्तमनु २२.१० दूरे तद् वर्तते।

## १०.४ नक्षत्राणां मानचित्राणि

पूर्वोक्तोद्देशेन तया स्थितनक्षत्रस्य याम्योत्तरवृत्तोल्लङ्घनकालादयो ज्ञायन्ते, परं नक्षत्रमण्डलानां नक्षत्राणां च स्थानादीनि स्थूलतया मानचित्रैः सुलभं लभ्यन्ते। अत एवाग्रे षड् मानचित्राणि दीयन्ते।

प्रथममानचित्रे ध्रुवस्थानसमीपभागस्थानां नक्षत्राणां स्थानानि चित्रितानि सन्ति। वृत्तस्य परिधौ मासानां नामानि दीयन्ते। ( दिनाङ्काः परिधौ त्रैराशिकेनावगन्तव्याः )। यदि मानचित्रमेव स्थाप्यते यद् वेधदिनाङ्क उपरि भवति, तर्हि मानचित्रे केन्द्रप्रोतोर्ध्वाधररेखा नवमहोराकालिकयाम्योत्तररेखां दर्शयति। दशमहोराकालिकयाम्योत्तररेखोपलब्धये मानचित्रं घटिकासूचिवामविकूलदिशायां होरैकस्थानाद् भ्रामय; एकादशहोराकालिकयाम्योत्तररेखोपलब्धये मानचित्रं घटिका·

सूचिकाप्रतिकूलदिशाया होराद्वयस्थानेन भ्रामय। अष्टमहोराकालिकयाम्योत्तररेखोपलब्धये मानचित्रं घटिकासूचिकानुकूलदिशाया होरैकस्थानाद् भ्रामय।

द्वितीय तृतीय चतुर्थ पञ्चम-मानचित्रेषु नानर्तुषु दृश्यानां नक्षत्राणां स्थानानि दत्तानि। ऋत्वनुकूलमानचित्रं गृहीत्वा मासानुसारं ( दिनाङ्कानुसारं त्रैराशिकेन ) होरावृत्तं पश्य। दिनाङ्कप्रोतहोरावृत्त वर्द्धनिकी नवमहोराकालिकयाम्योत्तररेखा प्रकटयति। विभिन्नहोराकालिकवेधनाय पूर्ववद् मानचित्रं भ्रामय।



८अ
उत्तरार्धे सर्वोदितनक्षत्राणि



दक्षिणार्धे सर्वदोदितनक्षत्राणि

## १०.५ राशिचक्रम्

पूर्वानुच्छेदेषु नक्षत्रमण्डलानि वर्णितानि । अधुना महाकाशस्यान्यद् विभाजनं वर्ण्यते । सूर्यचन्द्रादयः खगोलस्य स्वभ्रमणेषु सर्वाणि स्थानानि नातिक्रामन्ति । सूर्यः केवलं क्रान्तिवृत्ते भ्रमति । अन्ये च ग्रहाः केवलं क्रान्तिवृत्तस्योभयतो नातिदूरान्तरे भ्रमन्ति । अत एव ग्रहाणां स्थितिं ज्ञातुं नावश्यकं ८८-नक्षत्रमण्डलानां ज्ञानम् । केवलं १६-अंशव्यापिमेखला पर्याप्ता । अत एव पुराकाले द्वादशराशीनां प्रयोगो दृश्यते ।

१६–अंशाद्याधिरेताल राशिचक्र कथ्यते। तस्या मध्ये क्रान्तिवृत्त वर्तते। अस्या मेखलाया द्वादश विभागा ज्योतिर्विद्भि कृता। तेषा नामानि मेषादय सन्ति। अधो दीयते राशीना नामानि[1]—

| | लैटिन नाम | आंग्ल नाम | संस्कृत-नाम |
|---|---|---|---|
| १ | Aries | Ram | मेष |
| २ | Taurus | Bull | वृष |
| ३ | Gemini | Twins | मिथुनम् |
| ४. | Cancer | Crab | कर्क |
| ५. | Leo | Lion | सिंह |
| ६. | Virgo | Virgin | कन्या |
| ७ | Libra | Scale | तुला |
| ८ | Scorpio | Scorpion | वृश्चिक |
| ९ | Sagittarius | Archer | धनु |
| १० | Cap m rnus | Goat | मकर |
| ११ | Aquarius | Water Bears | कुम्भ |
| १२ | Pisces | Fish | मीन |

१०६ कृत्रिमतारामण्डलगृहम्

नक्षत्राणां स्थानबोधो मानचित्रेण साधारणतया क्रियते। बगाहालमासिमितवतारैरेवापि



कृत्रिमतारामण्डलगृहम्

१ राशीनामभिज्ञा सर्वे भारतीयपण्डिता, अत पुनाभिर्मयाऽत्र तेषा विवरणं कृतम्।

ज्ञानं सुलभं भवति । परन्तु कृत्रिमतारामण्डलगृहे कृत्रिमनक्षत्राणि कृत्रिमग्रहादयश्च कृत्रिमाकाशे चलन्ति, अत एव तत्र तेषां दर्शनेन ज्ञानं सरलतया भवति ।

कृत्रिमतारामण्डलगृहं गोलार्धाकारं गृहमेव । भूतले दर्शकास्तिष्ठन्ति, तेषामुपरि गोलार्धाकार आकाशो वर्तते । एको यन्त्रविशेषो मध्ये स्थाप्यते । यन्त्रविशेषे विविधस्थानेषु छिद्राणि सन्ति, येभ्यो निर्गताः प्रकाशकिरणा अन्धकारपूर्णनभसि प्रकाशबिन्दून् सृजन्ति । यन्त्रविशेषः स्वस्थाने भ्रमत्यपि । एवमन्धकारपूर्णनभसि चलन्तः प्रकाशबिन्दवो दृश्यन्ते । ते बिन्दवः सूर्यचन्द्रादीन् प्रदर्शयन्ति । २१० पृष्ठे द्रष्टव्यं फोटोचित्रम् ।[1]

## विशेषद्रष्टव्यानि

अस्माकं ज्यौतिषशास्त्रे नक्षत्रमण्डलानि नक्षत्रनाम्ना प्रसिद्धानि । पाश्चात्यानामाकाशस्य ४८-संख्याकनक्षत्रमण्डलेषु ८८-संख्याकनक्षत्रमण्डलेषु वा विभाजनमवैज्ञानिकं प्रतीयते तद् वैच्छिकमस्ति । नक्षत्रमण्डलानां नामानि कल्पनाप्रसूतानि । परं नैवमस्माकं ज्यौतिषशास्त्रे । अस्माकं नक्षत्राणां नामानि योगतारानामानुसारीणि । अत एव प्रतीयते यत् पूर्वं तैर्ज्यौतिर्विद्भिर्वेधेन योगताराणां भोगांशादीन् निश्चित्य, तत्समीपवर्तिक्षेत्राणां योगतारानामानुसारं नामानि कृतानि ।

आकाशस्येदं २७-नक्षत्रेषु विभाजनं पूर्णतया भारतीयानां कृतिः । वेदेषु नक्षत्राणां निम्ननामानि दृश्यन्ते—

कृत्तिका, रोहिणी, मृगशीर्षम् ( इन्वका ), आर्द्रा ( बाहू ), पुनर्वसुः, तिष्यः, आश्लेषा, मघा, फल्गुनी, ( पूर्वा ), फल्गुनी ( उत्तरा ), हस्तः, चित्रा, स्वाती, ( निष्ट्या ), विशाखा, अनुराधा, ( रोहिणी ) ज्येष्ठा, मूलः ( निऋती, मूलबर्हणी ), अषाढा ( पूर्वा० ), अषाढा ( उत्तरा० ), अभिजित्, श्रोणा, श्रविष्ठा, शतभिषक्, प्रोष्ठपदा, रेवती, अश्वयुज्, अपभरणी ।

इदं २७-नक्षत्रेषु विभाजनं चन्द्रकक्षासमीपवर्तिवृत्ताकाशस्यैव विभाजनम् । सूर्यमार्गस्तु १२-भागेषु ( राशिनाम्ना प्रसिद्धेषु ) विभाजितस्तैः ।



1. अचिरात् पूर्वं देहलीनगरे मन्त्रालयाद्विद्युत्-उद्योग मन्त्रालयाद्विप्रभृतिभिः कृत्रिमतारामण्डल-गृहमासीत् ।

# एकादशोऽध्यायः

## नक्षत्रम्

[ कथं नक्षत्राणि भास्वन्ति ? कुत्र च तेषां स्थितिः ? किं तान्यचलानि ? किं तेषां स्वरूपम् ? इत्यादीन्यत्र व्याख्यायन्ते । ]

## ११.१ नक्षत्राणां भास्वरत्वकोटिः

नक्षत्राणां भास्वरत्वमूल्याङ्कनाय प्राचीनानामर्वाचीनानां च सर्वेषां ज्योतिर्विदां स्वाभाविकः प्रयासः, यतो नक्षत्राणां भास्वरत्वविषये वैभिन्न्यं प्रत्यक्षमेव—कानिचन नक्षत्राणि भासुराणि दृश्यन्ते, कानिचन च धूमिलानि । यूरोपे सर्वप्रथमं प्राचीनकाले 'टालेमी' महोदयेन चाक्षुषनक्षत्राणां ( यानि नक्षत्राणि, दूरदर्शकयन्त्रेण विना, नेत्राभ्यामेव दृष्टिगोचरतां यान्ति, तानि चाक्षुषनक्षत्राणि प्रोच्यन्ते ) षट्कोट्यो निर्धारिताः । प्रथमकोट्यां पञ्चदशसङ्ख्याकानि सर्वाधिकभासुराणि नक्षत्राणि स्थापितानि, द्वितीयकोट्यां प्रथमकोटिकनक्षत्रेभ्यः किञ्चिद् धूमिलानि पञ्चाशन्नक्षत्राणि स्थापितानि, एवमुत्तरोत्तरधूमिलत्वक्रमेण प्रथमकोटि-षष्ठकोटि-मध्यवर्तिकोटिषु नक्षत्राणि स्थापयता तेन षष्ठकोट्यां तानि सर्वाधिकधूमिलनक्षत्राणि स्थापितानि यानि तीक्ष्णदृष्टिभिरेव चन्द्ररहितनिशायां विना दूरदर्शकयन्त्रेण दृग्गोचरतामुपयान्ति । सप्तमकोटिकानां नक्षत्राणामीक्षणं न शक्यं विना दूरदर्शकयन्त्रेण ।

नक्षत्राणां 'टालेमी'निश्चितकोटिषु स्थापनं बहुकालपर्यन्तमुररीकृतं ज्योतिर्विद्भिः, परन्तु खिस्तीयोनविंशतिशतकीयकालिकज्योतिर्विद्भिरनुभूतं यदिदं वर्गीकरणमतिस्थूलमेव ! अथ चाक्षुषनक्षत्राणां सूक्ष्मतया स्थापनं दूरदर्शकदृश्यनक्षत्राणां स्थापनं वाऽसम्भवमासीत् । अत एव सूक्ष्मतया




[ चित्रे षड् विद्युद्दीपाः, प्रथमस्य दीप्तिः शतमिता, षष्ठस्य दीप्तिरेकमिता, मध्यवर्तिविद्युद्दीपानां ३९.८,१५.८५,६.३१,२.५१ मिता दीप्तिः । एवमेव नक्षत्राणां भास्वरत्वम् । ]

कोटिनिर्णयप्रसङ्गे समागतो ज्योतिर्विदां समक्षं महत्त्वपूर्णोऽयं प्रश्नः—प्रथमकोटिकानां द्वितीयकोटिकानां नक्षत्राणां मध्ये भास्वरत्वविषये कीदृशः सम्बन्धः ? इति । आरम्भे प्रश्नस्यास्योत्तरं दातुं तेऽसमर्था आसन्, परन्तु खिस्ताब्दे १८५६-तमे 'पाग्सन'महोदयो मनोवैज्ञानिकसूक्ष्मपरी-

क्षणसाहाय्येन समर्थोऽभवत् । तेन दृष्टं यत् प्रथमकोटिकनक्षत्राणि षष्ठकोटिकनक्षत्रापेक्षया शतगुण-भासुराणि । 'हर्शल'महोदयेन पूर्वमेव १८३०-तमे सिस्ताब्दे व्याख्यातमासीद् यद् यदि कोटि-सख्याः समान्तरश्रेण्या वर्धन्ते, तर्हि भास्वरत्व गुणोत्तरश्रेण्या वर्धते । एव प्रथमकोटिकाना षष्ठकोटि-केभ्यः शतगुणभास्वरत्वाद्, भास्वरत्वस्य च गुणोत्तरश्रेण्या स्थितत्वात्, प्रथमकोटिकाना द्वितीयकोटिकाना नक्षत्राणा मध्ये भास्वरत्वविषये सम्बन्धो ज्ञायते । प्रथमकोटिकानि षष्ठकोटिकेभ्य पञ्चाधिककोटिकानि, पञ्चकोट्यन्तरेषु च शतगुणभास्वरत्वम्, अत एव

एकस्मिन् कोट्यन्तरे ५√१०० = २.५१२ गुणक भास्वरत्वम् ।

प्रथमकोटिकानि नक्षत्राणि प्रायो विंशतिसख्याकानि, परन्तु न तेषा समभास्वरत्वम्—कस्यचिद् भास्वरत्वमधिकं कस्यचिच्च किञ्चिन्न्यूनम् । अत एव प्रमाणदण्डोऽनयत्र निश्चेतव्य इति विचार्य ज्योतिर्विद्भिः सर्वसम्मत्या वृषराशिस्थं रोहिणीनक्षत्र कुम्भराशिस्थ श्रवणनक्षत्र चादर्श प्रथमकोटिकनक्षत्र गणितम् ।

## ११.११ शून्यकोटिः, ऋणकोटयश्च

यथा द्वितीयकोटिकनक्षत्रभास्वरत्वस्य २.५१२–गुणकभास्वरत्वं प्रथमकोटिकनक्षत्रस्य, तथैव प्रथमकोटिकनक्षत्रभास्वरत्वस्य २.५१२–गुणकभास्वरत्व शून्यकोटिकनक्षत्रस्य मन्यते । अर्थाद् यदि कस्यचिन्नक्षत्रस्य भास्वरत्व प्रथमकोटिकादर्शनक्षत्रभास्वरत्वस्य २.५१२–गुणकमस्यकोटि भास्वरत्ववतो नक्षत्रस्य ऋणैककोटिर्निर्धारयितव्या । एव २-कोटि-३-कोटिरित्यादिकोट्य-कल्प्यन्ते । लुब्धकनक्षत्रमुज्ज्वलतमं नक्षत्र तस्य कोटिश्च १.६ मिता ।

## ११.१२ पञ्चाधिका कोटिः

तानि नक्षत्राणि यानि दूरदर्शकयन्त्रेण विना तीक्ष्णदृष्टिभिर्नरैश्चन्द्रहीननिशायामीक्ष्यन्ते षष्ठ कोटिकानीति पूर्वं व्याख्यातम्, परन्तु कल्पनेतानि नक्षत्राणि यानि न दृश्यन्ते नेत्राभ्याम् । ईदृशानि बहुसख्याकानि दूरदर्शकयन्त्रेण नेत्रगोचरता भजन्ते । एतानि दूरदर्शीयनक्षत्राणि कथ्यन्ते । परन्तु दूरदर्शीयनक्षत्राण्यपि भास्वरत्वविषये विभिन्नानि, तेषामप्युत्तरोत्तरधूमिलत्वक्रमेण सप्तमाष्टमादि-कोटयो गण्यन्ते । एतेषा कानिचनातिस्पष्टानि चक्षुस्तालेन नेत्राभ्यामेवावलोक्यन्ते, कानिचन च दूरदर्शननिहित'कैमरा'यन्त्रगृहीतफोटोचित्र एव लभ्यन्ते । यतो नेत्रतारिकयोर्भास्वरत्वप्रभाव क्षणिकः, परन्तु फोटोप्लेटे दीर्घकालीनोद्घाटनेन दीर्घकालपर्यन्तं नक्षत्रप्रकाशः पतति, अतिधूमिलानि नक्षत्राण्यपि प्रकाशता यान्ति ( विस्तरेण व्याख्यातमिद ६९.७५ तमे ) । अत इदानीं दूरदर्शकयन्त्रेण +२१.५–कोटिकनक्षत्राण्यपि भाव्यन्ते, २००-इञ्चीयदूरदर्शकयन्त्रेण +२२.५–कोटिकनक्षत्राण्यपि[1] दृश्यन्ते ।

## ११-१३ सूर्यचन्द्रशुक्राणां कोटिः

सूर्यस्य भास्वरत्वकोटिः २६.७२ मिता, अर्थात् प्रथमकोटिकनक्षत्रभास्वरत्वापेक्षया १,२२,१८,००,००,०००–गुणकमस्य भास्वरत्वम् । चन्द्रस्य कोटिः १२.५ अर्थात् २,५१,२००

१. २२.५ कोटिकनक्षत्राणां धूमिलत्वमेवं साक्षतया बोध्यते–यदि १५,८१,५८,०००-संख्याकानि २२.५ कोटिकनक्षत्राणि मिलितानि भवेयुः तर्हि तेषा पिण्डः प्रथमकोटिकनक्षत्रतुल्यो भास्वरत्वविषये भवेत् ।

प्रथमकोटिकनक्षत्राणां समूहश्चन्द्रतुल्यो भवेत्। शुक्रस्य सर्वाधिकौज्ज्वल्यकाले प्रायः ४.३ मिता कोटिः।

## ११.१४ सापेक्षिकभास्वरत्वनिश्चयः

यदीष्टनक्षत्रस्य कोटिः $को_1$, उपमेयनक्षत्रस्य कोटिः $को_2$, तयोर्भास्वरत्वञ्च क्रमशः $भा_1$, $भा_2$, तर्हि तेषां सापेक्षिकभास्वरत्वमनेन सूत्रेण ज्ञायते—

$$सापेक्षिकभास्वरत्वम्\ \frac{भा_1}{भा_2} = २.५१२^{(को_2 - को_1)}$$

$$अथवा\ लघुगणकं\ \frac{भा_1}{भा_2} = ०.४(को_2 - को_1)$$

उदाहरणम्—शुक्रस्य कोटिः −४.३ मिता। तस्य प्रथमकोटिकनक्षत्रापेक्षया भास्वरत्वं गणय।

$$\frac{भा\ शुक्रस्य}{भा\ प्रथमकोटिनक्षत्रस्य} = २.५१२^{\{१-(-४.३)\}}$$

$$= २.५१२^{१+४.३} = २.५१२^{५.३} = १३२$$

अर्थात् शुक्रस्य भास्वरत्वं = १३२ गुणप्रथमकोटिकनक्षत्रभास्वरत्वम्। एवं शुक्रः १३२-प्रथमकोटिकनक्षत्राणां समूहेन तुल्यः।

## ११.२ कोटिभेदाः, तन्निश्चयविधयश्च

अचिरात्पूर्वं दूरदर्शकयन्त्रेण नेत्राभ्यामेव कोटिनिर्णयोऽक्रियत, परन्त्वधुना वेधशालायां फोटोग्राफयन्त्रैः रश्मिविश्लेषकयन्त्रैरन्यैश्च सूक्ष्मगणनयन्त्रैरनेकेषामदृष्टपूर्वाणां नक्षत्राणां कोटिनिश्चयः सूक्ष्मतया क्रियते। कोटिभेदा नैके, तथापि प्रमुखभेदास्तेषां विभिन्ना निश्चयविधयश्चाधो दीयन्ते।

## ११.२१ (क) चाक्षुषकोटिः

नेत्राभ्यामेव कोटिनिश्चयकरणमसम्यगतिदुष्करम्, परन्तु नक्षत्रद्वयस्य सापेक्षिकभास्वरत्वनिर्धारणं सर्वथा सरलमेव। अत एव चाक्षुषकोटिः सापेक्षिकभास्वरत्वनिर्धारणे निश्चीयते। अत्र द्वे पद्धती प्रसिद्धे—

(१) भुवनस्थस्य प्रकाशस्य एकस्माद् दर्पणात् परावृत्य तस्मिन्नेव दूरदर्शकयन्त्रे आगतस्य प्रतिबिम्बस्य प्रकाशः पतति। एतेन सूक्ष्मयन्त्रेण भुवनस्थस्य प्रकाशकिरणानां तावत्तावन्न्यूना क्रियते यावद् भुवनस्थस्य भास्वरत्वमिष्टनक्षत्रभास्वरत्वतुल्यं भवति। एवम् यन्त्रे ('फोटोमीटर'नामयन्त्रे) सूक्ष्मगणनसाधनानि विद्यन्ते, यैर्भुवनस्थस्येष्टनक्षत्रापेक्षया भास्वरत्वगुणकं निश्चीयते। भास्वरत्वगुणकोपलब्धे कोटिनिश्चयः सुकरः।

(२) भुवनस्थस्य कदाचिदनुपलभ्यत्वात् (यथा दक्षिणगोलार्धे) दुर्लभत्वाच्च (यथा मेघावृताकाशे) इष्टनक्षत्रकोटिनिश्चये बहुबाधा आपतन्ति, अत एव तद्बाधापरिहारार्थं ज्योतिर्विद्भिर्भुवनस्थनक्षत्रभास्वरत्वतुल्यभास्वरत्वयुतः कृत्रिमप्रकाशो रचितः। अनेन कृत्रिमप्रकाशेन तोल्यते इष्टनक्षत्रभास्वरत्वम्।

## ११-२२ ( ख ) फोटोविषयककोटिः

यदि कस्यचिदाकाशखण्डस्य फोटोचित्रमालिख्यते, फोटोचित्रञ्च परीक्ष्यते तर्हि तत्र कस्य-चिन्नक्षत्रस्य बिम्बं किञ्चिद् बृहत्, कस्यचिच्च किञ्चिद् लघु दृश्यते । ( द्रष्टव्यमत्र फोटोचित्रम् )—



अत्रोपरि स्थितस्य नक्षत्रस्य व्यासोऽधिकः, अत एव तस्य भास्वरत्वमधिकम् ।

इदं सुव्यक्तमेव यद् बृहती छायातिभासुराणां भानाम्, लघ्वी च छायाल्पभासुराणां भानाम् । अयं नक्षत्रप्रतिबिम्बव्यास-भास्वरत्व-सम्बन्धो मूलाधारः सूक्ष्मफोटोविषयककोटिनिर्ण-



रक्तशोधनयन्त्रयुक्तकैमरागृहीतचित्रम्  नीलशोधनयन्त्रयुक्तकैमरागृहीतचित्रम्

§ ११-२३१ द्रष्टव्यम्

यस्य । परन्त्विदं स्मर्तव्यं यत् फोटोफलकं वस्तूनां विभिन्नान् वर्णान् समरूपेण न गृह्णाति । नीलवर्णः फोटोफलकं क्षिप्रं प्रभावितं करोति, तस्य प्रतिबिम्बश्च गाढं दीर्घश्च भवति, रक्तवर्णश्च फोटोफलकं विलम्बेन प्रभावितं करोति, तस्य प्रतिबिम्बश्च तावन्मात्रो गाढं दीर्घश्च न भवति । अत एव नीलवर्णानां नक्षत्राणां प्रतिबिम्बव्यासस्तत्समभासुररक्तवर्णनक्षत्राणां प्रतिबिम्बव्यासात् सर्वथा फोटोफलके आयतो दृश्यते, अर्थान्नीलवर्णनक्षत्राणां कोटिस्तत्समभासुररक्तवर्णनक्षत्रकोट्यपेक्षया न्यूना[1] प्रतीयते ।

### पद्धतिः

यद्येकस्मिन्नेव फोटोफलके समकालिकोद्घाटनं प्रदायैकस्य नक्षत्रस्य द्वे फोटोचित्रे गृह्येते । प्रथमचित्रग्रहणे फोटोयन्त्रकुहरं पूर्णं विवृतम्, द्वितीयचित्रग्रहणे फोटोयन्त्रकुहरं तु अवशमितं विवृतम्, तर्हि द्वितीयचित्रगतप्रतिबिम्बव्यासेन गणिता फोटोविषयककोटिः प्रथमचित्रगतप्रतिबिम्बव्यासगणितकोट्यपेक्षया स्वेक्षमितास्या । अनेन सिद्धान्तेनोपमेयनक्षत्रस्य तुलनायामिष्टनक्षत्रस्य कोट्यन्तरं निश्चीयते । ततो वास्तविकी फोटोविषयककोटिर्गण्यते । अत्र प्रमाणदण्डरूपं ध्रुवकनक्षत्रस्य भास्वरत्वम् । तच्च ज्योतिर्विद्भिः सर्वसम्मत्या-२·६ मितं गृहीतम्, अर्थाद् ध्रुवकस्य फोटोविषयककोटिश्चाक्षुषकोटिसमैव ।

तुलनासौकर्याय ज्योतिर्विद्भिः केषाञ्चिन्नक्षत्राणां फोटोविषयककोटिः सूक्ष्मगणनया सुनिश्चिता । यतो ध्रुवनक्षत्रं ध्रुवसमीपवर्तीनि नक्षत्राणि च प्रायेण सर्वत्र ( उत्तरीयगोलार्धे ) सर्वदा दृश्यन्ते । अत एव ध्रुवादद्यद्वयान्तर्वर्तिनां ९६ संख्याकानां नक्षत्राणां कोटयो निर्विवादरूपेण निश्चिताः । अत्र प्रथमकोटिमारभ्य विंशतिकोटिपर्यन्तं नक्षत्राणि वर्तन्ते । तैस्तुलनां विधाय भास्वरत्वतारतम्यफोटोविषयकोटिर्निश्चीयते । अयं ९६ नक्षत्राणां समूहो 'ध्रुवश्रेणी'नाम्ना प्रसिद्धः ।

### ११·२३ (ग) फोटोचाक्षुषकोटिः

पूर्वानुच्छेदे व्याख्यातं यत् फोटोफलकं नक्षत्रभास्वरत्वेन समरूपेण प्रभावितं न भवति । तस्य नीलवर्णग्राहकताऽधिका, रक्तवर्णग्राहकता चाल्पा । अत एव फोटोविषयककोटिश्चाक्षुषकोटेर्भिन्ना । परन्तु फोटोफलकमपि नेत्रतारकमिव वर्णग्राहि भवेदिति व्यवहारसौकर्याय ज्योतिर्विदां चिन्ताऽऽसीत्, सा चाधुना विशेषप्रकाशशोधनयन्त्रप्रयोगविस्तारेण सफला । फोटोयन्त्रमुखे विशेषप्रकाशशोधनयन्त्रं स्थाप्यते । प्रकाशशोधनयन्त्रमेवं रच्यते यत्तेन शुद्धानां किरणानां प्रभावो फोटोफलके नेत्रतारकयोरिव । अत एव फोटोफलकपतितकिरणा नेत्रदृष्टप्रतिबिम्बसमं प्रतिबिम्बं रचयन्ति । एवं निश्चिता कोटिः फोटो चाक्षुषकोटिः प्रोच्यते ।

### ११·२४ वर्णसूचकम्

पूर्वं स्पष्टीकृतं यत् प्रकाशशोधकयन्त्ररहितफोटोयन्त्रेण समभासुराणामपि नक्षत्राणां विभिन्नवर्णत्वाद् विभिन्ना फोटोफलके छाया, परन्त्वत्र वर्तते भिन्नतायामपि नियमः । फोटो

---

1. यथा यथा भास्वरत्वमधिकं तथा तथा मात्रकोटिरल्पा ग्राह्या ।

विषयककोटि-चाक्षुषकोटिमध्य उपलभ्यते नियमविशेषः । फोटोविषयककोटि-चाक्षुषकोट्यन्तर नक्षत्रस्य वर्णापेक्षि । इदमन्तर नक्षत्रस्य वर्णसूचक कथ्यते । अर्थात्—

फोटोविषयककोटिः—चाक्षुषकोटिः = वर्णसूचक यदि कस्यचन नक्षत्रस्य रक्तवर्णकस्य चाक्षुषकोटिः ( फोटोचाक्षुषकोटिर्वा ) + ४.० मिता, निश्चयतस्तस्य फोटोविषयककोटी रक्त-वर्णत्वात् किञ्चिदधिका, यथा + ५.५ मिता, तर्हि वर्णसूचकं + १.५ मितम् । एवमेव यदि कस्यचि-न्नीलवर्णकस्य नक्षत्रस्य चाक्षुषकोटिः + ४.८ मिता, फोटोविषयककोटिश्च + ४.९ मिता, तर्हि तस्य वर्णसूचकं −०.१ मितम् । यथा यथा नक्षत्रस्य वर्णोऽधिकाधिक रक्तत्वया तथा वर्णसूचकं धनदिशाया वर्धते, यथा यथा तस्य वर्ण उत्तरोत्तर नीलत्वया तथा ऋणदिशाया वर्णसूचक वर्धते ।

पूर्वानुच्छेदे ( § ११.२१ तमे ) व्यक्त यद् लुब्धकस्य फोटोविषयककोटिश्चाक्षुषकोटिसम १.६ मिता, अत एव लुब्धकस्य वर्णसूचक शून्यमितम् । ऋणदिशाया वर्णसूचक −०.३ पर्यन्तम्, धनदिशायाश्च वर्णसूचक + २ पर्यन्तम् ( अतिधूमिलनक्षत्राणाञ्च + १४ पर्यन्तम् ) ।

व्यवहारे वर्णसूचकमचिरेणैष्टनक्षत्रस्य विभिन्नवर्णग्राहिफलकपतितबिम्बस्य परीक्षणेन तुलनया च गण्यते । नीलवर्णग्राहिफलके रक्तवर्णग्राहिफलके चैकस्यैवाकाशक्षेत्रस्य द्वे फोटोचित्रे §–११.२२-तमे दत्ते ।

वर्णसूचकस्य ज्योतिर्भौतिकव्यापारेऽतिमहत्त्व वर्तते । वर्णसूचकेन वर्णच्छटीयवर्गः (§ ११.७०-तमे), तापक्रमश्च ( § ११.६२ तमे ) ज्ञायेते ।

## ११.२४ (घ) फोटोविद्युत्कोटिः

भास्वरत्व फोटोविद्युत्पद्धत्यापि निश्चीयते, एव निश्चिता च कोटिः फोटो विद्युत्कोटिरुच्यते । यदा प्रकाशकिरणाः सोडियम-पोटेशियम रूबीडियमादिधातुषु पतन्ति, तदा धातव पतितकिरणमात्रानुसार विद्युत्कणानुद्गिरन्ति—यदि किरण मात्राऽधिका तर्हि अधिकमात्रया विद्युत्कणा उद्गीर्यन्ते, यदि किरण मात्राऽल्पा तर्हि स्वल्पमात्रया विद्युत्कणा उद्गीर्यन्ते । अनात्यन्तसूक्ष्म ग्राहिणा यन्त्रेण ( द्रष्टव्यमन्यत् फोटोचित्रम् ) उद्गीर्णविद्युत्कणा गण्यन्ते । सिद्धान्तोऽयं नक्षत्रभास्वरत्वविषयेऽपि प्रयुज्यते । इष्टनक्षत्रस्यो पमेयनक्षत्रस्य च प्रकाशकिरणोद्गीर्णविद्युत्कणा गण्यन्ते, परस्पर भास्वरत्वतारतम्य च लभ्यते । एतत्तारतम्य



फोगीमीटर यन्त्रम्
[ हार्वर्ड वेधशाला ]

गणनासिद्धान्तश्चाक्षुपकोटिविषये फोटोविषयककोटिनिर्णये वा स्वीकृत स एवानोररीक्रियते, अर्थात् प्रथमकोटिकनक्षत्रस्य भास्वरत्व षष्ठकोटिकनक्षत्रभास्वरत्वापेक्षया शतगुणकम् । यथा फोटो विद्युद्गृहीतप्रकाशरश्मयो नेत्रगृहीतप्रकाशरश्मिभ्यो नितान्त भिन्ना, अत एव न विद्यते कोऽपि स्फुटसम्बन्धो फोटोविद्युत्कोटि चाक्षुपकोटिमध्ये । अनया चाधुनिकतमया पद्धत्या पूर्वप्रचलिता फोटोपद्धति प्रायेणापाकृता । अनया च फोटोविद्युत्पद्धत्या सर्वाधिक सूक्ष्मतया भास्वरत्वतारतम्य मानमधिगम्यते, विकारिनक्षत्राणाञ्च भास्वरत्वतारतम्यविषये त्विय पद्धतिरेव सफला ।

## ११ ८५ ( ड ) यथार्थकोटि

इत पूर्वमस्माभिर्या कोटिर्निर्धारिता सा प्रतीयमाना कोटिरेव । [illegible] नक्षत्रस्य यथार्थभास्वर त्वकोटि दूरत्वञ्चापेक्षते । लौकिकव्यवहारेऽपि दृष्टमेव सर्वैर्यद् यथार्थभास्वरत्व भास्वरत्व दूरत्व चापेक्षते । अर्थाद् यथा यथा भासुरपदार्थो दूरं गच्छति तथा तथा तस्य भास्वरत्व मन्द प्रतीयते, यथा यथा च [illegible] समीपमागच्छति तथा तथा तस्य भास्वरत्व तीव्र प्रतीयते । एकोऽतिभासुर , परन्त्वति दूरवर्तिपदार्थ एव न प्रकाशवान् स्याद् यथैकस्तदल्पभासुर किन्तु समीपवर्तिपदार्थं । अनेन नियमेन एक वस्तुतोऽतिभासुर नक्षत्र सुदूरवर्तित्वात्तया न प्रकाशते यथान्यत्तदपेक्षया समीपवर्ति स्वल्पभासुर नक्षत्रम् । अत एव यथार्थभास्वरत्व प्रतीयमानभास्वरत्वाद् भिन्नम् ।

यथार्थकोटिरेव निर्णीयते । यतो यथार्थकोटिर्दूरत्वापेक्षिणी, अत एव प्रमाणदूरत्वे प्रत्येक नक्षत्रस्य किंमात्रक प्रतीयमानभास्वरत्व स्यादिति निश्चित्य यथार्थकोटिनिश्चय शक्य । प्रमाणदूरत्वमिद दशपारसेकमितम्[1] उररीकृत सर्वै ज्योतिस्सूरिभि । अर्थादिष्टनक्षत्र निजयथार्थदूरत्व विहाय दशपारसेक ( ३२६ प्रकाशवर्ष )[1] दूरत्वे स्थित सद् यावन्मानक भास्वरत्व प्रकटयेत् , या च तस्य प्रतीयमाना कोटिर्भवेत् , तत्तस्य यथार्थभास्वरत्वम्, सा च तस्य यथार्था कोटि ।

उपरि व्यक्तमेव यद् यथार्थभास्वरत्वकोटिर्यथार्थोक्तस्य दूरत्व चापेक्षते । अत एव प्रतीयमान चाक्षुपकोटिं नाक्षत्रदूरत्वञ्च विज्ञाय यथार्थभास्वरत्वकोटिरधिगम्यते । अत्र निम्नसूत्र प्रयुज्यते—

यथार्थचाक्षुपकोटि =चाक्षुपकोटि +५+५ ल्घुगणक $\left(\frac{१}{\text{दूरत्वम्}}\right)$ पारसेकमाने ।

अथवा

यथार्थचाक्षुपकोटि =चाक्षुपकोटि +५+५ ल्घुगणक( लम्बन )पारसेकिण्डमाने

एवमेव यथार्थकोटो विषयककोटिर्लभ्यते ।

उपरि दत्तविधिना सूर्यो योऽस्माक लोक प्रकाशनो नयति षष्ठमकोटिकनक्षत्रमिवातिधूमिलं कृच्छ्रेण दृष्टिगोचरतां यास्यति, यत

[ सूर्यस्य यथार्थचाक्षुपकोटि =—२६ ७२+५+५ ल्घुगणक$\left(\frac{१}{२,०६,२६५}\right)$

---

१ पारसेक प्रकाशवर्षादीनां मानमग्रे द्रष्टव्यम् ।

२ सूर्यस्य लम्बनं २,०६,२६५″ मन्यतेऽत्र ।

= −२६·७२+५+५ लघुगणक ( २,०६,२६५ )
= −२६·७२+५+५×५·३१४
= −२६·७२+५+२६·५७=४·८५ ]

### ११·२६ नक्षत्राणां सम्मिलितौज्ज्वल्यम्

समस्तनक्षत्राणां प्रकाशः १,४४० संख्याकप्रथमकोटिकनक्षत्राणामौज्ज्वल्यसमः। अर्थात् ६·१ कोटिनक्षत्रभास्वरत्वसमः। यतः पूर्णचन्द्रस्य कोटिः—१२·१ *मिता, अत एव* समस्तनक्षत्राणि पूर्णचन्द्रौज्ज्वल्यशतांशतुल्यं प्रकाशमस्मभ्यं ददति।

### ११·२७ नक्षत्राणामौज्ज्वल्यम्

पूर्वानुच्छेदेनोपलभ्यते यदौज्ज्वल्यं यथार्थचाक्षुषकोट्यपेक्षि। यथा यथार्थकोटिविनिश्चये दशपारसेकदूरत्वं प्रमाणरूपेण स्वीकृतम्, तथैव तुल्नात्मकौज्ज्वल्यायात्र सूर्यस्यौज्ज्वल्य प्रमाणरूपेणाङ्गीक्रियते। दृष्टनक्षत्रौज्ज्वल्यनिर्धारणे निम्नसूत्रं प्रयुज्यते—

$$\frac{\text{दृष्टनक्षत्रौज्ज्वल्यम्}}{\text{सूर्यौज्ज्वल्यम्}} = २·५१२$$ (सूर्यस्य यथार्थकोटिः—नक्षत्रयथार्थकोटिः)

यतः सूर्यौज्ज्वल्यमस्मिन् मानदण्डे त्वेकमितम्, सूर्यस्य यथार्थकोटिः ४·८५ मिता; अत एव

४·८५ नक्षत्रयथार्थकोटिः

दृष्टनक्षत्रौज्ज्वल्यम् = २·५१२

अथवा लघुगणक( दृष्टनक्षत्रौज्ज्वल्यम् ) = ०.४ ( ४.८५—नक्षत्रयथार्थकोटिः)

उदाहरणम्—लुब्धकस्य औज्ज्वल्यं गणय।

लुब्धकस्य यथार्थचाक्षुषकोटिः = +१·३ [ पूर्वमेव दत्ता ],

अतो लघुगणक( लुब्धकौज्ज्वल्यम् ) = ०·४( ४·८५ − १·३० )
= ०·४ × ३·५५
= १·४२

लुब्धकौज्ज्वल्यम् = $१०^{१·४२}$ = ३०

अर्थाद् लुब्धकं सूर्यापेक्षया ३० गुणकं भासुरम्।

### ११·२८ उज्ज्वलतमानि नक्षत्राणि

उज्ज्वलतमं नक्षत्रं लुब्धकम्। अन्यानि प्रसिद्धानि भासुरतमानि नक्षत्राण्यधो दीयन्ते सारिण्याम्—

## उज्ज्वलतमानां नक्षत्राणां सारिणी

| नाम | | प्रतीयमाना चाक्षुषकोटिः | वर्णच्छत्रीय-वर्गः | लम्बनम् | दूरत्वं प्रकाशवर्षेषु | यथार्थ-चाक्षुषकोटिः |
|---|---|---|---|---|---|---|
| α प्रश्वन् | लुब्धक | −१·५८ | $A_0$ | ·३७८ | ८·६ | +१·३ |
| α नौतल | अगस्त्य | −०·८६ | $F_0$ | ·०३३ | १००० | −३·२ |
| α किन्नर | मित्र | +०·०६ | $G_0$ | ·७४८ | ४·४ | +४·४ |
| α वीणा | अभिजित् | ०·१४ | $A_0$ | ·१२३ | २६ | +०·५ |
| α रथिन् | ब्रह्महृदय | ०·२१ | $G_0$ | ·०७७ | ४२ | −०·४ |
| α भूतप | स्वाती | ०·२४ | $K_0$ | ·०९८ | ३३ | +०·२ |
| β मृग | 'रीगेल' | ०·३४ | $B_8$ | ·००६ | ५४० | −५·८ |
| α श्वन् | 'प्रोक्योन' | ०·४८ | $F_5$ | ·२९४ | ११·१ | +२·९ |
| α वैतरणी | 'आचेरनार' | ०·६० | $B_5$ | ·०४५ | ७० | −१·१ |
| β किन्नर | | ०·८६ | $B_1$ | ·०१७ | १९० | −२·१ |
| α गरुड | श्रवण | ०·८९ | $A_5$ | ·२०८ | १५·७ | +२·५ |
| α मृग | आर्द्रा | ०·९२ | $M_2$ | ·०११ | ३०० | −३·१ |
| α स्वस्तिक | | १·०५ | $B_1$ | ·०१५ | २२० | −२·७ |
| α वृष | रोहिणी | १·०६ | $K_5$ | ·०६२ | ५३ | +०·१ |
| β मिथुन | पुनर्वसु | १·२१ | $K_0$ | ·११४ | २९ | +१·५ |
| α कन्या | चित्रा | १·२१ | $B_2$ | ·०२७ | १२० | −१·६ |
| α वृश्चिक | ज्येष्ठा | १·२२ | $M_1$ | ·०१३ | २५० | −१·२ |
| α दक्षिणमीन | 'फोमाल्हाट' | १·२६ | $A_3$ | ·१३९ | २३ | +२·० |
| α हंस | 'देनेब' | १·३३ | $A_2$ | ·००८ | ४०० | −४·२ |
| α सिंह | मघा | १·३४ | $B_8$ | ·०४९ | ६७ | −०·१ |

### ११·३ नक्षत्राणां दूरत्वम्

नक्षत्राणि प्रायः सूर्यसमानि ( कानिचन च सूर्यात् परिमाणविषये महान्ति ), परन्तु सर्वैरेतानि दूरवीक्षणयन्त्रेणापि बिन्दव इव। किमत्र कारणम्? अत्र नैषां सुदूरवर्तित्व मेव हेतुः। सूर्यो लौकिकव्यवहारे सुदूरं प्रकाशते, तस्यातिदूरत्वं सहस्रधा नैकदृष्टान्तैः प्रदर्शितम्। परन्तु समीपतमनक्षत्रापेक्षया सूर्यस्य भुवो दूरत्वमल्पतरम्। सूर्यस्य किरणाः ८⅓ मिनटकालेन स्पृशन्ति पृथिवीम्, परन्तु समीपतमस्यापि नक्षत्रस्य (मित्रनामकस्य) रश्मयः ४⅓ वर्षकालेन प्राप्नुवन्ति भूतलमस्माकम्, अर्थात् तस्य दूरत्वम् २,५५,००,००,००,००,००० क्रोशपरिमितम्।

### ११·३१ दूरत्वनिर्धारणविधिः

सूर्यचन्द्रयोर्ग्रहाणां च दूरत्वं लम्बनेन निर्धारितं इति पूर्वाध्यायेषु प्रदर्शितम्, परन्तु न । लम्बनपद्धतिर्नात्र सम्यक्। सूर्यचन्द्रमसौ नक्षत्रेभ्यः समीपवर्तिनौ, नक्षत्रस्य 'दूरत्वम्...

नक्षत्राणि समीपतराणि तानि दूरवर्तिनक्षत्रापेक्षया किञ्चित् स्थानभ्रंश लभन्ते । क इ स-कोणः स्थानभ्रंशमानम्[1] ।

कोणोऽयमत्यल्पपरिमाणकः, अत एव भूमध्यगणितीयदूरत्वे सूर्यमध्यगणितीयदूरत्वे न कोऽपि विशेषो भेदः । अत एव गणना सदैव सूर्यमध्यगम्नतया क्रियते, अर्थाद् लम्बन सूर्यमध्याद् गण्यते । सूर्यमध्याद् लम्बन चित्रे क इ सू-कोणेन प्रदर्शितम् । लम्बनकोणमान वेधेन निश्चीयते । लम्बन ज्ञात्वा दूरत्वं ज्ञायते । अत्र निम्नसूत्रम्[2]—

---

१. कोणोऽयमत्यल्पत्वात् समीपस्थनक्षत्रस्यैव मापनीयः । दूरवर्तिनक्षत्रेभ्य ईदृशी १८,२८,००,००० क्रोशार्धविस्तृता आधाररेखापि दूरत्वापेक्षयाऽत्यल्पा ।

२. कोणानां तृतीयमाने प्रमापकं रेडियनमस्ति । रेडियनं केन्द्रवर्ती स कोणो यः त्रिज्यातुल्यचापेन रच्यते । रेडियने २०६२६५ विकलाः सन्ति । चित्रमवार्यं
.



दूरत्वम् । अनेन चित्रेण लम्बनदूरत्वसम्बन्धः प्रदर्श्यते ।

$$\frac{\text{लम्बनकोणः}}{\text{सम्पूर्णवृत्तपरिधिः}} = \frac{\text{रेडियनम्}}{\text{सम्पूर्णवृत्तपरिधिः}}$$

$$\text{अर्थात्}\ \frac{\text{लम्बनकोणः}}{\text{भूकेन्द्रव्यासार्धः}} = \frac{२०६२६५}{\text{दूरत्वम्}}\ \text{अत एव दूरत्वं} = \frac{\text{भूकेन्द्रव्यासार्धः} \times २०६२६५''}{\text{लम्बनकोणः}}$$

$$\text{दूरत्वम्} = \frac{\text{भूकक्षाव्यासार्धं} \times \text{'रेडियने' सेकिण्डाना सख्या}}{\text{लम्बनकोणमान सेकिण्डेषु}}$$

$$\text{अर्थात्} = \frac{९,२९,००,००० \times २०६२६५}{\text{लम्बनं ( सेकिण्डमाने )}} \text{ क्रोशार्धानि}$$

उदाहरणम्—α किन्नरस्य ( मित्रस्य ) लम्बन ७५६" मितम्, दूरत्व गणय—

$$\text{मित्रस्य दूरत्वम्} = \frac{९,२९,००,००० \times २०६२६५}{७५६}$$

$$= २,५३,४६,००,००,००,०००$$

क्रोशार्धानि ।

## ११ ३२ नक्षत्रलम्बननिर्धारणरीतय

नक्षत्राण्यतिदूरस्थानीति निश्चिता मति पुराणाना ज्योतिर्विदाम्, परन्तु तेषा यथार्थदूरत्व निश्चयो न सम्भव आसीत् । दूरदर्शकयन्त्राविष्कारानन्तरमपि बहुकालपर्यन्त नाक्षत्रदूरत्वनिर्धारण दुष्करमेवासीत् । ख्रिस्तीयोनविंशतितमशतकस्य प्रथमचरणे ज्योतिर्विद्भि कतिपया दूरत्वनिर्धारणे सिद्धान्ता निर्धारिता । भास्वरत्वस्य चाक्षुषकोटेरधीन दूरत्वमिति प्रथम सिद्धान्त ( यथा यथा नाक्षत्रदूरत्वमधिक तथा तथा भास्वरत्व धूमिल्यम्, अर्थात् धूमिलनक्षत्र भासुरनक्षत्रापेक्षया दूरवर्ति ) । समीपवर्तिनक्षत्राणा प्रकृता गतिर्महती, दूरवर्तिना चाल्पेति द्वितीय सिद्धान्त । यदि नक्षत्र द्विकनक्षत्रमस्ति, तर्हि सहचारिनक्षत्रस्यान्योन्यदूरत्वाधिक्य तस्य परिक्रमणकालस्याल्पता चापेक्षते द्विकनक्षत्रस्य दूरत्वम् ।

उपर्युक्तसिद्धान्ताना प्रतिपादनार्थं बृहती नक्षत्राणा सूची निर्मिता । प्रथमत प्रथमकोटिक नक्षत्राणा द्वितीयकोटिकनक्षत्राणाञ्च सूची परिष्कृता । द्वितीयतो द्रुतपक-प्रस्थाभिनिर्मितनाणा सूची रचिता । एषा नक्षत्राणा प्रकृता गति पर्याप्ता महती । तृतीयतो मित्र ६१ इत्यादिद्विकनक्षत्राणा मध्ययन कृतम् ।

सर्वप्रथम लम्बननिर्धारणार्थं त्रिभिर्ज्योतिर्विद्भि समकाल एव प्रयत्न कृता । तेषा प्रयुक्तानि दूरदर्शकयन्त्राणि विभिन्नानि, तेषाम्पुरस्कृतनक्षत्राणि विभिन्नानि, तथापि तेषा निष्कर्षा पर्याप्त यथार्था आसन् । 'बेसेल'महोदयेन ६१ हसनामकस्य द्विकस्य महाप्रकृतिगतिकस्य सूक्ष्मापक यन्त्रेण नाक्षत्रलम्बन ख्रिस्तीये १८३८-तमे अब्दे ०",३१-मित निश्चितम् । 'स्ट्रूव' महोदयेन महाप्रकृतिगतिरस्याभिजितो नाक्षत्रलम्बनमेकेनातिधूमिलनक्षत्रेण तोलयित्वा सूक्ष्ममापकयुत विपुल दूरदर्शकयन्त्रेण ख्रिस्तीये १८४०-तमाब्दे ०" २५ मित निर्धारितम् । 'हेण्डरसन'महोदयेन ख्रिस्तीये १८३९-तमाब्दे मित्रस्योन्नतांशान् वर्षस्य विभिन्नर्तुषु विद्ध्वा नाक्षत्रलम्बनस्य मान १."०० मित लब्धम् ।

अद्यत्वे तु नाक्षत्रलम्बन फोटोचित्रैर्निर्धार्यते । फोटोचित्रपद्धत्या क्षिप्रं निर्णयो लभ्यते, यथार्थत्व च सूक्ष्मतयायाति । धूमिलनक्षत्राणा भूमिकयाभिक्षनक्षत्रस्य फोटोचित्राणि गृह्यन्ते । पुनस्तस्यैव नक्षत्रस्य षण्मासानन्तर (द्रष्टव्यमग्रे फोटोचित्रम्) यथान्तरज्ञ चित्राणि गृह्यन्ते । एवं

यतो नाक्षत्रदूरत्ववृद्धौ लम्बनमानहानिः, अतो दूरत्वं लम्बनव्युत्क्रमानुपाति । अर्थात्
यदि लम्बनम् १″.०० तर्हि दूरत्वम् एकं पारसेकम्,
" " ०″.१ " " दशपारसेकानि,
" " ०″.०१ " " पारसेकशतम् ।
पारसेकश्च २०६२६५+९,२९,००,००० क्रोशार्धमितम् ।

## प्रकाशवर्षः

पारसेकप्रमापकं ज्योतिर्गणकेष्वेव प्रसिद्धम्, जनसाधारणे तु प्रकाशवर्षोऽधिकं प्रचलितः । प्रकाशकिरणाना ( विद्युत्किरणाना वा ) वेगेषु भौतिकवस्तुषु सर्वाधिको जवः । ते सेकिण्डैककाले १८६३२४ क्रोशार्धानि चलन्ति । अत एव ते बृहत्प्रमापकार्थं पर्याप्तमुपयुक्ताः । प्रकाशकिरणा एकस्मिन् वर्षे १८६३२४×६०×६०×२४×३६५ क्रोशार्धानि ( आसन्नमाने ५८,८०,००,००,००,००० क्रोशार्धानि ) गच्छन्ति । सूर्यकिरणाः प्रायः ८½ मिनटकालेन भूतलं स्पृशन्ति ।

## ज्योतिःप्रमापकम्

ज्योतिर्गणकेष्वेतमन्यत्प्रमापकमपि प्रचलितम् । नक्षत्राणां लम्बनविधौ दृष्टं यत् सूर्यभुवो रन्तरं ( भूकक्षाव्यासार्धः ) पर्याप्ताधाररेखा । आधाररेखेयं प्रायेण सर्वदा प्रयुज्यते नाक्षत्रलम्बनानयनप्रक्रियायाम्, अत एवाधाररेखाया दीर्घत्वमप्युचितं प्रमापकं भवितुं योग्यम् । सूर्यभुवोरन्तरं ९,२९,००,००० क्रोशार्धमितम् ।

## प्रमापकानां परस्परसम्बन्धः

एकं पारसेकम् = ३·२६ प्रकाशवर्षाणि
= २०६२६५ ज्योतिःप्रमापकाणि
= १,९२,००,००,००,००,००,००० क्रोशार्धानि

एकः प्रकाशवर्षः = ·३०७ पारसेकभागः
= ६३२७१ ज्योतिःप्रमापकभागः
= ५,८८,८०,००,००,००,००० क्रोशार्धानि ।

एकं ज्योतिःप्रमापकम् = ·००००४८५ पारसेकम्
= ·००००१५८ प्रकाशवर्षभागः
= ९,२९,००,००० क्रोशार्धानि ।

$$\text{दूरत्वम्} = \frac{१}{\text{लम्बनम्}} \text{ पारसेकानि}$$

$$= \frac{३·२६}{\text{लम्बनम्}} \text{ प्रकाशवर्षाणि}$$

$$= \frac{२०६२६५}{\text{लम्बनम्}} \text{ ज्योतिःप्रमापकाणि}$$

## ११.४ नक्षत्राणां गतिः

नक्षत्राणि प्रत्यहं रात्रौ पूर्वतः पश्चिमदिशं गच्छन्ति दृश्यन्ते। सायंकाले यानि पूर्वक्षितिजे भान्ति तान्येव प्रभाते पश्चिमक्षितिजेऽस्तं यान्ति। इयं तेषां प्रथमा गतिः, परन्तु गतिरियं केवलं प्रतीयमाना, भुवोऽक्षभ्रमणमेवात्र हेतुः। पुनश्च नक्षत्राणि सर्वाणि वर्षपर्यन्तं नावलोक्यन्ते, क्वचित्तेषां दर्शनं क्वचित्तेषामदर्शनम्। यद्यद्य रात्रौ दशमहोरायां याम्योत्तरवृत्तलग्नं किमपि



'प्रौक्सिमा'-किन्नरनक्षत्रस्य प्रकृता गतिः [ हार्वर्ड वेधशाला ]

नक्षत्रम्, एकेन मासेन तद् अष्टमहोरायां याम्योत्तरोल्लङ्घनं करिष्यति, यद्यपि सर्वदा तेषां नक्षत्राणामन्योन्यदूरत्वसम्बन्धः सम एव। अर्थात् सर्वाणि नक्षत्राणि युगपत् पश्चिमदिशं गच्छन्ति। गतिरियमपि प्रतीयमानैव, अत्र भुवः सूर्यमभितः परिक्रमणमेव हेतुः। परन्त्विमे विहायास्त्येका तृतीया गतिर्या वास्तविकी। इयं तेषां प्रकृता गतिरुच्यते। नक्षत्राणां परस्परदूरत्वं शनैः शनैर्भिन्नतां याति, इयं भिन्नता त्वेतावत्यल्पा यद् वेधेन तस्या मानलाभोऽतिदुष्करः, परन्तु बहुकालव्यवहितान्तरेषु वेधेन प्रत्यक्षं स्थानच्युतिः स्फुटतया दृश्यते (अवलोकनीयमत्रोपरि दत्तं फोटोचित्रम्)। वस्तुतो नक्षत्राणि प्रायेण तीव्रगतिमन्ति, परन्तु सुदूरवर्तित्वात् तीव्रगतिजनितस्थानभ्रंशोऽप्यल्पः प्रतीयते। अनेनैव कारणेन नक्षत्राण्यचलानि मन्यन्ते।

### ११.४१ प्रकृता गतिः, केन्द्रीया गतिश्च

चित्रे किमपि नक्षत्रं क स्थाने स्थितम्, वर्षान्ते तदेव निजगत्या ख स्थाने भविष्यति। तस्य वार्षिकस्वगतिः कख मिता। अत्र गतिर्द्विरूपेण विश्लेषणमर्हति, प्रथमं दृक्सूत्रलम्बदिशायां नक्षत्रं किमपि चलति, द्वितीयं दृक्सूत्रदिशायाम्। दृक्सूत्रदिशायां गतिर्वेधेन दुर्लभा, यतो यद् वस्तु दृक्सूत्र एव दूरमपसरति, उपसरति वा, तद् एकस्थाने स्थिरमिव प्रतीयते। यदि नक्षत्रं दृक्सूत्रलम्बदिशायां चलति तर्हि तस्य स्थानभ्रंशप्रतीतिर्भवति। स्थान-

भ्रंशात् कल्पितः कोणो वेधेन लभ्यः। अत्र प्रथमविश्लेषणे दृक्सूत्रलम्बदिशायां गतित्वात् कोणीयगतिर्लभ्यते, द्वितीयविश्लेषणे दृक्सूत्रदिशागमने केन्द्रापसारित्वात् केन्द्रोपसारित्वाद् वा केन्द्रीया गतिः लभ्यते। कोणीयगतिः प्रकृता गतिरपि प्रोच्यते।




### ११·४११ प्रकृता गतिः

अद्यत्वे तु प्रायेण सर्वेषां चाक्षुषनक्षत्राणां कतिपयानां दूरदर्शकीयनक्षत्राणामपि प्रकृता गतिः सूक्ष्मतया गणिता विद्यते। काले काले नक्षत्राणां स्थितिनिर्देशकानि मानचित्राणि वेधशालासु रच्यन्ते, तेषां तुलनात्मकाध्ययनाच्च प्रकृता गतिर्निश्चीयते।

### निर्धारणपद्धतिः

एकनक्षत्रस्य विषुवांशाः क्रान्त्यंशाश्च सुदीर्घकालव्यवधाने वेधद्वये सूक्ष्मतया विध्यन्ते। अयनजनितान्तरादीन् विचार्य लब्धान्तरेण नक्षत्रस्य प्रकृता गतिर्लभ्यते। तुलनेयं सरला यद् एकस्मिन्नेव काले विषुवदयनादिजनितान्तराणि सर्वेषां नक्षत्राणां समानितान्येव।

अचिरात्पूर्वमीदृशी फोटोचित्रद्वयतुलना सूक्ष्मतया नेत्राभ्यां निरीक्षणेन सूक्ष्मदर्शकयन्त्रेण च सम्पन्नासीत्, परन्तु तत्रकल्पमाने नासीत् सूक्ष्मयथार्थत्वम्। अधुना निमेष-( 'ब्लिंक' ) सूक्ष्मदर्शकयन्त्रेण तुलना सुसरला। निमेषसूक्ष्मदर्शकयन्त्रस्याधः फोटोद्वयं स्थाप्यते, यन्त्रविशेषसाहाय्येन क्षणं नेत्रयोरधः प्रथमचित्रं पतति, क्षणं द्वितीयचित्रम्, पुनः प्रथमं चित्रम्, ततो द्वितीयं चित्रम्। एवं पौनःपुन्यदृष्टिपातपरिवर्तनेन किञ्चिन्मात्रमपि परिवर्तनं चित्रद्वये निमिषदिव दृश्यते, स्फुटतया दृष्टिगोचरतां याति।

### शीघ्रप्रकृतगतिकानि नक्षत्राणि

शीघ्रप्रकृतगतिकानां नक्षत्राणामग्रणि वर्तते एकं दूरदर्शकीयं 'बार्नार्ड'नक्षत्रनाम्ना प्रसिद्धं नक्षत्रम्। नक्षत्रमिदं समीपवर्तिनक्षत्रापेक्षया प्रतिवर्षं १०.२५ विकलापरिमितं स्थानभ्रंशं लभते, अस्य १८०-वर्षैरन्द्रव्यासमितं परिवर्तनं दृश्यते।

लोहितोत्तरं प्रति विचलन्ति; यथा यथा च नक्षत्रं दृक्सूत्रेऽस्मद्दूरीभवति ( अर्थाद् अपसरति ) तथा तथा रेखा उपरक्तं प्रति विचलन्ति। सिद्धान्तोऽयं 'डाप्लर'सिद्धान्तनाम्ना प्रसिद्धः।

एकस्मिन्नेव फोटोफलके इष्टनक्षत्रस्य वर्णच्छत्रं प्रयोगशालीयधातुविशेषस्य वर्णच्छत्रञ्च



गृह्येते ( प्रयोगशालीयधातुः प्रायेण 'सोडियम'धातुर्भवति )। पुनः कतिपयमासानन्तरं तस्यैव नक्षत्रस्य वर्णच्छत्रं तेनैव प्रयोगशालीयधातुविशेषवर्णच्छत्रेण सह गृह्यते। सूक्ष्ममापकयन्त्रेण



K, वर्गीयनक्षत्रस्य वर्णच्छत्रम्

तुलना विधाय रेखाणां विचलनं गण्यते। अस्मिन् फोटोचित्रे रेखा नीललोहितोत्तरं प्रति विचलन्त्यो दृश्यन्ते, अर्थान्नक्षत्रं ध्रुवं प्रत्यागच्छदस्ति।

### केन्द्रीयगतिमानम्

केन्द्रीयगतिमानं निम्नलिखितेन सूत्रेण ज्ञायते—

$$\text{केन्द्रीया गतिः} = \frac{\text{तरङ्गदैर्ध्यविचलनम्}}{\text{तरङ्गदैर्घ्यम्}} + \text{प्रकाशवेगः}$$

अर्थात् यदि कस्या अपि रेखायाः ४००० 'ऐंग्स्ट्राम'मिततरङ्गदैर्घ्यम्, रेखा च नीललोहितोत्तरं प्रति ऐंग्स्ट्रामैकमितं विचलति, तर्हि केन्द्रीया गतिः

$$= \frac{१}{४०००} \times १८६३०० = ४६.६$$ क्रोशार्धानि प्रतिसेकिण्डम् ।

साधारणतया प्रतिसेकिण्डं केन्द्रीया गतिः २० क्रोशार्धाल्पा, ६० क्रोशार्धाधिका गतिस्तु विरलानां नक्षत्राणाम् ।

### वार्षिकपरिवर्तनम्

भूः सूर्यं परितः परिभ्रमति, अत एव षण्मासपर्यन्तं सा नक्षत्रस्य समीपं गच्छति, पुनः षण्मासपर्यन्तं नक्षत्राद् दूरीभवति । अत एव नक्षत्रस्य वर्णच्छत्रे रेखा दोलायन्ते । इदं दोलनं क्रान्तिवृत्तीयनक्षत्राणां वर्णच्छत्रे सर्वाधिकम्, कदम्बश्रेणीयनक्षत्राणां स्वल्पमितम्, अन्यत्र स्थानानुसारं न्यूनाधिकम् ।




वार्षिकपरिवर्तनम्

वर्णच्छत्रे वार्षिकदोलनं पुनः सूर्यप्रदक्षिणाया महत्त्वपूर्णं प्रमाणम् । 'ब्रेडले'महोदयेन वर्णच्छत्रेषु 'डाप्लर'सिद्धान्तप्रयोगेन भुवः प्रदक्षिणा गतिः १८½ क्रोशार्धमिता निर्णीता । अनेन मानेन च भूसूर्यान्तरं ९,२८,७०,००० क्रोशार्धमितं निर्णीतम् ।

### ११.४२ समगतिः

नक्षत्राणां सापेक्षिका गतिः । तस्या एव विश्लेषणेनोभयं प्रकृता गतिः, केन्द्रीया गतिः, इति भेदौ द्वौ कृतौ । अत्र प्रकृतगतेः द्वितीयं रूपं समगतिः । प्रकृता गतिः स्थानभ्रंशमितकोणेन मापिता अस्ति, समगतिश्च वेगतः स्थानभ्रंशमानेन मापन्ते ।

---

1. समगतिः = $\frac{१ \times प्रकृता\ गतिः}{पारलम्बनम्}$

एवं

$$\text{स्वगतिः} = \sqrt{(\text{केन्द्रीयगतिः})^2 + (\text{लम्बगतिः})^2}$$

प्रायेण प्रतिसेकिण्ड स्वगतिः पञ्चक्रोशार्धेभ्योऽधिका, विंशतिक्रोशार्धेभ्यश्चाल्पा। उपलभ्यमाना नक्षत्राणां मध्ये सर्वाधिका स्वगतिः ह्रातीनन्नस्य ८४ क्रोशार्धानि प्रतिसेकिण्डमस्ति।

## १२.४३ सूर्यस्य स्वगतिः

सूर्योऽप्येकं नक्षत्रम्, अत एव तस्यापि स्वगतिर्विद्यते, यद्यपि महता दृष्टिकोणेन सोऽचल एव दृश्यते। सूर्यस्य स्वगतेर्गणना परममहत्त्वपूर्णा ज्योतिर्विद्यायाम्, यतोऽन्येषां नक्षत्राणां स्वगतिः सूर्यापेक्षयैव गण्यते, सूर्यस्वगतिगणनाऽभावे तेषां वास्तविकगतिगणनाऽशक्या।

### सौरगत्युद्भवा नक्षत्राणां प्रतीयमाना गतिः

रेल्यानारूढजनेन प्रायोऽनुभूयते यत् सम्मुखदिशायामुभयपार्श्वस्था वृक्षा यथा यथा रेल्यानं तत्समीपतरं भवति तथा तथा बृहत्कोणं रचयन्ति, पृष्ठपार्श्वस्थवृक्षा यथा यथा रेल्यानं तेभ्यो दूरं याति तथा तथा न्यूनकोणं रचयन्ति ( द्रष्टव्यमनन्तरं चित्रम् )। चित्रे पू-स्थानं पूर्वावस्थां प च परस्थानं द्योतयतः। उपसरता रेल्यानेन ∠ वृ$_1$ पू वृ$_2$, ∠ वृ$_1$ प वृ$_2$ कोणौ रचितौ, ∠ वृ$_1$ प वृ$_2$ कोणः ∠ वृ$_1$ पू वृ$_2$-कोणापेक्षया महीयान्। अपसरता रेल्यानेन रचितयोः कोणयोः ∠ वृ$_3$ प वृ$_4$ कोणः ∠ वृ$_3$ पू वृ$_4$-कोणापेक्षया लघीयान्। अत एव पार्श्वस्थवृक्षा विभिन्नकोणान् जनयन्तो रेल्यानगतिं प्रमाणीकुर्वन्ति।



सूर्यस्य गतेरप्येवं फलम्। यथा यथा सूर्यस्तेषां भानां समीपं गच्छति तथा तथा सम्मुखस्थानि नक्षत्राण्युन्मीलन्ति, यथा यथा सूर्यस्तेभ्यो दूरं गच्छति तथा तथा पृष्ठस्थानि नक्षत्राणि निमीलन्ति।

अनेन विधिना त्विदं ज्ञायते यत् सूर्यो वृहदाकाश एकं बिन्दुविशेषं प्रति गच्छन्नस्ति, तं बिन्दुं प्रति सर्वेषां नक्षत्राणामुपसर्पणस्य परमवेगः। तद्बिन्दुविपरीतदिशायामेको द्वितीयः काल्पनिको




सूर्यगतेः नक्षत्राणामुन्मीलनं निमीलनम् च

बिन्दुः, यतः सर्वेषां नक्षत्राणामपसर्पणस्य परमवेगः। प्रथमो बिन्दुरुपसर्पबिन्दुरुच्यते, द्वितीयोऽ-




भुवः अनन्ताकाशे गतिः

पसर्पबिन्दुः कथ्यते। उपसर्पबिन्दोर्विषुवांशः १८ ००' मिनट, ३०° मिनट क्रान्त्यंशाः। प

२०

सौरीनक्षत्रपुञ्जेऽभिजितो दक्षिणपश्चिमदिशायां दशांशमितकोणीयान्तरे स्थितः। सूर्यस्य गतिश्च १२·२ क्रोशार्धानि[1] प्रतिसेकिण्डम्।

सूर्यगतेर्निर्धारणम्, उपसर्प्यबिन्दोरपसर्प्यबिन्दोश्च निर्णयो 'डाप्लर'सिद्धान्तसाहाय्येन भवति। अभिजित्समीपवर्तिनक्षत्राणि प्रायेण १२ क्रोशार्धानि प्रतिसेकिण्ड भूपृष्ठदर्शकं प्रत्युप गच्छन्तीव दृश्यन्ते, अपसर्प्यबिन्दुसमीपवर्तिनक्षत्राणि प्राय १२ क्रोशार्धगत्या प्रतिसेकिण्डमपसरन्तीव दृश्यन्ते, बिन्दुद्वयलम्बवर्तिनक्षत्राणि च स्थिराणीव दृश्यन्ते। अत एव स्वाभाविकी विज्ञानसम्मता चेयं कल्पना यत् सूर्य एव स्वपरिवारेण सहोपसर्प्यबिन्दुं प्रति गच्छन्नस्ति।

भूः सूर्यं परितो भ्रमति, सूर्यश्चोपसर्प्यबिन्दुं प्रति गच्छन्नस्ति, अत एव महाकाशे भुवो वास्तविकगतिः १३३ पृष्ठस्थद्वितीयचित्रानुसारिणी भवति।

## ११·५ परिमाणम्

ग्रहाणां परिमाणगणना नातिदुष्करी, यतस्तेषां बिम्बं वेधेन सुविधं ज्ञायते, दूरत्वञ्च गणनया लभ्यते। बिम्बदूरत्वमानाभ्यां परिमाणगणना (वास्तविकव्यासार्धमानं = दूरत्व × बिम्बमानज्या) सरला। परं नक्षत्रपरिमाणनिर्धारणमतिदुष्करम्, नक्षत्रबिम्बमानस्याल्पत्वात्। दीर्घतमं समीपतममपि नक्षत्रं दूरदूरदर्शकयन्त्रेणापि न दर्शयति स्वबिम्बम्, केवलं बिन्दुं प्रदर्शयति। तथापि ज्योतिर्गणनैरुपायान्तराण्यन्विष्टानि, यैः कतिपयानां नक्षत्राणां परिमाणानि लभ्यन्ते।

(१) ग्रहणशीलद्विकनक्षत्रस्य प्रधाननक्षत्र सहचारिनक्षत्रयोः परिमाणगणना सम्भवा। फोटोमीटरयन्त्रेण प्रकाशहानिं प्रमाप्य परिमाणं गण्यते।

(२) यत्र यथार्थचाक्षुषज्योतिर्वर्णच्छत्रीयवर्गश्च ज्ञातपूर्वौ, तत्रापि परिमाणगणना सरला। यथार्थचाक्षुषज्योतिर्मानेन पूर्णौज्ज्वल्यं माप्यते। वर्णच्छत्रीयवर्गेण तत्पृष्ठस्य तापक्रमश्च ज्ञायते। पूर्णौज्ज्वल्यञ्च प्रतिवर्गक्रोशार्धपृष्ठस्य तापक्रमानुपाति, अत एव सम्पूर्णं पृष्ठं ज्ञायते। पृष्ठमानज्ञानेन व्यासो निर्धार्यते। एवं निश्चितानां नक्षत्राणां व्यासा निम्नलिखितसारिण्यां दत्ताः —

(सारिणी अध्यायान्ते संलग्ना)

(३) 'इन्टरफेरोमीटर'नामयन्त्रेणापि परिमाणगणना शक्या। माउण्टविल्सन वेधशालायां शत इञ्चीयदूरदर्शनयन्त्रे संलग्नेन २० फुटमितदैर्घ्यवता इन्टरफेरोमीटरयन्त्रेण कतिपयानां नक्षत्राणां परिमाणानि परिमापितानि सन्ति। (अस्य यन्त्रस्य विवरणं दुर्बोधत्वादत्र न दीयते)

### ११·५·१ परिमाणविषयकः श्रेणीक्रमः

परिमाणगणनाया नक्षत्राणां निम्ना विभागाः क्रियन्ते—

(१) रक्तदैत्याकाराणि, दैत्याकाराणि च

(२) मुख्यश्रेण्या नक्षत्राणि—सूर्यात् किञ्चिद्दीर्घाणि

—सूर्यसमानि

—सूर्यात् किञ्चिल्लघूनि

(३) श्वेतवामनाकाराणि

---

१. १०,२४,०८० क्रोशार्धानि प्रतिदिनम्।

दैत्याकाराणां नक्षत्राणां व्यासोऽतिदीर्घः । सर्वप्रथममेतेषां सर्वाधिकौज्ज्वल्यमवलोक्य 'दैत्याकाराण्येतानि' इति निश्चितं ज्योतिर्विद्भिः, अधुना परीक्षणैस्तेषां यथार्थतो दैत्याकारत्वं निश्चितमस्ति । ज्येष्ठानक्षत्रं[1] रक्तवर्णकं विशालतममस्ति । यदि सूर्यो ज्येष्ठानक्षत्रमिव विशालो भवेत्तर्हि भौमभूशुक्रबुधा ग्रहाः सूर्यस्योदर एव भवेयुः । रक्तवर्णमार्द्रानक्षत्रमपि पर्याप्तं विशालम् । सूर्यो यदि तद्वद् भवेत्तर्हि वयं सर्वे पृथिवीवासिनस्तस्योदर एव भवेम ।

मुख्यश्रेणीकनक्षत्राणि प्रायः सूर्यसमानि परिमाणविषये । नीलवर्णकानि किञ्चित् सूर्याद् दीर्घतराणि, रक्तवर्णकानि च सूर्याल्लघुतराणि ।

लघुतमानि नक्षत्राणि 'वामनाकाराणि' इति नाम्ना प्रसिद्धानि । एतानि परिमाणे भूसमानि भौमसमानि वा ।

## ११.६ पिण्डमात्रा

कस्यचिदपि नक्षत्रस्य समीपतमवर्तिनक्षत्रस्योपरि गुरुत्वाकर्षणप्रभावदर्शनं यद् नक्षत्रपिण्डमानानयनं प्रायेण दुर्लभमेव । तथाप्याधुनिकतमसिद्धान्तैर्ज्योतिर्विदः कतिपयानां नक्षत्राणां पिण्डमात्रां गणयन्ति ।

( १ ) द्विकनक्षत्रेषु प्रधाननक्षत्रस्य सहचारिनक्षत्रस्य पिण्डमात्रागणना सरला, यतः पिण्डद्वयस्य गतिनियमजनितविश्लेषणेन पिण्डमात्रा ज्ञातव्या भवति । ( द्रष्टव्य § १२·१८ )

( २ ) यथार्थचाक्षुषकोटि पिण्डमात्रा सम्बन्धो निश्चितोऽस्ति । अतो यदि चाक्षुषकोटि-रपाप्तरेण निर्णीतास्ति तर्हि पिण्डमात्रा ज्ञातव्या भवति । गणितज्ञैर्नक्षत्राणां चाक्षुषकोटीः



1. अस्य नक्षत्रस्य भारतीयज्योतिर्विद्यायां नाम 'ज्येष्ठा' अस्ति । इदं वस्तुतः परिमाणे ज्येष्ठम् । किमिदं केवलं संवादित्वम् ।

पिण्डमानाश्च सुष्ठु विश्लेष्य नियम उपलब्ध एकः। पिण्डमात्रा औज्ज्वल्य रेखाचित्रे यथार्थं चाक्षुषकोटेः पिण्डमानाया लघुगणकाङ्कः प्राप्यते।

## ११.६१ घनत्वम्

पिण्डमात्रा परिमाणञ्च ज्ञात्वा मध्यमघनत्वमानस्यानयनमतिसरलम्, यतो मध्यमघनत्व $= \frac{\text{पिण्डमात्रा}}{\text{पिण्डघनक्षेत्रम्}}$। अनेदमवधारणीयं यन्नक्षत्रे घनत्वं सर्वत्र न समम्, केन्द्रसमीपवर्तिभागस्य घनत्वमधिकं केन्द्रदूरवर्तिभागस्य च घनत्वं विरलम्।

नक्षत्राणि घनत्वविषयेऽत्यधिकं विषमाणि। ज्येष्ठानक्षत्रस्य घनत्वं न्यूनतममस्ति, तद् वायुघनत्वस्य '०००५ भागमितम्। श्वेतवामनाकाराणाञ्च घनत्वं सर्वाधिकमस्ति। (द्रष्टव्या सारिणीसंख्या ११·८)।

## ११.६२ तापक्रमः

सुदूरवर्तिनां नक्षत्राणामपि तापक्रमनिर्धारणमाधुनिकविज्ञानस्याद्भुतं कर्म। सूक्ष्मपरीक्षणैरिदं ज्ञायते यन्नक्षत्राणां वर्णस्तापक्रमाधीनः, अत एव वर्णस्य ज्ञानेन तापक्रमनिर्धारणं सम्भवम्। वर्णस्य ज्ञानं वर्णसूचकेन (§ ११·२३१) भवति। अत एव ज्योतिर्गणकैर्वर्णसूचक तापक्रमसम्बन्धो निर्धारितः। स अधो दीयते—

$$\text{तापक्रमः} = \frac{७२००}{\text{वर्णसूचकम्} + ०·६४}$$

उदाहरणम्—दृश्यमानस्य वर्णसूचकं शून्यमितम्, अत एव तस्य तापक्रमः = $\frac{७२००}{·६४}$ = ११,२००°K

एवं शीतलतमानां नक्षत्राणां तापक्रमः १,८०० सेण्टीग्रेडमितः, उष्णतमानाञ्च ५०,००० सेण्टीग्रेडमितोऽस्ति।

वर्णच्छत्र-तापक्रम-सम्बन्धेनापि तापक्रमो प्राप्यते। सम्बन्धोऽयं सर्वप्रथमं भारतीयज्योतिर्भौतिकशास्त्रिणा दिवङ्गतेन मेघनादसाहमहोदयेन ख्रिस्ताब्दे १९२१–तमे उद्घोषितः।

## ११.७ वर्णच्छत्रीयवर्गाः

### ११·७१ नक्षत्राणां वर्णच्छत्रम्

नक्षत्राणां वर्णच्छत्रमुपायद्वयेन फोटोफलके गृह्यते।

(१) एकस्मिन्नेव फोटोफलके दूरदर्शकस्य वर्णच्छत्र प्रयोगशालीयधातुविशेषस्य च वर्णच्छत्रं गृह्येते (विवरणं § ११·४१२ तमे द्रष्टव्यम्)।

(२) यदि बहूनां नक्षत्राणां वर्णच्छत्राणि परीक्ष्याणि तर्हि एकं महत्त्रिपार्श्वं स्वीकृत्य नक्षत्राणां पिण्डा वर्णच्छत्राणि रचयन्ति।

'हेनरीड्रेपर'महोदयेन ख्रिस्ताब्दे १९२४ तमे एका वर्णच्छत्रसूची प्रकाशिता। अस्यां सूच्यां प्रायः २,२५,३००–नक्षत्राणां वर्णच्छत्रीयवर्गा दत्ताः सन्ति।

## ११.७२ वर्णच्छत्रीयवर्गाः

वर्णच्छत्राणां विशेषाध्ययनं कृत्वा ज्योतिर्भौतिकशास्त्रिभिः सप्त वर्गा निश्चिताः, तेषां वर्गाणां चिह्नानि O, B, A, F, G, K, M, सन्ति। सूक्ष्मभेदोपलब्धये प्रत्येकं वर्गस्य दशांशाः क्रियन्ते। एवं $g_0$ वर्णच्छत्रं $G_0$ वर्णच्छत्र $K_0$ वर्णच्छत्रमध्ये $K_0$ वर्णच्छत्रस्य समीपे वर्तते।

वर्णच्छत्रज्ञानमतिमहत्त्वपूर्णम्। नक्षत्रस्य रासायनिकसंरचना तापक्रमो भौतिकस्थितयो वर्गो विकासश्च वर्णच्छत्रीयविश्लेषणेनैव ज्ञायन्ते।

वर्णच्छत्रीयवर्गाणां विवरणानि निम्नसारिण्यां दीयन्ते—

| वर्णच्छत्रीयवर्गाः | प्रमुखनक्षत्राणि | वर्णः | विवरणानि |
|---|---|---|---|
| O | — | | अत्यधिकमुष्णानि। वर्णच्छत्रे आयनीकृतहेलियनम्, आक्सीजनं नाइट्रोजनं दृश्यन्ते |
| B | रीगेल चित्रा | | 'हेलीयमरेखाः सर्वाधिकाः $B_2$' वर्गीयेषु। |
| A | लुब्धकः, अभिजित् | नीलः | $A_0$ वर्गे हाइड्रोजनरेखाः सर्वाधिकाः। |
| F | अगस्त्य प्रोक्योनः | — | H, K-रेखाः कैल्शियम तत्त्वस्य वर्धन्ते। |
| G | सूर्यः ब्रह्महृदयः | पीतः | धातूनां रेखाः सर्वाधिकाः। |
| K | स्वाती रोहिणी | रक्तपीतः | |
| M.[1] | आर्द्रा, ज्येष्ठा | रक्तः | |

निम्नलिखितसारिण्यां वर्णच्छत्र-तापक्रमसम्बन्धाद्यो दीयन्ते—

| वर्णच्छत्रीयवर्गः | वर्णसूचकम् | तापक्रमः | वर्णच्छत्रीयवर्गः | मुख्यश्रेणीनक्षत्राणाम् | | दैत्यनक्षत्राणाम् | |
|---|---|---|---|---|---|---|---|
| | | | | वर्णसूचकः | तापक्रमः | वर्णसूचकः | तापक्रमः |
| $O_5$ | ...... | ५०,०००°K | $G_0$ | ०.५७ | ५,७६०°K | ०.६७ | ५,३००°K |
| $B_0$ | -०.३३ | २१.००० | $G_5$ | ०.६५ | ५,४०० | ०.९२ | ४,५०० |
| $B_5$ | -०.१८ | १४.००० | $K_0$ | ०.७८ | ४,९०० | २.१२ | ४,००० |
| $A_0$ | ०.०० | १०,६०० | $K_5$ | ०.९८ | ४,३०० | १.९७ | ३,२०० |
| $A_5$ | ०.२० | ८,२०० | $M_0$ | १.४५ | ३,४०० | १.७३ | ३,००० |
| $F_0$ | ०.३३ | ७,२०० | $M_5$ | ... | २,८६० | — | २,८०० |
| $F_5$ | ०.४७ | ६,३०० | $M_8$ | .... | .... | — | २,००० |

१. सम्प्रति N. R. N. S विहृदर्शिकासम्बन्धाः वर्णच्छत्रीयवर्गा अपि सम्मिलिताः सन्ति।

सारिणी संख्या ११.८

## मुख्यनक्षत्राणां तापक्रमव्यासादीनां सारिणी

| नक्षत्राणि | वर्णच्छत्रीय-वर्गः | तापक्रमः (K) | व्यासः (सूर्यस्य = १) | पिण्डमात्रा, (सूर्यस्य = १) | घनत्वम् (सूर्यस्य = १) |
|---|---|---|---|---|---|
| दैत्याकारणि | | | | | |
| ज्येष्ठा | $M_1$ | ३,००० K | ३९० | १० | ०.०००००००२ |
| रोहिणी | $K_5$ | ३,२०० | ७२ | ४ | ०.००००१ |
| स्वाती | $K_0$ | ४,००० | ३० | ४ | ०.०००१ |
| प्रसहृदय A | $G_0$ | ५,१०० | १६ | ४ | ०.००१ |
| मुख्यश्रेणीकानि | | | | | |
| B किन्नरः | $B_8$ | ११,००० | ६ | ४ | ०.०२ |
| अभिजित् | $A_0$ | १०,६०० | २.६ | ३ | ०.२ |
| लुब्धक A | $A_0$ | १०,६०० | १.९ | २.४ | ०.३ |
| श्रवण | $A_5$ | ८,२०० | १.६ | २ | ०.५ |
| प्रोक्योन | $F_5$ | ६,३०० | २.३ | १.१ | ०.१ |
| L-किन्नर A | $G_0$ | ५,७५० | १.३ | १.१ | ०.५ |
| सूर्यः | $G_0$ | ५,७५० | १.० | १.० | १.० |
| ७०-सर्पधरः A | $K_0$ | ४,९०० | १.० | ०.९ | ०.९ |
| ६१-हंस A | $K_5$ | ३,९०० | ०.७ | ०.५ | १.४ |
| क्रूगर-६० A | $M_3$ | ३,३०० | ०.३ | ०.३ | १ |
| श्वेतवामनानि | | | | | |
| लुब्धक-B | F | ७,५०० | ०.०१४ | ०.९६ | २५,००० |
| ०₂ वैतरणी B | $A_0$ | ११,००० | ०.०१९ | ०.४४ | ६४,००० |

Note: Betelgeuse row (दैत्याकारणि) shows spectral class $M_2$ in the second column.

स्थानिककोणः ध्रुवप्रधाननक्षत्रप्रोतरेखया प्रधाननक्षत्रसहचारिनक्षत्रप्रोतरेखायोगात्कल्पितः कोण उच्यते । प्रधाननक्षत्रस्य सहचारिनक्षत्राद् दूरत्वं कोणीयान्तरं ( अथवा दूरत्वम् ) उच्यते ।

**१२·१५ माइक्रोमीटरयन्त्रम्**

फिलरमाइक्रोमीटरयन्त्रमेकं वृत्ताकारपटलं यस्य परिधौ कोणांशा भचक्रमिता अङ्किताः ।



माइक्रोमीटरम्

तस्य मध्यकेन्द्रे प्रधाननक्षत्रस्य बिम्बं क्रियते । अ आ इ ई वे ध्रुवतन्तू समानान्तरे चले च । ते



माइक्रोमीटरस्य व्यासाकारपटलम्

साम्पितां नक्षत्रयोः समानान्तरे क्रियेते । अनेन स्थानिककोण ( अ आ-तन्तोः इ ई-तन्तोः कोणो वा ) निर्णीयते ।

### १२.१९ उदाहरणानि

मित्रम्—समीपतमं नक्षत्रमिदं सर्वप्रथमं द्विकमाव प्रादर्शयत्। सहचारिनक्षत्रस्य प्रधाननक्षत्रादल्पतमदूरत्वं सूर्यशनिदूरत्वसमम्। क्यास्टरनक्षत्रमेकं परिचितं द्विकनक्षत्रम्, अस्य परिक्रमणकालः ३८० वर्षाणि। लुब्धकस्यापि सहचारिनक्षत्रं वर्तत इति वेधात् पूर्वं गणितेनैव 'बेसेल'-महोदयेन १८३४-तमे खिस्ताब्दे विज्ञापितम्। प्रश्वानक्षत्रस्यापि सहचारिनक्षत्रं तेनैव महोदयेन सर्वप्रथमं गणितपद्धत्या ह्याविष्कृतम्। अधुना तु प्रधाननक्षत्रगतिविकारमुपलभ्य नैकसहचारिनक्षत्राणामुपस्थितिर्गणितेन सूचिता, यद्यपि तान्यदृश्यान्येव वर्तन्ते।

### १२.१९। कक्षातत्त्वानि प्रमुखद्विकानाम्

निम्नसारिण्या प्रमुखद्विकानां कक्षातत्त्वानि दीयन्ते—

| नाम | चाक्षुषकोटिः | | परिक्रमणकालः (वर्षाणि) | मध्यमकर्णः | उत्केन्द्रिता | लम्बनम् | सम्मिलित पिण्डमात्रा (सूर्य १) |
|---|---|---|---|---|---|---|---|
| BD−8° ४३५२ | ९.१ | १०.० | १.७ | ०″.१८ | — | ०″.१४८ | ०.७ |
| 8 अवलकः | ५.३ | ५.४ | ५.७ | ०.२७ | ०.३१ | ०″.०६६ | २.१ |
| ४२ केशाः | ५.२ | ५.२ | २५.९ | ०.६६ | ०.५२ | ०″.०५८ | २.२ |
| प्रश्वा | ०.५ | १३.५ | ४०.२ | ४.२६ | ०.३१ | ०″.२९४ | १.९ |
| 'क्रूर' ६० | ९.३ | १०.८ | ४४.५ | २.३६ | ०.४१ | ०″.२५७ | ०.४ |
| लुब्धकम् | −१.६ | ८.४ | ४९.९ | ७.६२ | ०.५९ | ०″.३७८ | ३.२ |
| मित्रम् | ०.३ | १.७ | ८०.१ | १७.६६ | ०.५२ | ०″.७४८ | २.१ |
| 'क्यास्टर' | २.० | २.८ | ३८०. | ५.८४ | ०.३७ | ०″.०७४ | ३.४ |

## १२.२ वर्णच्छत्रीयद्विकानि

२५००० चाक्षुषद्विकेभ्यो व्यतिरिक्तानि सन्ति बहूनि द्विकानि यानि दूरदर्शकयन्त्रेणापि गोचरत्वातीतानि। ईदृशानां द्विकानां द्विकभावस्तेषां वर्णच्छत्रेणावगम्यते, ग्रहणशीलद्विकानाञ्च ग्रहणशीलत्वेन सूच्यते। (ग्रहणशीलद्विकानि विकारिनक्षत्राणां मध्ये कीर्तितानि, द्रष्टव्यः § १२.५५)।

यदि द्वे नक्षत्रे चाक्षुषद्विकस्य तर्हि तयोर्वर्णच्छत्रं सममेव। प्रथमनक्षत्रस्य वर्णच्छत्रीयरेखा



वसिष्ठस्य वर्णच्छत्रम् [ यर्किज वेधशाला ]

द्वितीयनक्षत्रस्य वर्णच्छत्रीयरेखासु सन्निपत्यैकमेव (एकस्य नक्षत्रस्येव) वर्णच्छत्रं जनयन्ति। परन्तु यदि ते द्वे नक्षत्रे द्विक तर्हि तयोरेकं द्वितीयमभितो भ्रमति, भ्रमणगतित्वात्तयोर्वर्णच्छत्रीय-रेखा स्त्वीपद् विचलिता दृश्यन्ते। भुवं प्रत्यागच्छतो नक्षत्रस्य वर्णच्छत्रीयरेखा नीललोहितोत्तर प्रति विचलन्ति; भुवो दूरं गच्छतो रेखा उपरक्त प्रति विचलन्ति। एवं प्रत्यक्षरूपेणैवास्य नक्षत्रस्य वर्णच्छत्रे जनितानि रेखाविचलनानि द्विकभाव प्रकटयन्ति। अधो वशिष्ठनक्षत्रस्य वर्णच्छत्र दीयते। वशिष्ठस्य सहचारिनक्षत्रमरुन्धतीनाम्ना संस्कृतशास्त्रेषु प्रसिद्धम्। परन्तु वशिष्ठ द्विकनक्षत्रस्य प्रधाननक्षत्र स्वयमेकं वर्णच्छत्रीयद्विकम्। अत्र प्रधाननक्षत्रस्य वर्णच्छत्र दीयते। वर्णच्छत्रे रेखाणां विचलनेन वर्णच्छत्रीयद्विकत्वं सूच्यते।

## १२.२१ वेगरेखाचित्रम्

डाप्लर-सिद्धान्तेन नक्षत्रस्य केन्द्रीयगतिवेगो निर्धार्यते। केन्द्रीयवेगमानानि रेखाचित्रे



विभिन्नमार्गेषु खलु विभिन्नानि वेगरेखाचित्राणि लभ्यन्ते।
अत एव वेगरेखाचित्रमालिकया परिक्रमणमार्गस्य निश्चयः क्रियते।

### १२.३ त्रिकाणि

द्विकानां नक्षत्राणां कतिपयानि वस्तुतस्त्रिकाणि। तत्र त्रीणि नक्षत्राणि भौतिकरूपेण सम्बद्धानि सन्ति। 'क्यास्टर'नक्षत्रं चाक्षुषद्विकम्। तस्य द्वयोर्नक्षत्रयोरन्तरं ६–विकलामितम्, परन्तु तस्मात् ७३ विकला दूरत्वे विद्यते, एकं नवमकोटिकं नक्षत्रं यस्य प्रकृता गतिः 'क्यास्टर'-गतिसमा। अस्य परिक्रमणकालः १०,००० वर्षाणि। इदमपि 'क्यास्टर'नक्षत्रेण भौतिकसम्बन्धेन सम्बद्धमित्यनुमीयते। एवमत्र त्रिकं प्राप्यते। ध्रुवनक्षत्रमपि त्रिकमस्ति। केन्द्रीयगतिविकाराद् प्रथमं तस्य रेखाच्छत्रीयसहचारिनक्षत्रं प्राप्तम्, तस्य परिक्रमणकालश्च ४–दिनमितः। तथापि तस्य ध्रुवस्य केन्द्रीयगतौ विक्षेपो दृश्यते, अत एवानुमीयते तृतीयस्य नक्षत्रस्यादृश्यरूपस्योपस्थितिर्येन स्थानच्युतिरिव क्रियते।

### १२.४ बहुकानि

यथा त्रिकेषु त्रीणि नक्षत्राणि भौतिकरूपेण सम्बद्धानि लभ्यन्ते तथैव बहुकानि दृश्यन्ते, यत्र बहूनि नक्षत्राणि भौतिकसम्बन्धेन सम्बद्धानि। वर्णच्छत्रपरीक्षणेनानेकानि नक्षत्राणि वर्णच्छत्रीय-द्विकानि सिद्धानि यानि पूर्वमेकाकीनि मतानि। उपरि कथितं यत् क्यास्टरनक्षत्रमेकं त्रिकमस्ति, परन्तु सर्वाणि त्रीणि वर्णच्छत्रीयाणि द्विकानि (तृतीयमतिधूमिलनक्षत्रमपि वर्णच्छत्रीयद्विकम्!) एवं नेत्राभ्यामेकाकि क्यास्टरनक्षत्रं बहुकं यत्र षट् नक्षत्राणि परस्परगुरुत्वाकर्षणसम्बन्धेन सम्बद्धानि लभ्यन्ते।

वस्तुतोऽनन्ताकाशे चैकाकिनक्षत्रस्य (सूर्यस्येव) उपलब्धिः प्रायो दुर्लभा। अधिकतरन्तु नक्षत्राणि द्विकानि त्रिकाणि बहुकानि वा लभ्यन्ते।

## १२.५ विकारिनक्षत्राणि

सूर्यस्य गुणैरेवान्येषां नक्षत्राणां गुणाः प्रायोऽनुमीयन्ते, यतः सूर्योऽस्माकं सर्वाधिकपरिचितं नक्षत्रम्, परन्त्वनुमानमिदं न सर्वथा सत्यम्। दृश्यन्ते यदा कदाप्यनापवादाः। एकोऽपवादः सूर्यस्य प्रकाशस्यैकरूपत्वे लभ्यते। सूर्यः सदैवैकरूपेण (सर्वदा सममानेन) प्रकाशं तापञ्च विकिरतीति सार्वकालिकोऽनुभवोऽस्माकम्। परन्तु विद्यन्ते नैकानि नक्षत्राणि येषां प्रकाशताप-विकिरणविषये वर्तते विकारिभावः। कस्मिंश्चिद्दिने चातिधूमिलानि, कस्मिंश्चिच्च दिने तान्यति-भासुराणि दृश्यन्ते। कतिपयानान्तु सर्वाधिकौज्ज्वल्यकाले सर्वाल्पौज्ज्वल्यकालापेक्षया बहुगुणित-भास्वरत्वम्। एतादृशानि प्रकाशविकारित्वाद् विकारिनक्षत्राणि प्रोच्यन्ते।

### १२.५१ विकारिनक्षत्राणां भेदाः

विकारिनक्षत्राणां विकारहेतुमूलकास्त्रयो भेदाः—

(१) स्फुरणशीलानि—अत्र स्फुरणात्तेषां भास्वरत्वे विकारो जायते।

(२) विस्फोटशीलानि—एतेषु प्रायेण विस्फोटा भवन्ति, विस्फोटेन तेषां भास्वरत्वं विकारं लभते।

(३) ग्रहणशीलानि—द्विकनक्षत्रे यदि नक्षत्रयोः परिक्रमणतलमस्माकं दृक्सूत्रस्य लम्बरूपेण विद्यते, तर्हि काले काले एकं नक्षत्रमपरस्य सम्मुखमायाति, आच्छादनवशाच्च भास्वरत्वं

क्षीणतां भजते यथा सूर्यग्रहणे सूर्यस्य भास्वरत्वम्, चन्द्रस्य सम्मुखागतत्वात् । एतानि द्विकानि ग्रहणशीलानि कथ्यन्ते ।

### १२.५२ प्रकाश-रेखाचित्रम्

विकारिनक्षत्राणां भास्वरत्वं हीयते वर्धते च, अत एवाध्ययनसौकर्यार्थेन प्रकाशरेखाचित्राण्यालिख्यन्ते । प्रकाशरेखाचित्रस्यैकस्मिन्नक्षे दिनान्यङ्क्यन्ते, द्वितीयेऽक्षे च नक्षत्रकोट्यां जातानि परिवर्तनान्यङ्क्यन्ते । निम्नतमाद् बिन्दोः पुनर्निम्नतमबिन्दुपर्यन्तं कालावधिः (द्वयोर्निम्नतमभास्वरत्वकालयोर्मध्यवर्ती कालः)



 एतन्नक्षत्रस्यावृत्तिकाल उच्यते । उपरि दत्ते प्रकाशरेखाचित्रे आवृत्तिकालः सप्तदिनमितः ।[1]

## १२.५३ स्फुरणशीलविकारिनक्षत्राणि

### १२.५३१ भेदाः

स्फुरणशीलविकारिनक्षत्राणां चत्वारो भेदा दृश्यन्ते—

(अ) वार्षपर्वविकारिनक्षत्राणि ।

(आ) अर्धनियमितविकारिनक्षत्राणि ।

(इ) दीर्घकालिकविकारिनक्षत्राणि ।

(ई) अनियतकालिकविकारिनक्षत्राणि ।

---

1. विकारिनक्षत्राणां प्रकाशमापनं फोटोविद्युद्यन्त्रेण क्रियते । इदं 'फोटोमीटर'नामकं यन्त्रमस्ति सूक्ष्मग्राहि यत् तारकोपरि पूर्णत्वे स्थितया दूरस्थया शीशरश्मिना प्रकाशमापनेन यथार्थतया मीयते । दूरेक्षणेन च यन्त्रेण (फोटोग्राफ्रेण) नक्षत्रस्य भार्गवकाशो मन्यते ।

## १२·५३२ वार्यपर्वविकारिनक्षत्राणि

येषां विकारिनक्षत्राणामावृत्तिकालः ४५-दिवसेभ्योऽल्पः,तानि वार्यपर्वनक्षत्राणि प्रोच्यन्ते । 8-वृषपर्वनक्षत्रस्य भेदस्य प्रमुखमुदाहरणम् । अत एव तस्य व्यपदेशेनैतानि निर्दिश्यन्ते । अत्र त्वेते द्वौ भेदौ—आकाशगङ्गाविषयकवार्यपर्वाणि, गोलस्तबकीयवार्यपर्वाणि च ।

आकाशगङ्गाविषयकवार्यपर्वाणि—सामान्यवार्यपर्वनाम्नापि प्रसिद्धानि । एतानि प्रायेणाकाशगङ्गायाः सामीप्यं भजन्ते, आवृत्तिकालश्चैषां प्रायः पञ्चदिनमितः । अल्पतमभास्वरत्वकाले नक्षत्राणामेषां वर्णकानि । उपरि §१२.५२ क्रमे दत्तं प्रकाशरेखाचित्रमेकस्याकाशगङ्गाविषयकवार्यपर्वणोऽस्ति । एतानि महाकाशे विरलानि, प्रायो द्वादशसंख्याकान्येव चक्षुर्ग्राह्याणि सन्ति । अस्माकं ध्रुवनक्षत्रमपीदम्प्रकारकमेकं नक्षत्रम् ।

गोलस्तबकीयवार्यपर्वाणि सर्वप्रथमं गोलस्तबकेष्वदृश्यन्त । एषामावृत्तिकालस्य प्रायोऽर्धदिनमितः । अल्पतम आवृत्तिकाल एका होरा, दीर्घतम आवृत्तिकालश्चैकं दिनम् । एषां भास्वरत्वविकारः विचित्रस्वरूपः । महत्तमभास्वरत्वकाले द्रुतगत्या, अल्पतमभास्वरत्वकाले च मन्दगत्या विकारो भवति । एतानि सर्वाण्यतिधूमिलानि नक्षत्राणि, केवलं दूरदर्शकयन्त्रेण प्रेक्षणीयतां भजन्ते । प्रायः सर्वाणि वर्णच्छटीये A वर्गे समाविशन्ति । अथ एकस्य गोलस्तबकीयवार्यपर्वणः प्रकाशरेखाचित्रं दत्तम् । तदावृत्तिकालः प्रायः १५ घटिकामितः ।



गोलस्तबकीयवार्यपर्वणः प्रकाशरेखाचित्रम् ।

पर्यस्तयुग्मम्—सेफिडीयपर्वणोऽपि भास्वरत्वविकारेण सह विकारो दृश्यते । तद्यथा महत्तमभास्वरत्वकाले महत्तमः, अल्पतमभास्वरत्वकाले चाल्पतमः । पर्यस्तयुग्मे रेखा दोलायन्ते ।



आवृत्तिकाल-यथार्थभास्वरत्व रेखाचित्रम्

महत्त्वम्—दूरत्व-निर्धारणे वार्षपर्वनक्षत्राणि महत्त्वपूर्णानि । सर्वप्रथमं 'शेपली' महोदयेन १९१७ तमे खिस्ताब्दे आवृत्तिकाल-यथार्थभास्वरत्व-सम्बन्धो निर्धारितः । आवृत्ति-काल यथार्थभास्वरत्व रेखा-चित्रेण आवृत्तिकालेन यथार्थभास्वरत्वकोटिरनुमीयते (रेखाचित्रमवश्यं द्रष्टव्यम्)। यथार्थभास्वरत्वकोटिं प्राप्य फोटोग्राफिकप्रतीयमानकोटिर्वैधेन लभ्यते । ततो निम्नसूत्रेण पारसेकमानेन दूरत्वं गण्यते

$$\text{लघुगणक (दूरत्व)} = \frac{\text{प्रतीयमानकोटिः} - \text{यथार्थकोटिः} + 5}{5}$$

एवं वार्षपर्वणामुपस्थितिः सुदूरवर्तिनक्षत्रसमूहस्य दूरत्वं लम्बनगणनां विना प्रकटयति ।

### १२·५३३ अर्धनियमितपरिवर्तिनक्षत्राणि

सन्ति प्रायः २५-संख्याकनक्षत्राणि यानि वार्षपर्वदीर्घकालिकरक्तनक्षत्रयोर्मध्यवर्तीनि ।



RV-वृष-नक्षत्रस्य प्रकाशरेखाचित्रम्

RV-वृषनक्षत्रमेकमस्य भेदस्योदाहरणम् (तस्य रेखाचित्रमुपरि दत्तम्) एतानि वार्षपर्वनक्षत्र-मद्दल्यतमभास्वरत्वकाले किञ्चिद् रक्तवर्णकानि भवन्ति । एषां वर्णच्छटीयवर्गः 'K' अस्ति ।

### १२·५३४ दीर्घकालिकविकारिनक्षत्राणि

प्रायेण रक्तदैत्याकाराणि महादैत्याकाराणि च नक्षत्राणि दीर्घकालिकविकारिनक्षत्राणि। एषामावृत्तिकालः कतिपयमासेभ्यो वर्षद्वयपर्यन्तं दृश्यते। प्रायेणावृत्तिकालः २७५ दिनमितो लभ्यते। भास्वरत्वपरिवर्तनं पर्याप्तम्, कदाचिद् दशकोट्यन्तरमपि दृश्यते, अर्थादेकस्मिन्नावृत्तिकाले यदि महत्तमभास्वरत्वकोटिः षट् तर्हि अल्पतमभास्वरत्वकोटिः षोडश भवति।



X- हंसनक्षत्रस्य प्रकाशरेखाचित्रम्

उपरि X हंसनक्षत्रस्य प्रकाश-रेखाचित्रं दत्तम्। 'माइरा'नामकं नक्षत्रमपि भेदस्यास्य प्रसिद्धमुदाहरणम्। अस्य प्रकाशपरिवर्तनं गतत्रिशतकेभ्यो गणितमासीद् ज्योतिर्विद्भिः। महत्तमभास्वरत्वकाले नक्षत्रमिदं द्वितीयकोटिकं सुस्पष्टं चाक्षुषनक्षत्रं भवति, परन्तु मन्दतमभास्वरत्वकाले दशमकोटिकं (केवलं दूरदर्शकेन साध्यं) नक्षत्रं भवति। अस्यावृत्तिकालश्च ३३० दिनमितः। महत्तमभास्वरत्वकाले वर्णच्छटीयो वर्गः $M_1$ तापक्रमश्च २६०० सेण्टीग्रेडमितः, अल्पतमभास्वरत्वकाले च वर्णच्छटीयो वर्गः $M_6$ तापक्रमश्च १९०० सेण्टीग्रेडमितो भवति।

### १२·५३५ अनियतकालिकविकारिनक्षत्राणि

सन्ति कतिपयानि नक्षत्राणि येषां विकारोऽनियतकालिकः। एषां भास्वरत्वपरिवर्तनमत्यन्तन्यूनं सूक्ष्मयन्त्रैरेव मापनीयम्, अन्यथा तानि विकारशून्यानीव दृश्यन्ते। आर्द्रानक्षत्रमस्य भेदस्योदाहरणम्। अस्य महत्तमभास्वरत्वकालीनकोटिरल्पतमभास्वरत्वकालीनकोटेः १·२ मिताधिकैव।

### १२·५३६ स्फुरणस्य कारणम्

अत्र 'ऐडिंग्टन'महोदयस्य मतं प्रायः सर्वसम्मतं वर्तते। तस्य मतेन स्फुरणशीलानि नक्षत्राणि वाष्पमयाण्येव। तेषु हृदयस्फुरणमिव स्फुरणं भवति। स्फुरणात्तेषां परिमाणं महदाकर्षणप्रत्याकर्षणतारतम्येन वर्धते हीयते च। तथ्यमिदं वर्णच्छटाविश्लेषणेनापि समर्थ्यते। यथा यथा नक्षत्रस्य परिमाणं वर्धते तथा तथा तस्य भास्वरत्वं वर्धते, वर्णच्छटायां रेखाश्चोपरक्तान्ता दृश्यन्ते। यथा यथा च परिमाणं हीयते, तथा तथा तस्य भास्वरत्वं हीयते, वर्धते, वर्णच्छटायां च रेखा भास्वरान्ता दृश्यन्ते। 'एडिंग्टन'महोदयेन गणितेन साधितं यत् परिमाणवृद्धेः परिमाणह्रासेश्च दोलकवत् प्रक्रिया जायते, अनेन प्रकाशरेखाचित्रे तादृशविकारः प्रायः स्थिरो भवति।

## १२.५४ विस्फोटशीलविकारिनक्षत्राणि

विद्यन्ते कानिचन नक्षत्राणि यानि यद्यपि सामान्यतः स्थिराणि, परन्तु कस्मिंश्चित् काले सहसा महाभास्वराणि भवन्ति, ततश्च शनैः शनैर्मन्दभास्वरत्वमधिगम्य स्वपूर्वस्थितिं गच्छन्ति। तानि

आग्लभाषाया 'नोवा'नक्षत्राणि कथ्यन्ते। अत्र च 'नव्य'नाम्नोच्यन्ते। एतेषा वैभवमौज्ज्वल्यञ्च क्षणिके एव।



१९०५ १९१८

नव्य गरुड-नक्षत्रस्य भास्वरत्वम् [ 'यर्कीज'-वेधशाला ]

### १२.५४१ नामकरणम्

प्रथम 'नोवा'शब्दो लिख्यते, तत्पश्चात्तस्य नक्षत्रमण्डलस्य नाम स्थाप्यते यत्र स्थित तद् दृष्टम्, तत्पश्चात्तस्य विस्फोटवर्ष दीयते। यथा 'नोवा' हस १९४२नक्षत्र सर्वप्रथम हस नक्षत्रमण्डले १०४२ तमे खिस्ताब्द उपलब्धमासीत्।

### १२.५४२ ऐतिहासिकनव्यनक्षत्राणि

'टाइको ब्रेही'महोदयेन १५७२ तमे खिस्ताब्द एक नव्यनक्षत्र दृष्ट यद् दिनाऽपि दृष्टिगोचरत्वमभजत। परन्तु तत् किञ्चित् कालानन्तर पुनर्धूमिलमभवत्। 'केप्लर'महोदयस्च १६०४ तमे खिस्ताब्दे भुजङ्गनक्षत्रमण्डले नक्षत्रमेक दृष्टवान् यद् गुरुवद् औज्ज्वल्य १८ मासान् अभजत। अधुना तु प्राय शतसख्याकान्याकाशगङ्गाया नव्यनक्षत्राणि प्राप्तानि, एषा मध्ये सप्त नक्षत्राणि प्रथमकोटिकानि सन्ति।

विंशतितमे खिस्तीयशतके उपलब्धानि नव्यानि निम्नानि—

| नाम | कोटि |
| --- | --- |
| नव्य–ययाति–१९०१ | +०.१ ब्रह्महृदयवत् |
| नव्य–गरुड–१९१८ | –१.४ लुब्धकवत् |
| नव्य–हुत –१९२० | +१.८ ध्रुववत् |
| नव्य–शिशुमार–१९२५ | +१.२ चित्रावत् |
| नव्य–शौरी–१९३४ | +१.५ 'डेनेब'वत् |
| नव्य–नौपृष्ठम्–१९४२ | +०.३१ 'प्रोसियन'वत् |
| नव्य–नौपृष्ठम्–१९४२ | |

## १२.५४३ प्रकाशपरिवर्तनम्

विस्फोटकालस्याचिरात्पूर्वं नक्षत्रमतिधूमिलं वर्तते, परन्तु विस्फोटकाले झटित्यतितीव्रभास्वरत्वं प्राप्नोति । ततः शनैः शनैर्भास्वरत्वमल्पीभवति, अन्ततश्च नक्षत्रं पूर्ववत् स्थायिधूमिलत्वं याति । निम्नचित्रेणेदं स्पष्टीभविष्यति ।



[ 'नव्य-गरुड-१९१८, नव्य-ययाति-१९०१, नव्य-मिथुन १९१२' इत्याख्यानां नक्षत्राणां प्रकाशरेखाचित्राणि ]

## १२.५४४ विस्फोटकारणम्

विस्फोटशालिनक्षत्रं मुख्यश्रेणिनक्षत्रापेक्षया लघुतरम्, घनतरञ्च श्वेतनक्षत्रम् । नक्षत्रमध्यवर्तिवाष्पविसरणाद् मुच्यते, नक्षत्रस्य प्रकाशमण्डलं वर्धते, अन्तःशक्तिश्च बहिर्निरस्यति । अनया प्रक्रियया भास्वरत्वमत्यधिकं वर्धते । शक्तिविकिरणातिरेकाद् विस्फोटो भवति, विस्फोटानन्तरं नक्षत्रपरिमाणं हीयते, परन्तु बहिर्गतानि वाष्पाणि शीघ्रं मण्डलाकारं प्राप्य नक्षत्रं परिवेष्टन्ते ।



जुलाई २०, १९२२ सितम्बर ३, १९२६,
नव्यगरुड १९१८–स्य परिवेष्टनम् [ 'विल्सन'-वेधशाला ]

बाष्पपरिवेष्टनमिदमन्ततो विरलत्वं भजमानं महाकाशे विलीयते। नक्षत्रञ्च न केवलं पुनः श्वेत-नक्षत्रं भवति, किञ्चिद् विस्तारहानिमपि लभते। कदाचिदिदं परिवेष्टनं शनैः शनैर्विस्तीर्णं भवति, दूरदर्शकयन्त्रेण च दर्शनीयतां भजते। नव्य-गरुड-१९१८नक्षत्रस्य परिवेष्टनं गोलाकारमासीत्। इदं विस्फोटकालात् चतुर्मासानन्तरं सर्वप्रथमं दृश्यमभवत्। ततः प्रतिवर्षं तस्य व्यासार्धो विकलैकमितां वृद्धिमलभत (द्रष्टव्यं २५२ पृष्ठस्थं फोटोचित्रम्), १९४० तमे खिस्ताब्दे च नक्षत्रस्य व्यासो दशसहस्रज्योतिःप्रमापकमितोऽभवत्।

## १२.५४५ वर्णच्छत्रम्

विस्फोट एवास्य विकारस्य प्रमुखकारणमिति 'डाप्लर'-सिद्धान्तगणितैर्वर्णच्छत्रीयरेखा-विचलनैरपि सिध्यति। यदा नक्षत्रं वर्धते तद्बाष्पाण्यस्मान् प्रत्युपसर्पन्ति, रेखाश्च नीललोहितोत्तरं प्रति विचलन्त्यो दृश्यन्ते। बाष्पाणि प्रतिहोरं शतसहस्रक्रोशार्धगत्याऽपि वर्धन्ते। अस्यां बाष्पवृद्धिप्रक्रियायां कदाचित् सन्ति नैकाः कोषा ये चैकैकशो भिद्यन्ते। नव्य हंस-१९२०नक्षत्रे पञ्च कोषा आसन्, ते सर्वे ५०० क्रोशार्धानि प्रतिसैकिण्डं विस्फुरिताः।

## १२.५४६ नव्याभासनक्षत्राणि प्रत्यावर्तिनव्यानि च

नव्यनक्षत्राणां विस्फोट एकदैव भवति, परन्तु सन्ति कतिपयानि नक्षत्राणि येषां चत्वारः पञ्च वा विस्फोटा दृष्टाः सन्ति। एषामावृत्तयो कालक्रमेण विरलविरलतरा भवन्ति। u-वृश्चिक नक्षत्रस्य १८६३ तमे, १९०६-तमे, १९३६ तमे च खिस्ताब्दे विस्फोटा अभवन्। एतानि प्रत्यावर्तिनव्यानि प्रोच्यन्ते। एतानि धूमिलत्वमपि क्षिप्रं लभन्ते, अत एव नव्यनक्षत्रेभ्यो भिन्नानि मन्यन्ते।




SS ... प्रकाशरेखाचित्रम्

कतिपयानां नक्षत्राणां विस्फोटा बहुशो भवन्ति। विस्फोटनामावृत्तिकालोऽनियमितः, अर्थात् कदाचिदल्पः कदाचिद्दीर्घः, तथापि दशवर्षेषु प्रत्येकं नक्षत्रस्यावृत्तीनां संख्या समैव। एतानि नव्याभासनक्षत्राणि कथ्यन्ते। SS-हंस नक्षत्रमस्यैवोदाहरणम्। अस्य नाक्षत्रकोटिः सामान्यतया १२-मितास्ति, परन्तु विस्फोटकाले इयं नव मिता भवति। नव्याभासनक्षत्राणि प्रत्यावर्तिनव्यानि च समगुणकान्येव।

## १२.५५ ग्रहणशीलविकारिनक्षत्राणि

द्विकानामेव ग्रहणं सम्भवम्। यदि किमपि वर्णच्छत्रीयद्विकमेवं यद् द्वयोर्नक्षत्रयोः परिक्रमणतलमस्माकं दृष्टसूत्रस्य लम्बरूपेण वर्तते, तर्हि तयोरेकं द्वितीयस्य सम्मुखं काले काले आगत्य

पश्चवर्तिनः प्रकाशमवरुणद्धि। प्रकाशावरोधनाद् भास्वरत्वहानिर्जायते। यतो द्विरूपमिदं वर्णयितुमर्हम्, एते द्वे नक्षत्रे तीक्ष्णदूरदर्शकेनाप्येकं नक्षत्रमिवाभातः, ग्रहणजनितप्रकाशहानिः प्रतीयमानस्यैकस्य नक्षत्रस्य भास्वरत्वहानिः कथ्यते, द्विकनक्षत्रस्य च विकारिनक्षत्रमध्ये गणना क्रियते।



S-रथी नक्षत्रस्य ग्रहणशीलविकारित्वम्

[ 'हार्वर्ड' वेधशाला ]

**१२·५५१ उदाहरणम्**

'अल्गूल'[1]नक्षत्रं ग्रहणशीलनक्षत्रस्य प्रसिद्धमुदाहरणम्। अस्य ग्रहणशीलत्वं सर्वप्रथमं १७८३-तमे खिस्ताब्दे उद्घोषितं ज्योतिर्विद्भिः। अस्य द्विकनक्षत्रस्य प्रधाननक्षत्रस्य व्यासः सूर्यव्यासत्रिगुणितोऽस्ति। सहचारिनक्षत्रं प्रधाननक्षत्रापेक्षया त्रिकोट्यन्तरेण धूमिलम्, परन्तु परिमाणे विशालतरम्। तयोः केन्द्राद् दूरत्वं १०·२ कोटिक्रोशार्धमितम्। प्रत्येकस्मिन् परिक्रमणे सहचारिनक्षत्रं प्रधाननक्षत्रभूकेन्द्रमध्य आपतति, ग्रासश्च दशहोरापर्यन्तं वर्तते। परिक्रमण-कालश्च ६८ होरामितः, अतः ६८ होरानन्तरं पुनर्ग्रासो भवति।

सहस्राधिकानीदृशानि नक्षत्राणि लभ्यन्ते। एषां परिक्रमणकालः सामान्यतया त्रीणि दिनान्यस्ति। अल्पतमः परिक्रमणकालः पञ्चहोरामितो दीर्घतमश्च परिक्रमणकालः प्रायः सप्तविंशतिवर्षमितः।

---

1. 'अल्गूल'शब्दः अरबीभाषायाः शब्दः, व्युत्पत्त्यर्थश्चास्य 'राक्षसः' इति।




अल्गूलनक्षत्रस्य प्रकाशरेखाचित्र, परिक्रमणमपि च

## १२.५५२ प्रकाशपरिवर्तनानि

प्रकाशरेखाचित्रेण स्पष्टं भवति यद् द्विकस्य भास्वरत्वं विभिन्नकाले विभिन्नाभकोटि भजते। परिभ्रमणे द्विवारं रेखाचित्रे निम्नता दृश्यते—तयोरेका गौणी निम्नता द्वितीया च मुख्या निम्नता कथ्यते। गौणी निम्नता प्रधाननक्षत्रेण सहचारिनक्षत्रस्याच्छादनकाले, मुख्या निम्नता च सहचारिनक्षत्रेण प्रधाननक्षत्रस्याच्छादनकाले भवति।

ग्रहणानि त्रिविधानि दृश्यन्ते। कदाचित् पूर्णग्रहणं कदाचित् खण्डग्रहणं कदाचिच्च वलयाकारग्रहणम्। ग्रहणकाले रेखाचित्रे निम्नतावलोक्यते। रेखाचित्रेण ग्रहणकालावधिर्ग्रहणभेदादयश्च निर्णीयन्ते।

## १२.५५३ प्रकाशमानग्रहणशीलद्विकानि

कतिपयानां ग्रहणशीलनक्षत्राणां भास्वरत्वविकारो दूरदर्शकयन्त्रेण विनापि दृश्यतां भजते। एतानि प्रकाशमानग्रहणशीलद्विकानि प्रोच्यन्ते। अधो दीयन्ते षट्प्रकाशमानग्रहणशीलद्विकानां नामानि, क्रमिकमुख्यनिम्नताद्वयमध्यवर्तिकालादयश्च—

| नाम | मुख्यनिम्नताया आवृत्तिकाल | | | कोटि | |
|---|---|---|---|---|---|
| | दिनम् | होरा | मिनटम् | महत्तमभास्वरत्वकाले | अल्पतमभास्वरत्वकाले |
| β ययाति | २ | २० | ४९ | २२ | ३५ |
| λ युध | ३ | २२ | ५२ | ३८ | ४२ |
| V नौपृष्ठम् | १ | १० | ५७ | ४१ | ४८ |
| S तुला | २ | ७ | ५१ | ४८ | ५९ |
| u शौरी | २ | १ | १४ | ४८ | ५३ |
| β वीणा | १२ | २१ | ४८ | ३४ | ४३ |

# त्रयोदशोऽध्यायः

## नक्षत्रस्तवकाः, नीहारिकाश्च

[ आकाशे नैकस्थलेषु नक्षत्राणि सञ्चितानि दृश्यन्ते। कुत्रचिच्च धूमिलचिह्नानि निरीक्ष्यन्ते, तेषां भेदस्वरूपादिकमत्र विवेचनाया विषय । ]

### १३·१ नक्षत्रस्तवकाः

नक्षत्राणि प्रायो द्विकरूपेण त्रिकरूपेण बहुकरूपेण अथवा स्तबकरूपेण विद्यन्ते महाकाशे। यथा द्विकानि त्रिकाणि बहुकानि वा एकस्मादेव नक्षत्राज्जायन्ते, तथैव नक्षत्रस्तबका नीहारिकाया सहस्राधिकानि नक्षत्राणि जायन्ते, परन्त्वेकोद्गमत्वात् समगतिकान्येव वर्तन्ते। अत एव समगतिकत्वात्तेषां नक्षत्रस्तबकत्वं ज्ञातुं सुकरम्।

### १३·१२ नक्षत्रस्तवकभेदाः

सन्ति त्रय प्रमुखा भेदा नक्षत्रस्तबकानाम्। प्रथमं नक्षत्रकुलमस्ति। नक्षत्रकुले कतिपयानामेव नक्षत्राणां समूहो वर्तते। कुलस्य सर्वाणि नक्षत्राणि परस्परं भौतिकसम्बन्धेन बद्धानि सन्ति, तानि प्राय शतास्वल्पाकानि लभ्यन्ते। द्वितीयस्तावद्बद्धनक्षत्रस्तबकोऽस्ति। अत्र नक्षत्राणि शताधिकानि पर्याप्तघनतया परस्परं बद्धानि, परन्तु तेषां सीमा त्वनियताकारैव। तृतीयो गोलीयनक्षत्रस्तबकोऽस्ति। गोलीयनक्षत्रस्तबके सहस्राधिकानि नक्षत्राणि तिष्ठन्ति, तेषां सीमा च गोलाकारा। केन्द्रे नक्षत्राणि निबिडतया स्थितानि, उपसीमान्तं विरलतया। इदमस्ति रेवात्र वैलक्षण्यम्।

एको दृष्टान्तोऽत्र सहकारी। कल्प्यते यत् कोऽपि जनो वायुयानेन यात्रां करोति। तेन कुत्रापि ग्रामेषु गृहकुलं दृश्यते, कुत्रापि नगरेषु गृहपुञ्जानि, कुत्रापि च प्रधाननगरेषु राजधान्यादिषु वा सहस्रशो गृहकुलानि। ग्रामो नक्षत्रकुलवत्, नगरमबद्धनक्षत्रस्तबकवत्, महानगरञ्च गोलीयनक्षत्रस्तबकवत् सन्ति।

## १३.१२ चलं नक्षत्रकुलम्

दृश्यन्ते नभसि नक्षत्रकुलानि, येषां नक्षत्राणि किञ्चिद् भौतिकसम्बन्धेन सम्बद्धानि सन्ति ते समानगतिकानि। चल नक्षत्रकुलमबद्धनक्षत्रस्तबकापेक्षया भृशं समीपतरम्। साधारणतया तेषां प्रकृतगतय समानान्तरा, तथापि यदि तानि महाकाशस्य भूयसि भागे विस्तृतानि, तेषां प्रकृता गतयो मध्यवृत्तस्था सन्ति।

चिह्नयन्ते न विद्यन्ते । आकाशगङ्गाया अतिसामीप्यात्तेषां पृथक्करणमत्यधिकं दुष्करम्, तथापि प्रातिगतिकेन्द्रीयगति वर्णकृत्यादीनां विश्लेषणेन गणनया च समाध्यते ज्योतिर्विद्भिः ।

१३.१३२ जीवनकालः

अबद्धनक्षत्रस्तबकस्य नक्षत्राणामेक एवोद्गमः, अत एव प्रारम्भे तान्यन्यैर्नक्षत्रैः सम्भारितानि समानान्तरगत्या भ्रमन्ति, परन्तु शनैः शनैस्तेषां सम्बन्धः शिथिलीभवति, तान्यन्यैर्नक्षत्रैः प्रभावितानि सन्ति, अन्ततः स्वतन्त्राणि नक्षत्राणि भवन्ति ।

## १३.१४ गोलीयनक्षत्रस्तबकाः

गोलीयनक्षत्रस्तबकाः अबद्धनक्षत्रस्तबकेभ्यो नितान्तं भिन्नाः । तेऽत्यन्तं विस्तृताः, अत्यन्तं पिण्डीभूता अत्यन्तञ्च दूरवर्तिनः सन्ति । गोलीयनक्षत्रस्तबके सहस्राधिकानि नक्षत्राणि गोलाकारे पिण्डितानि तिष्ठन्ति । गोलाकारपिण्डेऽप्रतिधूमिलानि बहुसहस्रसङ्ख्याकानि नक्षत्राणि, तेषां गणना नातिदुष्करा । नक्षत्राणि केन्द्रे निबिडतया सम्बद्धानि, उपसीमान्तं विरलतया, अत एव यदि दीर्घकालीनप्रकाशदर्शनं प्रदाय फोटोचित्रं गृह्यते, तर्हि सीमान्तवर्तिनक्षत्राणि तु लभ्यन्ते, परन्तु केन्द्रवर्तिनक्षत्राणि स्फुटतया परस्परभिन्नानि न दृश्यन्ते, केन्द्रमेकः सम्मिलितपिण्ड इव दृश्यते । यद्यल्पकालीनप्रकाशदर्शनं दत्त्वा फोटोचित्रं गृह्यते तर्हि केन्द्रवर्तिनक्षत्राणि स्पष्टतां भजन्ते, परन्तु सीमान्तनक्षत्राणि फोटोफलके नायान्ति ।

१३.१४१ उदाहरणानि

धनुर्नक्षत्रपुञ्जे मेसियै-२२नक्षत्रस्तबकः शौरिनक्षत्रमण्डले मेसियै-१३-नामस्तबकः, ग-विशस्तबकः, तारण्डव ४७-नामस्तबकश्च प्रमुखोदाहरणानि सन्ति ।



शौरिनक्षत्रमण्डले गोलीयनक्षत्रस्तबकः
[ 'पैलोमेर'-वेधशाला ]

धौरिनक्षत्रमण्डलवर्ति-मेसिये १३-नक्षत्रस्तबको ग्रीष्मर्तौ सायङ्काले खस्वस्तिके दृश्यते । अत्र ५०,००० सङ्ख्याकानि नक्षत्राणि गणितानि । अस्य दूरत्वं ३४,००० प्रकाशवर्षमितमस्ति ।

ω-किन्नरनक्षत्रस्तबकः २२,००० प्रकाशवर्षदूरस्थ एकचतुर्थकोटिकनक्षत्रवद् धूमिलो दृश्यते ( द्रष्टव्यं २५९ पृष्ठस्थमनयोः च फोटोचित्रम् ) ।

## १३·१४२ दूरत्वनिर्धारणं स्थितिविभागश्च

एषां सर्वाधिकदूरत्वं २२५,००० प्रकाशवर्षमितमस्ति । दूरत्वनिर्धारणमप्रत्यक्षविधिनैव भवति । नैकगोलीयस्तबकेषु यार्थपर्वविकारिनक्षत्राणामुपस्थितिर्दूरत्वस्य निश्चयं करोति, यतस्तेषां मापतिकालं ज्ञात्वा दूरत्वगणना सरलैव ( द्रष्टव्यः § १२·५३२ ) ।



W-किन्नरनक्षत्रमण्डले गोलीयनक्षत्रस्तबकः

[ 'हार्वर्ड'-वेधशाला ]

९९ संख्याका गोलीयनक्षत्रस्तबका अद्यपर्यन्तं लब्धाः । ते यावदनन्तनक्षत्रवत् समरूपेण न भिन्ते, आकाशे प्रत्युत केन्द्रमाकाशगङ्गीय-२३५ अंशात् पञ्चाशिताशपर्यन्तं विस्तृताः ।

## १३·१४३ तेषामसमसारसंस्थानस्यरहस्यम्

९९ संख्याकगोलीयनक्षत्रस्तबकेषु ३३ संख्याकानि नक्षत्राणि धनूराशिस्थ-तारकाक्षेत्रस्य समीपे दृश्यन्ते, आकाशगङ्गाया यद् निरवधिनि तत्तोमयतारसंयोगानि तिष्ठन्ति । अनन्याकाशे च शेषाणां स्थितिर्निश्चिता । एवं केन्द्रं महत्तारकाक्षेत्राणां केन्द्रम्, आकाशगङ्गायाश्च केन्द्रम्, एक एव बिन्दुः, अत एवै गोलीयनक्षत्रस्तबका असमानाकाशसंस्थान एव तिष्ठन्ति ।

## १३.२ नीहारिका

यदा कदा चाकाशस्यावलोकनं कुर्वद्भिर्ज्योतिर्विद्भिः साधारणदूरदर्शकयन्त्रेणापि दृश्यन्ते कानिचिद् धूमिलस्थलान्यनन्ताकाशे। तानि नीहारिकानाम्ना प्रसिद्धानि। आङ्ग्लभाषायां मेघवद् दृश्यमानत्वात्तेषां नाम Nebula अस्ति। धूमकेतोरपि दर्शनं नीहारिकावत्, परन्तु धूमकेतव श्चलगतिकाः सन्ति, नीहारिकाः केवलं स्थिरप्रदेशाः।

नीहारिका नक्षत्रस्तबकयोरन्तरमतिसूक्ष्मं दुर्बोधञ्च। यूरोपीयदेशेषु मध्ययुगे यानि स्थलानि नीहारिका नाम्ना प्रसिद्धान्यासन्, तान्येव कालान्तरे परिष्कृतदूरदर्शकयन्त्रैर्नक्षत्रस्तबका अदृश्यन्त। अत एव सर्वा नीहारिका वस्तुतो नक्षत्रस्तबका एवेति धारणा शनैः शनैर्ज्योतिर्विदाममभवत्। परन्तु १८६४-तमे ख्रिस्ताब्दे रश्मिविश्लेषणयन्त्रेणास्या धारणाया अयथार्थत्वं प्रदर्शितम्। वर्णच्छत्रेण कतिपयधूमिलस्थानेषु विरलवाष्पीयपदार्थाः सूच्यन्ते, इतरधूमिलस्थानेषु च नक्षत्रस्तबकानामुपस्थितिः सूच्यते। अत एव ततः प्रारभ्य नीहारिकाणां पुनर्बोधाय नूतनाः प्रयत्नाः कृताः। अधुना च महादूरदर्शकयन्त्रेणातिसूक्ष्मग्राहिफोटोप्लेटैरन्यैश्च यन्त्रैस्तासां बाह्यस्वरूपं प्रतिदिनं स्पष्टतया प्रत्यक्षीक्रियते। रश्मिविश्लेषकयन्त्रैश्च तेषामान्तरिकस्वरूपं निर्धार्यते। आसां रहस्योद्घाटनाद् विश्वरचनाया मूलं प्राप्स्यत इति तज्ज्ञानमहत्ता।

### १३.२१ भेदाः

अधुना दशसहस्राधिका नीहारिका लब्धाः, तासां गणना च वस्तुतोऽसंख्या। तासां त्रयो भेदाः—प्रसृता नीहारिका, ग्रहीयनीहारिका, श्यामा नीहारिका च।

### १३.२२ प्रसृता नीहारिका

प्रसृता नीहारिकाः पर्याप्तसंख्याकाः सन्ति। सर्वाधिकभासुरा मृगनक्षत्रमण्डले एम्-४२-नाम्ना प्रसिद्धास्ति। साधारणदूरदर्शकयन्त्रेणेयं धूमिला, परन्तु तीव्रदूरदर्शकयन्त्रेण शोभनदृश्यवत् प्रतिभाति। वर्णच्छत्रविश्लेषणेन ज्ञायते यदत्र हाइड्रोजन हेलियम आक्सीजन नाइट्रोजन वाष्पाणि वर्तन्ते।

नक्षत्राणां तापक्रमो न्यूनः, तर्हि नीहारिकावर्णच्छत्रं नक्षत्रवर्णच्छत्रसमम्। एवं भिन्नता नक्षत्रतापक्रमाधीना।

१३.२३ ग्रहीयनीहारिका

दूरदर्शकयन्त्रेण भौमप्रभृतयः प्रकाशचक्रात्मका दृश्यन्ते, यद्यपि नक्षत्राणि सदैव प्रकाशबिन्दुरूपेण लभ्यन्ते। १७८२तमे ख्रिस्ताब्दे 'हर्शल'महोदयेन महाकाशे त्रिविंशोगकारा लघुभूमिपदार्था दृष्टाः। ते पूर्णतया स्थिरा आसन्। ते चाधुना ग्रहीयनीहारिका उच्यन्ते।

अधुना १०० सङ्ख्याका ग्रहीयनीहारिका लब्धाः। ता सर्वा दूरदर्शकयन्त्रेणैव दृश्यते।



द्वे ग्रहीय नीहारिके
['माउण्ट विल्सन' वेधशाला]

१३.२३१ वीणानक्षत्रमण्डले वलयाकारनीहारिका



[illegible] वलयाकारनीहारिका
['माउण्टविल्सन वेधशाला']

β वीणा γ वीणामध्ये स्थिता महीयनीहारिका वलयाकारनीहारिकानाम्ना चिरप्रसिद्धा । तस्या मध्ये तिग्मत्वैकमतिधूमिल नक्षत्रम् ( द्रष्टव्य २६२ पृष्ठे द्वितीय फोटोचित्रम् ) । नीहारिका चेदृशी बृहदाकारा यत् सम्पूर्ण सौरपरिवारस्तस्या मध्ये सुखेनैव प्रविशेत् । मध्यवर्तिनक्षत्रस्य ताप क्रम ५०,००० सेण्टीग्रेडाधिक ।

## १३.२४ श्यामा नीहारिका

आकाशगङ्गाया यत्र तत्रानियताकाराणि श्यामलस्थलानि श्यामविवराणि वा दृश्यन्ते ।



त्रिसम्निसामध्य आकाशगङ्गा

[ 'हार्वर्ड' वेधशाला ]

तानि ज्योतिर्विदामाश्चर्यविषया आसन् पुरातनकालात् ( चित्रे अङ्गारप्रसेवकाख्या नीहारिका द्रष्टव्या )। अचिरात्पूर्वमिदं मतमासीद् यदेतानि श्यामलस्थलानि महाकाशस्य नक्षत्रहीनानि स्थलान्येव, परन्तु नेदं स्वीक्रियत आधुनिकज्योतिर्विद्भिः। नक्षत्राणि सदैवेतस्ततो भ्रमन्ति। यदि पुरा तत्रैकमपि नक्षत्रं नाविद्यत, अधुना क्रमिकस्थानच्युतिं कुर्वत् किञ्चन नक्षत्रमवश्यं तत्रागतं भवेत्। अनस्तत्र न पदार्थाभावः, प्रत्युत पदार्थनिरोधो वर्तत एव। आधुनिकपरिष्कृतयन्त्रैर्निर्श्रीयते यत् श्यामचिह्नानि श्याम-रजोमयमेघरूपपदार्थाः। यानि कानि च दृश्यन्ते श्यामचिह्नमध्ये नक्षत्राणि, तानि वस्तुतस्तद् मेघ-भू मध्यवर्तीनि।

आकाशगङ्गायां सन्ति नैकाः श्यामा नीहारिकाः, याः शृङ्खलारूपेण तिष्ठन्ति हंसवृश्चिक-नक्षत्रमण्डलयोर्मध्ये। ( द्रष्टव्यं २६४ पृष्ठसमत्रत्यं च फोटोचित्रम् )।



आकाशगङ्गायां महाविवरम्

# चतुर्दशोऽध्यायः

[ साहित्ये प्रायः आकाशगङ्गाया उल्लेखो दृश्यते। अत्र वर्ण्यविषयः। ]

## १४. आकाशगङ्गासंस्थानम्

यस्यांश्चिन्निशायां स्वच्छवायुमण्डलावृताकाशे एका तारकनदीव दृश्यते। सा मेखलेव व्योममण्डलं द्विधा विभाजितं करोति। सा 'मन्दाकिनी सुरसरित् आकाशगङ्गा' प्रभृतिनाम्ना भारतीयशास्त्रेषु प्रसिद्धा। यूरोपीयदेशेष्विय 'दुग्धपथः' इति कथ्यते। इयमाकाशगङ्गा श्वेताभा आकाशस्यैकस्याः कोटेर्द्वितीयकोटिपर्यन्तं वितताऽस्ति। दूरदर्शकयन्त्रेण सहस्रशः परमल्पप्रकाशबिन्दवो दृश्यन्ते। नेत्राभ्यामेव ते परस्परमभिन्ना अवलोक्यन्ते। तेषां सम्मिलितौज्ज्वल्येनाकाशगङ्गा दुग्धधवलिता दृश्यते। एतानि नक्षत्राणि सर्वत्र समसंख्यायां न वर्तन्ते। श्यामाम्बरे विकीर्णा रजतकणा इव तानि श्यामाम्बरे क्वचिद् विरलतया क्वचिच्च निबिडतया लभ्यन्ते।

### § १४.१ आकाशगङ्गाया खगोले स्थितिः

आकाशगङ्गा तूत्तरखगोलार्धे उत्तरध्रुवस्थानात् ३० अंशान्तरात् प्रारभ्य शर्मिष्ठा ययाति रथि नक्षत्रमण्डलान्यतिक्रम्य वृषस्य शृङ्गं स्पृशन्ती क्रान्तिवृत्तमयनस्थाने ६० अंशमितकोणेनोल्लङ्घयति। ततः सा मृग मिथुन एकशृङ्गनक्षत्रमण्डलान्यतीत्य स्वस्तिकनक्षत्रमण्डलं स्पृशन्ती किन्नरनक्षत्रमण्डलस्य समीपं गच्छति। ततस्तस्या द्वे शाखे भवतः। भासुरतरा शाखा वेदी नक्षत्रमण्डलमतिक्रम्य वृश्चिक धनु गरुडनक्षत्रमण्डलान्यतीत्य हंसनक्षत्रमण्डलस्य समीपं द्वितीयया शाखया संयुक्ता भवति। एवं सा मेखलारूपेण खगोले वर्तते।

अस्याः पृथुत्वं स्थाने स्थाने भिन्नं भिन्नम्। सर्वाधिकपृथुत्वं ४५° मितं श्वा मृग नक्षत्रमण्डलयोर्वर्तते। क्वचिदिदं केवलं २०° मितम्। अग्रिमपृष्ठेषु दीयन्ते आकाशगङ्गाया विभिन्न स्थानीयानि चित्राणि—



'धनु' नक्षत्रमण्डल आकाशगङ्गा
[ 'हार्वर्ड' वेधशाला ]



धनुराशिस्थ मध्य आकाशगङ्गा
[ 'माउण्ट विल्सन' वेधशाला ]



वृश्चिक नक्षत्र मण्डले आकाशगङ्गाया श्यामा नीहारिका
[ 'पालमर' वेधशाला ]

### १४.२ आकाशगङ्गीयनियामकाः

आकाशगङ्गासंस्थानस्य वर्णने कदाचिदपेक्षते विशेषनियामकानामावश्यकता । नियामक-पद्धतिरियमत्र संक्षेपेण दीयते ।

आकाशगङ्गाया मध्यरेखायाः ध्रुवरूपौ बिन्दू आकाशगङ्गीयध्रुवौ स्तः । उत्तरीयाकाशगङ्गीयध्रुवस्य विषुवांशाः १९०° क्रान्त्यंशाश्च २८° सन्ति । दक्षिणाकाशगङ्गीयध्रुवस्य विषुवांशाः १०°, क्रान्त्यंशाश्च २८° सन्ति ।

आकाशगङ्गीयविषुवरेखा चाकाशगङ्गीयध्रुवाद् नवत्यंशान्तरेण कल्पितं महद् वृत्तमस्ति । इयमाकाशगङ्गाया मध्यभागाद् गच्छति । इयं गरुड मृग नक्षत्रमण्डलयोर्मध्ये वृत्तं ६२° अंशमितकोणेनोल्लङ्घयति । इयम् उत्तरध्रुवस्थानस्य समीपतमा दक्षिणदर्शिक नक्षत्र मण्डले भवति ।

आकाशगङ्गीयरेखांशानां प्रवृत्तिराकाशगङ्गीयविषुववृत्तस्य २८०° विषुवांशस्थानाद् भवति । आकाशगङ्गीयाक्षांशाश्च आकाशगङ्गीयविषुववृत्तसमकोणदिक्षु मापन्ते ।

## १४.३ आकाशगङ्गासंस्थानस्याकारः

किं नक्षत्राणि महाकाशेऽसीमिततया विस्तृतानि, अथवा सीमिततया ? यदि सीमिततया विस्तृतानि तर्हि सीम्नः क आकारः ? इति ज्योतिर्विदां समक्षं समस्यासीत् । सर्वप्रथमं 'हर्शेल'-महोदयेन रहस्योद्घाटनार्थमाकाशगङ्गाया नक्षत्राणां विस्तारसम्बन्धे परीक्षणानि प्रारब्धानि । तेनाकाशस्य विभिन्नक्षेत्रान्तर्वर्तिनां नक्षत्राणां संख्या गणिता । तस्य परीक्षणान्यतिसूक्ष्माणि नासन्, परन्तु तेन प्रारब्धया पद्धत्याधुना ज्योतिर्विद्भिर्निम्नो निष्कर्षो लब्धः ।



आकाशगङ्गीय विषुवरेखायाम् नक्षत्राणि आकाशगङ्गीयध्रुवसमीपे [ 'माउण्ट विल्सन' वेधशाला ]

आकाशगङ्गीयविषुववृत्ततले तत्समीपे च नक्षत्राणि निबिडतया दृश्यन्ते, आकाशगङ्गीय-ध्रुवयोः समीपे नक्षत्राणि विरलतया लभ्यन्ते ( द्रष्टव्यमुपरि दत्तं चित्रम् ) । दूरदर्शकेन आकाश-गङ्गीयविषुवरेखावर्तिनां नक्षत्राणां संख्या चाकाशगङ्गीयध्रुववर्तिनक्षत्राणां संख्याया ४० गुणिता ।

ततः प्रत्येकं नक्षत्रस्य दूरत्वं निर्धारितम् । दूरत्वस्थिति रेखाचित्रेणाकाशगङ्गासंस्थानस्य निम्नं रूपं निर्दिष्टम् । एवाकाशगङ्गीय संस्थानमनुचक्राकारम् । अस्य व्यासः १००,०००

---

| १. आकाशगङ्गीया अक्षांशाः | नक्षत्राणां संख्या | |
|---|---|---|
| ०°–२०° | २८·४ × १०^९ = २८४००००००००० | ९५% |
| २०°–४०° | १·२ × १०^९ = १२००००००००० | ४% |
| ४०°–६०° | ०·२ × १०^९ = २००००००००० | १% |

(२) यद्याकाशगङ्गासंस्थानमक्षभ्रमण कुर्यात् तर्हि तस्य मध्यवर्तिनक्षत्राणां गति रधिकतरा, परिक्रमणकालश्चाल्पतर, दूरवर्तिनक्षत्राणाञ्च गतिरल्पतरा परिभ्रमणकालश्च महत्तरो भवेत्। अत एव सूर्य केन्द्र मध्यवर्तिना नक्षत्राणां गति सूर्यस्य गतेरधिका, सूर्यस्य केन्द्रेतरपार्श्व वर्तिना नक्षत्राणा गति सूर्यस्य गतेर्न्यूना भवेद्। इद चैव दृश्यते ( द्रष्टव्य चित्रम् ), अत एवा काशगङ्गासस्थानमक्षभ्रमण करोतीति सिद्ध्यति।



आकाशगङ्गासंस्थानस्य अक्षभ्रमणम्।

**१०३**

सस्थानम् ( आकाशगङ्गाख्यम् ) अपि ज्योतिर्विद्भिरसिन्नेव वर्गे स्थापितम्। Sc-वर्गो च बीजकेन्द्रमतिलघु नातिस्पष्टञ्च, बाहू च पृथुतया वितती। २७५ पृष्ठस्थफोटोचित्रे दृश्यमान सस्थान-मुत्तरत्रिकोणनक्षत्रमण्डलस्थ 'मेसिये ३३' नामकमिदर्शनीयम्। सस्थानमिदमाकाशगङ्गेतरसस्थानाना समीपतम भासुरतमञ्च। इद सस्थानमस्मत्ताराससस्थानाद् लघु। नेत्राभ्यामपि बीजकेन्द्रमस्य धूमिलचिह्नमिव दृश्यता याति।



सर्पिलसस्थानम् [ 'माउण्ट विल्सन' वेधशाला ]

## १५ २४ नियतरूपावरुद्धसर्पिलानि संस्थानानि

प्रायेण ७० प्रतिशत सर्पिलसस्थानानि प्रकृतसर्पिलानि, परन्तु सन्ति कानिचन यानि सर्पिलसस्थान दीर्घवृत्तसस्थान मध्यवर्तीनि। एषा बाहू बीजकेन्द्रादनुद्गम्य एकस्माद् मध्यबीज भौतदण्डाद् निर्गच्छत। ( द्रष्टव्य फोटोचित्रम् )



मेषनक्षत्रमण्डले अवरुद्धसर्पिलसस्थानम्
[ 'माउण्ट विल्सन' वेधशाला ]

बीजकेन्द्रस्य पार्श्वद्वयाद् द्वौ सर्पिलौ बाहू उद्गच्छतः, समदिशायाञ्च मण्डलाकारौ भवतः। बीजकेन्द्रं बाहुभ्यां भासुरतरं दूरदर्शकेन दर्शनीयम्।

## १५·२३ प्रकृतसर्पिलानां वर्गाः

एषां त्रयो वर्गाः—Sa, Sb, Sc च। Sa-वर्गे संस्थानानां बीजकेन्द्रं पर्याप्तं महत्, बाहू गाढं संश्लिष्टौ (द्रष्टव्यं फोटोचित्रे NGC-४५९४ इत्याख्यं संस्थानम्)। Sb-वर्गे बीजकेन्द्रं



फोटोचित्रे-३१—(देवयानी नाम) सर्पिलसंस्थानम्। ['लिक'-वेधशाला]

स्फुटतरम्, बाहू च विततौ। फोटोचित्रे देवयानीनक्षत्रमण्डलस्थमिदंवर्गीयं संस्थानम्। अन्यस्मात्-



बृहद् मैगलानिक मेघ

[ जोहान्सबर्ग वेधशाला ]

एते विहाय सन्त्यन्यान्यप्यनियतरूपाणि संस्थानानि । आकाशगङ्गेतरसंस्थानानां १८ संस्थानान्यनियतरूपाणि । तानि वस्तुतो बहुसंख्याकानि, तथापि लघ्वाकारत्वाद् मन्दभासुरत्वाच्च न दृश्यन्ते ।

## १५ ३१ आकाशगङ्गेतरसंस्थानेषु दृश्यमाननक्षत्राणि

आकाशगङ्गेतरसंस्थानेषु प्रायेण सार्पपरिवर्तिनक्षत्राणि लभ्यन्ते । तत्र नव्यनक्षत्राणि गोलीयनक्षत्रस्तबका अपि दृश्यन्ते ।

## १५ ३२ आकाशगङ्गेतरसंस्थानानां परिमाणानि

F.—वर्गस्य व्यासः ६०० पारसेकानि, $E_0$—वर्गस्य व्यासः १५०० पारसेकानि, Sa वर्गस्य २००० पारसेकानि, Sb वर्गस्य २४०० पारसेकानि, Sc वर्गस्य च ३००० पारसेकानि । अवरुद्धसर्पिलानि तत्तुल्यप्रकृतसर्पिलापेक्षया लघूनि सन्ति । अस्मत्तारासंस्थान (आकाश

अवरुद्धसर्पिलानां वर्गाः

एषां त्रयो वर्गाः—SBa, SBb, SBc च। SBa-वर्गीयस्य संस्थानस्य बाहू नातिविततौ। SBb-वर्गीयस्य संस्थानस्य बाहू पर्याप्तं विततौ। SBc-वर्गीयस्य संस्थानस्य बाहू इयन्मात्रं विततौ यद् आकारः S वद् भवति। अधः स्थापिते चित्रे सर्वेषामाकारा द्रष्टव्याः।

## १५·२५ नियतरूपसंस्थानानां क्रमः

प्रारम्भे ज्योतिःसंस्थानं वृत्ताकारमासीत्। ततः पिण्डः किञ्चिद् दीर्घवृत्ताकारः, ततः पर्याप्तं दीर्घवृत्ताकारश्चाभवत्। अस्मात् परं द्वे शाखे अभवताम्—सर्पिलानां शाखा, अवरुद्धानाञ्च शाखा। ततः सर्पिलानि शनैः शनैः श्लथबन्धनान्यभवन्, अवरुद्धान्यपि शनैः शनैः श्लथबन्धान्यभवन्। एवं नैकभेदाः प्रादुरभवन्।




नियतरूपसंस्थानानां क्रमः

## १५·२६ अनियतरूपाणि आकाशगङ्गेतरसंस्थानानि

अस्माकं समीपतमेष्वाकाशगङ्गेतरसंस्थानेषु द्वे अनियतरूपे प्रसिद्धे। ते दक्षिणध्रुवस्य समीपे वर्तेते, उत्तरीयगोलार्धवासिना दृष्टिपथे न पततः। दक्षिणगोलार्धे यदा सर्वप्रथमं नाविका गताः तदा ततः प्रत्यागत्य ते आकाशे श्वेतमेघदर्शनमवर्णयन्। 'मैगेलान'-महोदयेन सर्वप्रथममेतयोर्वर्णनं कृतम्, अत एवैते 'मैगेलानिक'मेघनाम्ना प्रसिद्धे। ( २७९ पृष्ठस्थं चित्रं द्रष्टव्यम् )

द्वयोर्मेघयोरेको विशालः, द्वितीयश्च लघुः। विशालमेघोऽसिमीननक्षत्रमण्डले, लघुमेघश्च धारण्डव( चक्रवाक )नक्षत्रमण्डले वर्तेते। प्रथमो मेघः ७२,००० प्रकाशवर्षदूरत्वे, द्वितीयश्च ८०,००० प्रकाशवर्षदूरत्वे स्थितः। तयोः परिमाणं क्रमशः १०,००० प्रकाशवर्षाणि, ६००० प्रकाशवर्षाणि च।

## १५-४ स्थानीयसंस्थानसमूहः

यथा नक्षत्राणि समूहे भ्रमन्ति, तथैव संस्थानान्यपि समूहबद्धानि दृश्यन्ते। अस्मत्तारासंस्थानं यस्मिन् समूहे वर्तते, तत्रास्मत्तारासंस्थानव्यतिरिक्तानि द्वादशसंस्थानानि वर्तंते। समूहोऽयं स्थानीयसंस्थानसमूह-नाम्ना प्रसिद्धः। समूहोऽण्डवन्महाकारो स्थितोऽस्ति। समूहस्य दीर्घतमो व्यासश्च १०,००,००० प्रकाशवर्षमितः। अस्मत्तारासंस्थानमस्यैकस्या कोट्यां वर्तते, देवयानी-नक्षत्रमण्डलस्थसंस्थानं च द्वितीयकोट्यां वर्तते। निम्नलिखितसारिण्या स्थानीयसंस्थानसमूहस्य संस्थानाना विवरणानि दीयन्ते—

| नाम | वर्गं | दूरत्वं (पारसेकमाने) | प्रतीयमानविम्बव्यासः | व्यासमानम् (पारसेकमाने) |
|---|---|---|---|---|
| अकाशगङ्गा | Sb | — | — | २४,००० |
| विशालमैगेलानिकमेघः | अनि० | ५२,००० | १२° | ४,६०० |
| लघुमैगेलानिकमेघः | अनि० | ६५,००० | ८° | ३,७०० |
| गिल्पिफलक संस्थानं | E | ६६,००० | ४५' | ९०० |

| नाम | वर्गः | दूरत्वं (पारसेकमाने) | प्रतीयमान-विम्बव्यासः | व्यासमानम् (पारसेकमाने) |
|---|---|---|---|---|
| 'फार्नेक्स' संस्थानं | E | १४२,००० | ५०' | २,१०० |
| NGC-६८२२ | अनि | १६१,००० | २०' | ९४० |
| NGC-१८५ | E | २०४,००० | १४.५' | ८६० |
| NGC-१४७ | E | २०४,००० | १४.१' | ८२० |
| IC-१६१३ | अनि | २२५,००० | १७' | १,१०० |
| M-३१ | Sb | २११,००० | ३°.२ | १२,९०० |
| M-३२ | $E_2$ | २११,००० | — | — |
| NGC-२०५ | $E_5$ | २११,००० | १५'.८ | १,००० |
| M-३३ | Sc | २३५,००० | ६२' | ४,३०० |

## १५-५ संस्थानस्तबकाः

नक्षत्रस्तबका इव संस्थानस्तबका अपि विद्यन्ते। स्तबके नैकशतसङ्ख्यानि संस्थानानि दृश्यन्ते। उत्तरकिरीटनक्षत्रपुञ्जे प्रायेण ४००-संस्थानानि दृश्यन्ते, वेरोनिकाकेशमण्डले ८०० संस्थानानि, कन्यानक्षत्रमण्डले च ३०० संस्थानानि दृश्यन्ते। २८२ पृष्ठस्थे चित्रे उत्तरकिरीटनक्षत्र-मण्डलवर्तिसंस्थानस्तबको दृश्यते—

गङ्गासंस्थानं ) यद्यपि Sb वर्गीयम्, तथापि व्यासोऽस्य २४,००० पारसेकानि । निशल्याय १२९०० पारसेकव्यासक देवयानीन रत्नमण्डलस्य विशालतम सर्पिलसंस्थानमध्याकाशगङ्गा संस्थानात् पर्याप्त लघु ।

## १५ ३३ खगोले संस्थानानां स्थितिविभाग

ज्योतिर्विद्भिः 'हार्वर्ड'वेधशालया त्रयोदशनाक्षत्रकोटिपर्यन्त दृश्यमानानां संस्थानानां गणना कृता, खगोले तेषां स्थितिविभागश्चाप्यापीत । निम्नचित्रे १०२५ संस्थानानां[1] स्थितयः सूचिता सन्ति श्यामबिन्दुभि । तानि १,००,००,००० प्रकाशवर्षदूरत्वान्तर एव वर्तन्ते । अनेन चित्रेण स्पष्टीभविष्यति यत्तान्याकाशगङ्गीयध्रुवे निबिडतया विद्यन्ते । आकाशगङ्गीयविषुव रेखायां तानि कदाचित् श्यामनीहारिकाभिरावृतानि सन्ति न दृश्यन्ते ।



उत्तराकाशगङ्गीयध्रुवे संस्थानानां स्थितिविभागः

1. इदानींपर्यन्तं प्राय १०,००,००,००० नक्षत्रसंस्थानानि ज्ञातानि सन्ति । यन्त्राणां परिष्कारैर्बहून्यन्यानि दृश्यन्ते ।

शालाया दत इङ्गीयदूरदर्शकेन १५०–नूतनसस्थानाना केन्द्रीयगतिर्गणिता। पश्चात् सर्पि सस्य २–सस्थानस्य केन्द्रीया गतिर्गणिता। सा तत्पर्यन्तलब्धगतिषु सर्वाधिका प्रतिसेकेण्ड २६,००० क्रोशार्धमितासीत्। इयं प्रकाशगते सहस्रभागतुल्या। एषा सर्वा गतयो वर्णच्छत्रीय रेखाणां विचलनस्य गणनया लभ्यन्त इति पूर्वं व्याख्यातमेव (द्रष्टव्य § ११४१२)। विचलनं भिद् सस्थानाना सर्वदा रक्तं प्रति दृश्यते, अत एतानि सस्थानानि सर्वाणि सर्वदा दूरमदूरं गच्छन्तीति लभ्यते। सस्थानानां वर्णच्छत्रे यद् रेखाणां रक्तं प्रति विचलनं दृश्यते तद् 'रक्त विचलन' नाम्नाप्र सिद्धम्।

परन्तु 'कियमयती महती गति सम्भवा?' इति प्रश्न स्वाभाविक। प्रकाशस्य सर्वाधिका गतिर्धुवस्य ३१ क्रोशार्धमिता प्रति सेकेण्डमस्ति। पृथिव्या गति कक्षे प्रतिसेकेण्ड १८½ क्रोशार्धान्यस्ति। नक्षत्राणामपि गति प्रतिसेकेण्ड ५० क्रोशार्धेभ्यो नाधिका। अत एव 'डाप्लर' सिद्धान्तस्य शुद्धताया सन्देहो जायते। परन्तु सन्देहोऽयं व्यर्थं, यतो प्रकाशस्य केन्द्रीया गति डाप्लरसिद्धान्तेन यावती लभ्यते तावत्येवोपायान्तरेण। एवं २०,००,००,००० प्रकाशवर्षदूरवर्ति सस्थानस्य, प्रतिसेकेण्ड २६,००० क्रोशार्धमिता गती रहस्यपूर्णैव।

ज्योतिर्विद्भिस्तुलनात्मकाध्ययनेन दृष्ट यत् सस्थानाना दूरत्वं गतिवेगाधीनम्, अथवा गतेर्वा निश्चितो दूरत्वं गतिवेग सम्बन्ध। यथा यथा सस्थानानां दूरत्व वर्धते, तथा तथा वेगा गतिर्वर्धते।

| सस्थानसमूहनाम | विषुवांश | | क्रान्त्यंश | दूरत्वम् वेरमाने (नियुतानि) | गतिवेग प्रतिसेकिण्ड (क्रोशार्धानि) |
|---|---|---|---|---|---|
| | हो | मि | | | |
| कन्या | १२ | २५ | +१२ | २ | ७८ |
| मेष | १२ | ५६ | +२८ | १४ | ४६६० |
| सिंह | १० | २४ | +११ | ३२ | १४४३० |
| भूतेश | १४ | ३० | +३२ | ७० | २४९३ |
| सर्पि २ | १० | ५० | +५८ | ७० | २६१०० |

# षोडशोऽध्यायः

## सृष्टिः

[ पूर्वाध्यायवर्णितज्योतिष्पिण्डाः कथं कदा चास्तित्वे समागता इति विषये चिन्तनकल्पनसम्पृक्तवैज्ञानिकसिद्धान्ताः संक्षेपेणात्र दीयन्ते । ]

## १६.१ सौरमण्डलस्योत्पत्तिः

सौरमण्डलस्योत्पत्तिविषये विविधाः सिद्धान्ताः वर्तन्ते, परन्तूत्पत्तिविवरणमधुनापि धूमिलमेव । एते सिद्धान्ताः द्विप्रकारकाः । प्रथमप्रकारके वर्तमानग्रहाः नीहारिकायाः रजःकणरूपेण बाष्परूपेण वा प्रारम्भ एव सूर्येमिलिता आसन् । द्वितीयप्रकारके एते ग्रहाः प्रारम्भे सूर्यस्य भागा एवासन्, पश्चात् समीपागतनक्षत्रान्तरआकर्षणादिकैरतिसमीपागतनक्षत्रान्तरसंघर्षेण वा सूर्यात् च्युता अभवन् ।

### १६.११ नीहारिकासिद्धान्तः

नीहारिकासिद्धान्तः सर्वप्रथमं प्रसिद्धेन दार्शनिकेन 'काण्ट'महोदयेन प्रस्तुतः । पश्चात् 'लाप्लास'महोदयेनाष्टादशशताब्दीयशतके ( १७९६ खिस्ताब्दे ) विस्तरेण प्रतिपादितः । लाप्लासमहोदयस्य मतं संक्षेपेणात्र दीयते ।

पुरा सुदूरभूतकाले सौरमण्डलस्य स्थाने पूर्वमनेकमाइलो यावत् ( वाष्पपूर्णः ) महापिण्डः आकाशे वेगेन भ्रमन् आसीत् । पिण्डोऽयमतिदीर्घ आसीत् । अथ कुबेरग्रहकक्षापर्यन्तं



नीहारिकाभित्रम्

जगतो विसृत्वरत्वमवलोक्य 'लिमेतर'महोदयेन विश्वसृष्टिसम्बन्ध एको नूतनः सिद्धान्तः प्रस्तुतः। यतः संस्थानानि प्रतिदिनमस्मद्दूरं गच्छन्ति, तानि पुरास्माकं समीप आसन्। पुरा प्रायेण २,००,००,००,०००-वर्षपूर्वं सर्वाणि संस्थानानि परस्परसम्बद्धान्येवासन्। अर्थाद् जगद् अतिलध्वाकारकमासीत्। तदा केवलमेकोऽण्डाकारः पिण्ड आसीत्। अकस्मात् स विस्फुटितोऽभवत्, तस्यांशाश्च इतस्ततोऽधावन्। यतः पृथिव्या आयुरपि प्रायेण २,००,००,००,००० वर्षाणि। अत एव पृथिवी, ग्रहाः, सूर्यः, नक्षत्राणि, नक्षत्रस्तबकाः, नीहारिका, अन्याकाशगङ्गाः[1] संस्थानानि च सर्वाणि समकालिकान्येव।



1. द्रष्टव्योऽत्र ऋग्वेदीयसिद्धान्तो विश्वोत्पत्तिविषये—
"हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्" (ऋग् १०·१२१)
ब्राह्मणग्रन्थेष्वपि—"प्रथमं ह्यापो जायन्ते, ता आपः तप्यन्ति, तासु हिरण्यगर्भाख्यं जगदुत्पत्तिबीजं सौवर्णमण्डं प्रजायते, तस्माच्च जगदुत्पत्तिनिपुणो प्रजापतिर्भूत्वा स्वेच्छया विश्वमिदं सृजति।" इति श्रूयते।

वितत आसीत् । पिण्डोऽतिवेगेनाक्षभ्रमणं कुर्वन् आसीत् । अतिजवेनाक्षभ्रमणात् पिण्डस्य औष्ण्यं (तापः) शनैः शनैर्महाकाशे विलीनमभवत् । शीतत्वं भजमानस्य पिण्डस्य बहिर्वर्तिबाष्पराशिः क्रमेण घनीभवनं प्रारभत, परन्त्वान्तरिकबाष्पीयपदार्थास्तस्यामवस्थायामेवासन् । बाह्यघनीभूतपदार्था अक्षभ्रमणवेगात् क्रमशः केन्द्रीयभागस्य पश्चभागे तिष्ठन्तः पृथगभवन् । कालान्तरे बाह्या वलयाकारपदार्थाः पिण्डरूपेण केन्द्रवर्तिमहापिण्डं परितोऽभ्रमन्त । एवं क्रमशो नवसंख्याकाः पिण्डाः पृथगभवन् । सूर्यस्त्वाद्यापि केन्द्रे वर्तते ।

पृथिवी घनीभूतबाष्पीयपिण्डरूपाद्यापि दृश्यते । सा पूर्णतया शीतला न । तस्या बाह्यः स्तर एव शीतलः कठोरश्च, अन्तःस्तरस्तद्द्रवीभूतः । पृथिवी पुरा विशालतमासीत् ।

सिद्धान्तोऽयमतिसुन्दरः प्रतीयते, परन्तु गणितशास्त्रनिकषे परीक्षणेनात्र दोषा नैके दृश्यन्ते । सूर्यस्य नूनं नीहारिकाया उत्पत्तिः सम्भवा, परन्तु नेयं कथा ग्रहाणामुत्पत्तिविषये । पृथिव्या अन्येषां ग्रहाणां चाक्षभ्रमणवेगोऽत्यधिकः । अस्य वेगस्य प्रमाणं कोणवेगघूर्णप्रमाणकमस्ति । सौरमण्डले दृश्यते यद् ग्रहेष्वानेगघूर्णप्रमाणकस्य मात्रा ऽधिका, सूर्ये चाल्पा । सूर्यस्य पिण्डमात्रा तु सर्वाधिका, परन्तु सम्पूर्णसौरमण्डलस्यावेगघूर्णस्य केवलं २ प्रतिशतभागस्तत्र सूर्ये वर्तते । तथ्यमिदं परीक्ष्यसिद्धान्तस्य प्रतिकूलम् । यदि प्रारम्भे महापिण्डेऽत्यधिकोऽक्षभ्रमणवेग आसीत्, तर्हि तस्याङ्गेषु समरूपेणावेगघूर्णमात्रा स्यात् । यतो नैवं, अत एव निश्चितमिदं यत् सौरमण्डलस्य जन्म नीहारिकाया न ।

### १६.१२ 'सूर्यादेव सर्वे ग्रहा जाता' इति वादिनां सिद्धान्तः

'जीन्स' 'जेफ्रीज' 'चैम्बरलेन' 'मूल्टन'महोदयानां पृथक् पृथक् सिद्धान्ताः सन्ति, परन्तु निम्नविषये तेषामैकमत्यं दृश्यते । सुदूरभूतकाले कोऽप्यन्यः सूर्यः (नक्षत्रम्) पार्श्वादस्माकं



जातानि । तानि बीजान्युपचयं प्राप्य ग्रहा अभवन् । सूर्यसमीपे बीजानि घनतराणि, सूर्यदूरतोऽल्पघनत्ववन्ति सन्ति ।

## १६.१७ नाक्षत्ररजोमेघसिद्धान्त (२)

अचिरात्पूर्वं १९४७ तमे खिस्ताब्दे 'व्हिपिल'महोदयेनाप्येको नाक्षत्ररजोमेघसिद्धान्त प्रस्तुत । अस्य मतेन प्रथममेको विशालनाक्षत्ररजोमेघ आसीत् । स घनीभूय सूर्यीभवनप्रक्रिया याभासीत् ( नक्षत्राणि नाक्षत्ररजोमेघाज्जायन्ते, द्रष्टव्य § ) । मेघे चक्रभ्रमणं नासीत्, परन्तु यत्र तत्र लघुराशोमा आसन् । घनीभवन् मेघे स्वयमुत्क्रमणमभवत्, अथवा महाकाशस्य कस्यचिद् भागा

नाक्षत्ररजोमेघसिद्धान्त

दागच्छन् । घनीभवन् महाभागात् प्रारभ्य सर्पिलाकारमार्गेण केन्द्रं प्रयान्त्यन् । सर्पिलाकारमार्गे स्थाने स्थाने गुल्मानि घनीभवनादजायन्त । अन्तरे सम्पूर्णो मेघ [illegible] । [illegible] सर्पिलाकार यानि गुल्मानि [illegible] । [illegible] सूर्योऽभवत्, गुल्मानि ग्रहा [illegible] । विद्वांसोऽस्माकं सिद्धान्तं युक्तं मन्यन्ते ।

गच्छत् । मत्स्याकारपिण्डस्य भित्वा नैके लघ्वाकारकाः पिण्डा जाताः । मत्स्याकारत्वाद् मध्यवर्ति पिण्डा बृहदाकारका गुरुभारकाः, यथा गुरु. शनिश्च । तावद्यापि बाष्पमयावेव । अन्तर्वर्तिपिण्डाश्च लघुभारका अल्पाकारका. । ते च तरलीभूय घनत्वमापन्नाः । सूर्यजनितात्मनैर्महेभ्य उपग्रहा जाताः ।

## १६·१४ ग्रहकणसिद्धान्तः 'चेम्बरलेन'-'मूलटन'योः

१९०० ख्रिस्ताब्दे 'शिकागो'विश्वविद्यालयस्य 'चेम्बरलेन'-'मूल्टन'महोदयाभ्यां ग्रहकण सिद्धान्तः प्रस्तुत. । यदा बाह्य. सूर्योऽस्माकं सूर्यस्य पार्श्वाद्गच्छत् तदास्माकं सूर्याद् नैकवार सूर्यांशा निर्गताः । कदाचिद् विशालपिण्डरूपेण, कदाचिच्चाल्पपिण्डरूपेण । लघुपिण्डाः प्रायेण झटिति शीतला अत एव तरला अभवन् । सूर्याकर्षणेन परस्परसंघर्षेण चैते लघुतरलपिण्डाश्चूर्ण विचूर्णा अभवन् । एतेषां चूर्णविचूर्णतरलपदार्थानां कतिपया भागाः पुनः सूर्यं प्राविशन्, कतिपयाश्च भागा वेगाधिक्यात् सूर्याकर्षणरज्जुबद्धाः सूर्यं परितः पर्यक्रामन् । एते चूर्णविचूर्णा. सूर्यं परितो भ्रमन्तः पदार्था ग्रहकणा. कथ्यन्ते । विशालपिण्डाश्च ग्रहबीजनाम्ना प्रसिद्धाः । ग्रहबीजानि प्रारम्भेऽतिविशालाकाराणि नासन्, परन्तु कालेन तेष्वाकर्षणेनासंख्या ग्रहकणा अपतन् । एवं तेषामायतनानि द्रव्यमानञ्च वृद्धिं प्राप्नुवन् । अधुना ग्रहबीजानि ग्रहरूपेण दृश्यन्ते । ग्रहाणामुपग्रहा लघ्वाकारका ग्रहबीजरूपा आसन् ।

अस्मिन् सिद्धान्ते दूषणमिदं दृश्यते—यदि ग्रहकणा ग्रहबीजं प्राविशन् तर्हि ग्रहबीजेषु हाइड्रोजन बाष्पस्य प्राचुर्यं स्यात् । तदेव न । पुनश्च पृथिव्या' पिण्डमाना प्रारम्भादेवैव मस्ति, न दृश्यते तस्या वृद्धिसम्भावना ।

## १६·१५ 'जेफरीज'महोदयस्य संघात सिद्धान्तः

१९२९–तमे ख्रिस्ताब्दे जेफरीजमहोदयेन संघातसिद्धान्त पुरस्कृत । ग्रहाणामक्षभ्रमण वेगस्याधिक्यं न सुष्ठु व्याख्यायते पूर्वमते । अत एव तेन वास्तविकसंघातस्य कल्पना कृता । पुरा चैको बाह्य. सूर्य आगत्यास्माकं सूर्यं सहस्य पराक्त्यं निरगच्छत् । परन्तु मतमिदमावेगघूर्णमानायाः सुष्ठु व्याख्यानेऽसफलमेव ।

'रसेल'महोदयेन ततः संघातसिद्धान्तस्य रूपान्तरं प्रस्तुतम् । तस्य मतेन सूर्योऽस्माकं प्रथम द्विकनक्षत्रमासीत् । पुरा त्वेको बाह्य सूर्य आगत्य सूर्यस्य-सहचारिनक्षत्र जघान । सहचारिनक्षत्रस्य चूर्णांशो. सर्वे ग्रहा अभवन् । परन्तु मतमिदं स्वयं 'रसेल'महोदयेन कालान्तरे तिरस्कृतम् ।

## १६·१६ नाक्षत्ररजोमेघसिद्धान्तः ( १ )

अचिरात्पूर्वं ( १९४९ ख्रिस्ताब्दे ) 'वीजसाकर'महोदयेनैको नूतन. सिद्धान्तो व्यची कृत । 'हार'महोदयेन तस्य मत परिष्कृत्य १९४८–तमे ख्रिस्ताब्दे यद् रूप दत्त तदधो दीयते ।

पुरा सूर्यो महाकाशे भ्रमन् एकमनु-नाक्षत्रकाकार घननक्षत्ररजोमेघमुदरे दधत् । उत्सृष्टनानन्तर तन्नभिन एकमतिविस्तृत ( मुद्गर्भकक्षाया अपि विस्तृतम् ) आवेष्टन जातम् । आवेष्टनं 'केप्लर'तृतीयनियमेनाक्षभ्रमण करोति । शनै. शनैरस्मिन् ग्रहाणा इव बीजानि

अस्याकाशगङ्गासंस्थानस्य विकास एवमेवाभवत् ( अत्रावश्यं द्रष्टव्यं १२.२५ तमे दत्तं चित्रम् ) । अत्युन्नतचक्राकारपिण्डस्य कालेन मुख्यश्चदूरतमभागयोर्भुजावजायेताम् ।

## १६.२२ नक्षत्रस्तवकानामुत्पत्तिः

अत्यधिकघनीभूतसर्पिलसंस्थानानां द्रव्यं स्थाने स्थाने ग्रन्थिरूपेण तिष्ठति । यदीदृशस्य द्रव्यग्रन्थेः समीपं बहूनि नक्षत्राणि न सन्ति, तर्हि परस्पराकर्षणेन नक्षत्रस्तवकानां नक्षत्राणि केन्द्रस्य समीपे निबिडतया तिष्ठन्ति; गोलस्तवकस्य जन्म भवति । यत्र द्रव्यग्रन्थेः समीपं बहूनि नक्षत्राणि सन्ति, तत्र ग्रन्थिगतिनक्षत्राणि विरलानि भवन्ति; असहनशनस्तवकस्य जन्म भवति । असहनशन-स्तवकस्य नक्षत्राणि शनैः शनैः स्वतन्त्राणि भूत्वा नक्षत्रकुलं सृजन्ति ।

## १६.२३ नक्षत्राणामुत्पत्तिः

नक्षत्राणि सर्पिलसंस्थानस्य भङ्गाज्जायन्ते । सर्पिलसंस्थानभङ्गात् तेषां जन्म निम्न-चित्रेण प्रमाणीक्रियते ।

देवयानी संस्थाने नक्षत्राणामुत्पत्तिः

[ माउन्ट्विल्सन वेधशाला ]

द्विनामानुत्पत्तिः—द्विनामानुत्पत्तिविषये [illegible] सिद्धान्ताः [illegible] । (१) आरम्भे द्विनाम स्थाने [illegible] । [illegible] भूत्वा द्वे नक्षत्रे अभवत् । [illegible]

## १६.२ विश्वस्य उत्पत्तिः

प्रारम्भे सौरमण्डलपर्यन्तं ज्योतिर्विदां सम्यग्ज्ञानमासीत्, अत एव पूर्वकालिकज्योतिर्विद्भिः सौरमण्डलस्योत्पत्तिरेवान्विष्टासीत्। अधुना नक्षत्राणां द्विकनक्षत्राणां नक्षत्रस्तबकानां गत्याकाशगङ्गासंस्थानानाञ्च सुष्ठु ज्ञानं वर्तते, एषामुत्पत्तिविषयेऽपि सिद्धान्ताः प्रस्तूयन्ते। ते संक्षेपेणात्र दीयन्ते।

### १६.२१ नीहारिकाणां ( सर्पिलसंस्थानानां ) उत्पत्तिः

'जीन्स'महोदयेन गणितपद्धत्या नीहारिकाणामुत्पत्तिसम्बन्धे सिद्धान्त आविष्कृतः। तस्य मतेन सृष्ट्यारम्भे महाकाशे अतिविरला वाष्पकणा आसन्। कदाचित्तेषां प्रतिघनसेण्टीमीटरे[1] $१०^{-३०}$ ( अर्थात् $\frac{१}{१००००००००००००००००००००००००००००००}$ भाग ) ग्रामभागतुल्या पिण्डमात्रा आसीत् ( ऐडिंगटनमहोदयस्य मतेनेदं $१०^{-२७}$ अस्ति ) शनैः शनैः पिण्डमात्राया घनीभावस्य प्रक्रियाजायत। पिण्डस्य पिण्डमात्राया पिण्डान्तराकर्षणेन गतिर्जाता। यथा यथा च पिण्डः संकुचितोऽभवत्, तथा तथा तस्याक्षभ्रमणवेगोऽवर्धत, यत आवेगघूर्णस्थिराङ्कः सदैव स्थिरो वर्तते। गुरुतरभारकाणि तत्त्वानि पिण्डस्य केन्द्रसमीपवर्तिभागे सम्मिलितान्यभवन्,

नीहारिकाणामुत्पत्तिः

लघुतरभारकाणि तत्त्वानि परिवेष्टनरूपवायुमण्डलमभवन्। एवमक्षभ्रमणवेगातिरेकात् पिण्डस्याकारो वृत्ताकारः, ततो दीर्घवृत्ताकारश्चाभवत्।

---

१. घनसेण्टीमीटरस्य ज्ञानाय वर्गसेण्टीमीटरस्य रूपं दीयते □

कतिपयेष्वेव वर्षाणां दशकेषु विश्वस्यास्य स्वरूपमुत्तरोत्तरं स्पष्टं सञ्जातम्। अस्माकं साम्मुख्येऽस्त्याकाशगङ्गा, न या सूर्यकेन्द्रका। पूर्वं रहस्यमयधूमिलस्थानानि साम्प्रतमन्याकाशगङ्गासंस्थानानि सिद्धानि। कथं नक्षत्राणि भास्वन्ति? कथं तानि ज्वलन्ति चाविरतं भजन्ते? केवलत्वे. कया च रासायनिकप्रक्रियया विश्वमिदं सृष्टम्? कस्माच्च कालादारभ्यावस्थायामस्यामिदं वर्तते? इत्यादिका नैके प्रश्नाः समाधानं वाञ्छन्ति।

ह्यापरिमितसौन्दर्येणोल्लसत्तारापुञ्जखचितम् आकाशम् आदिमानवमाकृष्टवान्। ज्योतिर्विद्या नूनं मानवस्य सौन्दर्यजिज्ञासां तर्पयति। अहम्भावेन प्रतारितो मानवः 'सकलमिदं वस्तुजातं मह्यमेव सृष्टम्' इति सम्प्रधार्य 'अस्मज्जीवनवृत्तसूचनादन्यन्न किमपि प्रयोजनं नक्षत्रस्थितिगत्यादीनाम्' इत्यमन्यत। परं यदा तेन ज्ञाता क्षुद्रताऽसङ्ख्यस्याश्चर्यजनकनक्षत्रमण्डलानां मध्ये स्वाकाशगङ्गायाः, तस्याश्च सौरपरिवारस्य, तस्मिन्नपि पृथिव्यास्तदा तेन स्वीकृता स्वक्षुद्रता। कीदृशो भास्करस्य भासमानः प्रचण्डतापः, कोटिकोटिक्रोशनिसृतानां कोटिकोटिक्रोशदूरस्थानामसङ्ख्येयानां नक्षत्राणामेकैकस्य मिलितानाञ्च कीदृशः? नैव मानवस्य कल्पनाया अपि विषयः, दूरे कथा तस्य बुद्धेः। कुतोऽयं प्रकाशः? कुतोऽयं तापः? किं ततः? अस्य विषये वर्णितम्—

न तत्र सूर्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः।

किमपि पवित्ररहस्यमयो विराड् यस्यैव सकला लीला। किम्?
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति॥

परिशिष्टम्-१

## ( अ ) पारिभाषिकशब्दानाम्

# आङ्ग्ल-संस्कृतशब्दसूची

| | |
|---|---|
| Aberration | मार्गच्युति ( भूचलनम् ) |
| Absolute magnitude | यथार्थभास्वरत्वकोटि |
| Advance of Mercury Perihelion | बुधनीचच्युति |
| Albeds | परिक्षेपणशक्ति |
| Altitude | उन्नतांश |
| Angular distance | कोणीयान्तरम् |
| Annual equation | वार्षिकसमीकरणम् |
| Annual variation | वार्षिकपरिवर्तनम् |
| Annular eclipse | वलयाकारग्रहणम् |
| Antapex | अपसर्पबिन्दु |
| Aperture (of Camera) | मुखविवरम् |
| Apex | उपसर्पणबिन्दु |
| Aphelion | उच्चबिन्दु |
| Apparent | प्रतीयमान- |
| Apparent Solar Time | स्पष्टसौरकाल |
| Approach (, Velocity of) | उपसर्पणवेग |
| Arithmetical Progression | समान्तरश्रेढी |
| Ascending node of moon | राहु |
| Aspects (of Planets) | दृष्टि |
| Asteroids | अवान्तरग्रहा |
| Astronomical Unit | ज्योति प्रमापकम् |
| Atmosphere | वायुमण्डलम् |
| Atom | परमाणु |
| Attraction | आकर्षणम् |
| Aurora | ध्रुवप्रकाश |
| Autumn equinose | शरत्सम्पात, तुलासम्पात |
| Axis of rotation | घूर्णाक्ष |
| Azimuth | दिगंश |

परिशिष्टम्–१

## ( अ ) पारिभाषिकशब्दानाम्

# आङ्ग्लसंस्कृतशब्दसूची

| | |
|---|---|
| Aberration | मार्गच्युतिः ( मूलक्षम् ) |
| Absolute magnitude | यथार्थभास्वरत्वकोटिः |
| Advance of Mercury Perihelion | बुधनीचच्युतिः |
| Albeds | परिक्षेपणशक्तिः |
| Altitude | उन्नतांशाः |
| Angular distance | कोणीयान्तरम् |
| Annual equation | वार्षिकसमीकरणम् |
| Annual variation | वार्षिकपरिवर्तनम् |
| Annular eclipse | वलयाकारग्रहणम् |
| Antapex | अपसर्पणबिन्दुः |
| Aperture (of Camera) | सुक्ताविवरम् |
| Apex | उपसर्पणबिन्दुः |
| Aphelion | उच्चबिन्दुः |
| Apparent | प्रतीयमान– |
| Apparent Solar Time | स्पष्टसौरकालः |
| Approach (, Velocity of) | उपसर्पणवेगः |
| Arithmetical Progression | समान्तरश्रेढी |
| Ascending node of moon | राहुः |
| Aspects (of Planets) | दृष्टिः |
| Asteroids | अवान्तरग्रहाः |
| Astronomical Unit | ज्योतिःप्रमापकम् |
| Atmosphere | वायुमण्डलम् |
| Atom | परमाणुः |
| Attraction | आकर्षणम् |
| Aurora | ध्रुवप्रकाशः |
| Autumn equinose | शारदसम्पातः, तुलासंपातः |
| Axis of rotation | घूर्णनाक्षः |
| Azimuth | दिगंशः |

| | |
|---|---|
| Barred Spirals | अवरुद्धसर्पिलानि |
| Base line | आधाररेखा |
| Binary stars | द्विकनक्षत्राणि |
| Blink microscope | 'ब्लिङ्क'सूक्ष्मदर्शकम् |
| Bright eclipsing binary | प्रकाशमानग्रहणशीलद्विकानि |
| Brightness (of stars) | भास्वरत्वम् |
| Cassegranian form | कैसेग्रेनियन विधि |
| Cepheid Variables | वार्षपर्वविकारिनक्षत्राणि |
| Celestial equator | खगोलीयविषुववृत्तम् |
| Celestial horizon | खगोलीयक्षितिजम् |
| Celestial latitude | खगोलीयशाखा |
| Celestial longitude | खगोलीयरेखांशा |
| Celestial sphere | खगोल |
| Centrifugal force | मध्यो सर्पिणी शक्ति<br>( मध्यो सारिणी शक्ति ) |
| Chromosphere | वर्णमण्डलम् |
| Chronograph | कालाङ्कक(यन्त्र)म् |
| Circumpolar stars | सर्वदोदितनक्षत्राणि |
| Clash Theory | संघातसिद्धान्त |
| Clock | घटिका( यन्त्रम् ) |
| Cluster Variable | स्तबकीयविकारिनक्षत्राणि |
| Colour Index | वर्णसूचकम् |
| Coma (of Comet) | नाभ्यावरणम्, शीर्षम् |
| Comet | धूमकेतु |
| Companion star (of Binary) | सहचारिनक्षत्रम् |
| Concave Lense | नतोदरतालम् |
| Condensation | घनोभवनम् |
| Condition of Eclipse | ग्रहणसम्भार |
| Conjugate focus | अनुबद्धनाभि |
| Conjunction | युति |
| Constants | स्थिराङ्का |
| Convergent Rays | संहृतकिरणपुञ्ज |
| Convex Lense | उन्नतोदरतालम् |

| | |
|---|---|
| Coordinate | नियामकाः |
| Corona | प्रभामण्डलम् |
| Constellation | नक्षत्रमण्डलम् |
| Craters | ज्वालागिरिमुखानि |
| Crosswire | स्वस्तिकासूत्रम् |
| *Crystal Clock* | स्फटिकघटिका |
| Dark Nebulae | श्यामा नीहारिका |
| Declination | क्रान्तिः, क्रान्त्यंशाः |
| Declinational axis | क्रान्त्यक्षः |
| *Descending node of moon* | केतुः |
| Diffuse Nebulae | प्रसृतनीहारिका |
| Direct motion (of Planet) | ऋजुगतिः |
| Displacement | स्थानच्युतिः |
| Distance | दूरत्वम् |
| Diurnal circle | अहोरात्रवृत्तानि |
| Divergent | अपसृतकिरणपुञ्जः |
| Dome | शिरोगोलार्धः |
| Doppler's Principle | 'डाप्लर'-सिद्धान्तः |
| Earth's shadow | भूभा |
| Eccentricity | उत्केन्द्रिता |
| Ecliptic | क्रान्तिवृत्तम् |
| Eclipse | ग्रहणम् |
| Ellipse | दीर्घवृत्तम् |
| Elliptical Extra-galactic systems | दीर्घवृत्ताकारनिपतरूपर्धेस्थानानि |
| Ellipticity | ध्रुवनिम्नता |
| Envelope | आवरणम्, आवेष्टनम् |
| Equation of Time | कालसमीकरणम् |
| Equation of Centre | मन्दफलसंस्कारः |
| Equator | विषुवद्वृत्तम्, विषुवद्रेखा |
| Equatorial Telescope | विषुवद्दीयदूरदर्शकम् |
| Evection | च्युतिसंस्कारः |
| Expanding Universe | विसृत्वरं जगत् |
| Explosive stars (Variable) | विस्फोटान्तर्विकारिप्रभाणि |

| | |
|---|---|
| Exposure (in Camera) | उद्घाटनम् |
| Extragalactic systems | अयाकाशगङ्गासंस्थानानि |
| Eye piece | चक्षुर्नालम् |
| Family of Comets | धूमकेतुपरिवार |
| Filar Micrometer | 'फिल्र' सूक्ष्ममापकम् |
| Focal length | नाभ्यन्तरम् |
| *Galactic* | *आकाशगङ्गीयम्* |
| Galactic equator | आकाशगङ्गीयविषुवरेखा |
| Galactic Poles | आकाशगङ्गीयध्रुवौ |
| Galaxy | आकाशगङ्गा |
| Geocentric | भूमध्यीय |
| Geometrical Progression | गुणोत्तरश्रेणी |
| Globular | गोलीय |
| Granulation (Solar) | कणचिह्नानि |
| Gravitation | गुरुत्वाकर्षणम् |
| Great Red Spot | विशालरक्तचिह्नम् |
| Group of Comets | धूमकेतुवर्ग |
| Heliocentre | सूर्यमध्यीय |
| Horizontal Parallax | क्षैतिजलम्बनम् |
| Hour Angle | होराकोण |
| Hour Circle | होरावृत्तम् |
| Inclination | प्रवणता |
| Inclination of Orbits | कक्षागमनम् |
| Infra Red | उपरतवर्ण |
| Inferior conjunction | लघुयुति |
| Inferior Planets | लघुग्रहा |
| Inner Planets | अन्तर्ग्रहा |
| International Date Line | अन्ताराष्ट्रिकदिनाङ्करेखा |
| Ionosphere | आयनमण्डलम् |
| Irregular extra galactic systems | अनियतरूपा आकाशगङ्गासंस्थानानि |
| Latitude | रेखांश |
| Lense | ताल्यम् |

| | |
|---|---|
| Lenticular | अनुन्नतचक्राकारम् |
| Libration | दृक्काभेदः |
| Light Curve | प्रकाशरेखाचित्रम् |
| Light gathering Power | प्रकाशग्राहिता शक्तिः |
| Light variation | प्रकाशपरिवर्तनम् |
| Light Year | प्रकाशवर्षः |
| Line of Reference (in Time) | प्रमाणरेखा |
| Local group | स्थानीयसंस्थानसमूहः |
| Local Time | स्थानीयकालः |
| Longitude | भोगांशाः |
| Long Period Variable | दीर्घकालिकविकारिनक्षत्राणि |
| Luminosity | औज्ज्वल्यम् |
| Lunar | चान्द्र |
| Lunar Eclipse | चन्द्रग्रहणम् |
| Magellanic | 'मैगेल्यानिक' |
| Magnetic field | चुम्बकीयक्षेत्रम् |
| Magnifying power | अभिवर्धनशक्तिः |
| Magnitude (Stellar) | भास्वरत्वकोटिः |
| Main axis | मुख्याक्षः |
| Major axis | बृहदक्षः |
| Major Ecliptic Limit | प्रधाना ग्रहणविस्तरसीमा |
| Major Planets | मुख्यग्रहाः |
| Mass | पिण्डमात्रा |
| Master Clock | स्वामिनी घटिका |
| Mean Distance | मध्यमदूरत्वम् |
| Mean Solar Time | मध्यमसौरकालः |
| Meridian | याम्योत्तरम् |
| Meridian circle | याम्योत्तरचक्र(यन्त्र)म् |
| Meteor | उल्काः |
| Meteorite | उल्कापिण्डाः |
| Meteor Shower | उल्कावृष्टिः |
| Micrometer | सूक्ष्ममापक(यन्त्र)म् |
| Minor Ecliptic Limit | गौणी ग्रहणविस्तरसीमा |

| | |
|---|---|
| Molecule | व्यूहाणुः |
| Momentum of Angular Velocity | आवेगघूर्णस्थिराङ्कः |
| Motion | गतिः |
| Mounting | आरोहणम् |
| Moving cluster | चलनक्षत्रकुलम् |
| Multiple Star | बहुनक्षत्राणि |
| Nadir | पातालस्वस्तिकम् |
| Nebula | नीहारिका |
| Negative Magnitude | ऋणभास्वरत्वकोटिः |
| Newtonian form | न्यूटोनियनविधिः |
| Normal | अभिलम्बः |
| Normal Spiral Extragalactic system | प्रकृतघर्षिलबहिःस्थानानि |
| Noval-stars | नव्यनक्षत्राणि |
| Nova-like stars | नव्याभासनक्षत्राणि |
| Nucleus | बीजकेन्द्रम्, नाभिः ( धूमकेतूनाम् ) |
| Numbra | प्रच्छाया |
| Nutation | अक्षविचलनम् |
| Objective | अभिदृश्यतालम् |
| Observer | द्रष्टा, दर्शक |
| Observatory | वेधशाला |
| Occultation | आच्छादनम् |
| Open Clusters | अवृतनक्षत्रमालाः |
| Opposition | प्रतियोगः, षड्भान्तरम् |
| Optical Doubles | द्वितयनक्षत्राणि |
| Orbit | कक्षावृत्तम् |
| Outer Planets | बहिर्ग्रहाः |
| Parallax | लम्बनम् |
| Partial Eclipse | खण्डग्रहणम् |
| Parsec | दूरमेयम् |
| Pendulum | दोलकम् ( लोलकम् ) |
| Penumbra | उपच्छाया |

| | |
|---|---|
| Shadow | छाया |
| Shortt clock | 'शार्ट'-घटिका |
| Sidereal Time | नाक्षत्रकालः |
| Slave Clock | दासी घटिका |
| Solar Constant | सौरस्थिराङ्कः |
| Solar Eclipse | सूर्यग्रहणम् |
| Space Velocity | स्वगतिः |
| Spectro-bolometer | 'स्पेक्ट्रोबोलोमीटरम्' |
| Spectroscope | रश्मिविश्लेषकयन्त्रम् |
| Spectroscopic Binaries | वर्णच्छत्रीयद्विकानि |
| Spiral System | सर्पिलसंस्थानानि |
| Standard Time | प्रामाणिककालः |
| Stars | नक्षत्राणि |
| Star-cluster | नक्षत्रस्तबकाः |
| Stationary Points | स्थिरबिन्दवः |
| Stellar Dust-cloud | नाक्षत्ररजोमेघः |
| Strata method | स्तरोच्छ्रायविधिः |
| Stratosphere | स्थिरमण्डलम् |
| Summer Solstices | उत्तरायणम्, कर्कसंक्रान्तिः |
| Sunspots | सूर्यलाञ्छनानि |
| Sunspots cycle | सूर्यलाञ्छनचक्रम् |
| Superior junctions | प्रधानयुतिः |
| Superior Planets | प्रधानग्रहाः |
| Surface marking | पृष्ठचिह्नानि |
| Synodic Period | युतिकालः |
| Tail (of Comet) | पुच्छम् |
| Telescope | दूरदर्शक(यन्त्र)म् |
| Terrestrial | पार्थिव- |
| Tides | आप्लवः |
| Tides (neap) | उच्चाप्लवाः |
| Tides (Spring) | अत्युच्चाप्लवाः |
| Tide Theory | आप्लवसिद्धान्तः |
| Time Reckoner | समयमापकः, कालमापकः |

| | |
|---|---|
| Quadrature | वृत्तपाद, त्रिभान्तरम |
| Radar | 'रडारम्' |
| Radian | 'रेडियनम्' |
| Radiant (of a meteor) | उल्कासंपातबिन्दु |
| Radiation | तापविकिरणम् |
| Radical Velocity | केन्द्रीया गति |
| Radio activity | 'रेडिओ एक्टीविटी' |
| Rays (on moon) | गर्ता |
| Recession | अपसर्पणम् |
| Recurring Nova Star | प्रत्यावर्तिनव्यानि नक्षत्राणि |
| Red Shift | रक्तविचलनम् |
| Refracting Telescope | वर्तनात्मकदूरदर्शक(यन्त्र)म् |
| Refraction | वर्तनम् |
| Regular extragalactic | नियतरूपात्याकाशगङ्गास्थानानि |
| Relative | सापेक्षिक |
| Relativity | सापेक्षवाद |
| Resolving power | विश्लेषिणी शक्ति |
| Retrograde motion | वक्रगति |
| Reversing Strata | प्रत्यादर्शस्तर |
| Revolution | परिक्रमणम्, परिभ्रमणम् |
| Right ascension | विषुवांश |
| Rill | पृणि |
| Ring Nebula | वलयाकारनीहारिका |
| Rings of Saturn | शनिवलयानि |
| Rotation | अक्षभ्रमणम् |
| Saros | 'सैरोस', ग्रहणावृत्तिचक्रम् |
| Satellites | उपग्रहा |
| Schwassmann Wachmann Comet | श्वासमन वाश्मनधूमकेतु |
| Secondary circle of Reference | प्रमुखगौणवृत्तम् |
| Secondary Circles | गौणवृत्तानि |
| Secondary minimum | गौणी निम्नता |
| Semi regular Variables | अर्धनियमितरूपपरिवर्तनशीलानि |

परिशिष्टम्-२

# संस्कृत-आङ्ग्लशब्दसूची

## (आ) पारिभाषिकशब्दानाम्

| | |
|---|---|
| अक्षभ्रमणम् | Rotation |
| अक्षविचलनम् | Nutation |
| अक्षांशाः | Longitude |
| अट्टालिकादूरदर्शकम् | Tower Telescope |
| अत्याकाशगङ्गासंस्थानानि | Extragalactic systems |
| अत्युच्चाप्लावाः | Tides (Spring) |
| अनियतरूपात्याकाशगङ्गासंस्थानानि | Irregular extragalactic systems |
| अनुन्नतचक्राकारम् | Lenticular |
| अनुबद्धनाभिः | Conjugate focus |
| अन्तर्ग्रहाः | Inner planets |
| अपसर्पणम् | Recession |
| अपसर्पबिन्दुः | Antapex |
| अपसारिकिरणपुञ्जः | Divergent |
| अबद्धनक्षत्रस्तबकः | Open clusters |
| अभिदृश्यतालम् | Objective |
| अभिलम्बः | Normal |
| अभिवर्धनशक्तिः | Magnifying power |
| अयनचलनम् | Precession of Equinox |
| अर्धनियमितविकारिनक्षत्राणि | Semi-regular Variable |
| अररुद्धसर्पिलानि | Barred Spirals |
| अवान्तरग्रहाः | Asteroids |
| अहोरात्रवृत्तानि | Diurnal Circle |
| आकर्षणम् | Attraction |
| आकाशगङ्गा | Galaxy |
| आकाशगङ्गीय | Galactic |
| आकाशगङ्गीयध्रुवौ | Galactic Poles |
| आकाशगङ्गीयविषुवरेखा | Galactic Equator |
| आच्छादनम् | Occultation |

| | |
|---|---|
| Total Eclipse | पूर्णग्रहणम् |
| Tower Telescope | अट्टालिकादूरदर्शकम् |
| Transit | संक्रमणम् |
| Transit Circle | याम्योत्तरवृत्तम् |
| Transit of Shadow | छायासंक्रमणम् |
| Triple Star | त्रिकनक्षत्राणि |
| Troposphere | उष्मामण्डलम् |
| Twilight | सान्ध्यप्रकाशः |
| Twinkling | कम्पप्रभात्वम् |
| Ultra Violet | नीललोहितोत्तरवर्णः |
| Unit | प्रमापकम् |
| Upper Transit | याम्योत्तरवृत्तोल्लङ्घनम् |
| Variable star | विकारिनक्षत्राणि |
| Velocity curve | वेगरेखाचित्रम् |
| Velocity of Escape | विमोचनवेगः |
| Vernal equinox | मेषसंपातः, वसन्तसंपातः |
| Vertical circles | ऊर्ध्वाधरदृग्वृत्तानि |
| Vertical circle (through celestial body) | दृङ्मण्डलम् |
| Viewfield | दृश्यक्षेत्रम् |
| Visibility | दृश्यता |
| Visual | चाक्षुष- |
| Visual Binaries | चाक्षुषद्विकानि |
| Visual magnitudes | चाक्षुषभास्वरत्वकोटिः |
| Wintersolstice | दक्षिणायनमकरसंक्रान्तिः |
| Zenith | खस्वस्तिकम् |
| Zenith distance | नतांशाः |
| Zenith Telescope | नतांशदूरदर्शकम् |
| Zero magnitude | शून्या भास्वरत्वकोटिः |
| Zodiacal Light | राशिचक्रप्रकाशः |

—:※:—

| | |
|---|---|
| कक्षावृत्तम् | Orbit |
| कणनिहानि | Granulation (Solar) |
| कदम्बस्थानम् | Pole of Ecliptics |
| कम्प्रप्रभात्वम् | Twinkling |
| कर्कसंक्रान्तिः | Summer Solstices |
| कलाः | Phases |
| कालसमीकरणम् | Equation of Time |
| कालालेख(यन्त्र)म् | Chronograph |
| कुमेरुः | Poles (Terrestrial) |
| केतुः | Descending node of moon |
| केन्द्रीया गतिः | Radical Velocity |
| कैसेग्रेनियन विधिः | Cassegrainian form |
| कोणीयान्तरम् | Angular Distance |
| क्रान्तिः | Declination |
| क्रान्तिवृत्तम् | Ecliptic |
| क्रान्त्यक्षः | Declinational axis |
| क्रान्त्यंशाः | Declination |
| क्षैतिजलम्बनम् | Horizontal Parallax |
| खगतिः | Space Velocity |
| खगोलः | Celestial Sphere |
| खगोलीयक्षितिजम् | Celestial Horizon |
| खगोलीयरेखांशाः | Celestial Longitude |
| खगोलीयविषुववृत्तम् | Celestial Equator |
| खगोलीयाक्षांशाः | Celestial Latitude |
| खण्डग्रहणम् | Partial Eclipse |
| खस्वस्तिकम् | Zenith |
| गतिः | Motion |
| गर्ताः | Rays (on the moon) |
| गुणोत्तरश्रेढी | Geometrical Progression |
| गुरुत्वाकर्षणम् | Gravitation |
| गोलीय- | Globular |
| गौणवृत्तानि | Secondary Circles |
| गौणी ग्रहणविस्तारसीमा | Minor Ecliptic Limit |

| | |
|---|---|
| आधाररेखा | Base Line |
| आन्ताराष्ट्रिकदिनाङ्करेखा | International Date Line |
| आप्लावः | Tides |
| आप्लावसिद्धान्तः | Tide Theory |
| आयनमण्डलम् | Ionosphere |
| आरोहणम् | Mounting |
| आवरणम् | Envelope |
| आवेष्टनम् | Envelope |
| आवृत्तिकालः | Period |
| आवेगपूर्णस्थिराङ्कः | Momentum of Angular Velocity |
| उच्चबिन्दुः | Aphelion |
| उच्चाप्लावाः | Tides (neap) |
| उष्णमण्डलम् | Troposphere |
| उत्केन्द्रता | Eccentricity |
| उत्तरायणम् | Summer Solstices |
| उद्घाटनम् | Exposure (in Camera) |
| उन्नतोदरतालम् | Convex Lense |
| उन्नतांशाः | Altitude |
| उपग्रहाः | Satellites |
| उपच्छाया | Penumbra |
| उपरक्तवर्णः | Infra Red |
| उपसर्पणवेगः | Velocity of approach |
| उपसर्पबिन्दुः | Apex |
| उल्काः | Meteor |
| उल्कापिण्डाः | Meteorite |
| उल्कावृष्टिः | Meteor Shower |
| उल्कासंपातबिन्दुः | Radiant (of a meteor) |
| ऊर्ध्वाधरवृत्तानि | Vertical circles |
| ऋजुगतिः | Direct motion (of Planets) |
| ऋणभास्वरत्वकोटिः | Negative Magnitude |
| औज्ज्वल्यम् | Luminosity |
| कक्षानमनम् | Inclination of Orbits |

| | |
|---|---|
| दीर्घकालिकविकारिनक्षत्राणि | Long period Variable |
| दीर्घवृत्तम् | *Ellipse* |
| दीर्घवृत्ताकारनियतरूपसंस्थानानि | Elliptical Extragalactic systems |
| दूरत्वम् | Distance |
| दूरदर्शक(यन्त्र)म् | Telescope |
| दृङ्मण्डलम् | Vertical circle (through Celestial body) |
| दृश्यक्षेत्रम् | Viewfield |
| दृश्यता | Visibility |
| दृश्यताभेदः | *Libration* |
| दृष्टिः | Aspects (of Planets) |
| दोलकम् ( लोलकम् ) | Pendulum |
| द्रष्टा | Observer |
| द्विकानि नक्षत्राणि | Binary stars |
| द्विवत्नक्षत्राणि | Optical Doubles |
| धूमकेतुः | Comets |
| धूमकेतुपरिवारः | Family of Comets |
| धूमकेतुवर्गः | Group of Comets |
| ध्रुवः | Polaris |
| ध्रुवनिम्नता | Ellipticity |
| ध्रुवप्रकाशः | Aurora |
| ध्रुवश्रेणी | Polar Sequence |
| ध्रुवस्थानम् | *Pole Celestial* |
| ध्रुवीयाक्षः | Polar Axis |
| नक्षत्रमण्डलम् | Constellation |
| नाक्षत्रस्तबकाः | Star-cluster |
| नक्षत्राणि | Stars |
| नतांशदूरदर्शकम् | Zenith Telescope |
| नतांशाः | Zenith Distance |
| नतोदरतालम् | Concave Lense |
| नवनक्षत्राणि | Noval-stars |
| नव्याभासनक्षत्राणि | Nova-like stars |
| नाक्षत्रकालः | Sidereal Time |

| | |
|---|---|
| गौणी निम्नता | Secondary minimum |
| ग्रहणम् | Eclipse |
| ग्रहणसम्भवः | Condition of Eclipse |
| ग्रहलवसिद्धान्तः | Planetesimal Theory |
| ग्रहाः | Planets |
| ग्रहीयनीहारिका | Planetary Nebula |
| घटिका( यन्त्रम् ) | Clock |
| घनीभवनम् | Condensation |
| घूर्णनाक्षाः | Axis of Rotation |
| घृणिः | Rill |
| चक्षुस्तालम् | Eye-piece |
| चन्द्रग्रहणम् | Lunar Eclipse |
| चलनक्षत्रकुलम् | Moving cluster |
| चाक्षुष | Visual |
| चाक्षुषद्विकानि | Visual Binaries |
| चाक्षुषभास्वरत्वकोटिः | Visual magnitudes |
| चान्द्र- | Lunar |
| चुम्बकीयक्षेत्रम् | Magnetic Field |
| च्युतिसंस्कारः | Evection |
| छाया | Shadow |
| छायासंक्रमणम् | Transit of Shadow |
| ज्योतिःप्रमापकम् | Astronomical Unit |
| ज्वालागिरिचुल्लानि | Craters |
| डाप्लरसिद्धान्तः | Doppler's Principle |
| तापविकिरणम् | Radiation |
| तालम् | Lense |
| त्रिकनक्षत्राणि | Triple Star |
| त्रिपार्श्वम् | Prism |
| त्रिभान्तरम् | Quadrature |
| दक्षिणायनम् | Wintersolstice |
| दर्शकः | Observer |
| दासीघटिका | Slave Clock |
| दिगंशाः | Azimuth |

| | |
|---|---|
| प्रच्छाया | Numbra |
| प्रतियोगः | Opposition |
| प्रतीयमान | Apparent |
| प्रत्यावर्तकस्तर | Reversing Strata |
| प्रत्यावर्तिन्यानि नक्षत्राणि | Recurring Nova star |
| प्रधाना ग्रहणविषयसीमा | Major Ecliptic Limit |
| प्रधानग्रहाः | Superior Planets |
| प्रधाननक्षत्रम् | Primary star (of Binary) |
| प्रधानबृहद्वृत्तम् | Primary circle |
| प्रधानयुति | Superior Conjunctions |
| प्रभामण्डलम् | Corona |
| प्रमाणरेखा | Line of Reference (in Time) |
| प्रमापकम् | Unit |
| प्रमुखगौणवृत्तम् | Secondary circle of reference |
| प्रवणता | Inclination |
| प्रवृतनीहारिका | Diffuse Nebulae |
| प्रामाणिककाल | Standard Time |
| 'फिलर' सूक्ष्ममापकम् | Filar Micrometer |
| फोटो चाक्षुष कोटि | Photo visual magnitude |
| फोटोफलकम् | Photo plate |
| 'फोटोमीटर' | Photometer |
| फोटोविद्युद्भास्वरत्वकोटि | Photo electric magnitude |
| फोटोचित्रणभास्वरत्वकोटि | Photographic magnitude |
| बहिर्ग्रहाः | Outer planets |
| बहुलनक्षत्राणि | Multiple Star |
| (बहुला) नक्षत्राणि | Pleiades |
| बीजकेन्द्रम् | Nucleus |
| बुधनीचच्युति | Advance of Mercury Perihelion |
| बृहदक्ष | Major Axis |
| 'ब्लिंक' सूक्ष्मदर्शकम् | Blink microscope |
| भगणकाल (भ्रमणकाल) | Period of revolution |
| भास्वरत्वकोटि | Magnitude (Stellar) |
| भास्वरत्वम् | Brightness (of Stars) |

| | |
|---|---|
| नाक्षत्रनीचम् | Periastron |
| नाक्षत्ररजोमेघ | Stellar Dust-cloud |
| नाभि (धूमकेतूनाम्) | Nucleus |
| नाभ्यन्तरम् | Focal Length |
| नाभ्यावरणम् | Coma (of Comet) |
| नियतरूपाण्याकाशगङ्गाबाह्यसंस्थानानि | Regular extragalactic |
| नियामका | Coordinate |
| नीचबिन्दु | Perihelion |
| नीललोहितोत्तरवर्ण | Ultra Violet |
| नीहारिका | Nebula |
| न्यूटोनियनविधि | Newtonian form |
| परमाणु | Atom |
| पातालस्वस्तिकम् | Nadir |
| 'पारसेकम्' | Parsec |
| पार्थिव | Terrestrial |
| पिण्डमात्रा | Mass |
| पुच्छम् | Tail (of Comet) |
| पूर्णग्रहणम् | Total Eclipse |
| पूर्वापरवृत्तम् | Prime Vertical |
| पृष्ठचिह्नानि | Surface marking |
| 'पेरिहेलियोमीटरम्' | Periheliometer |
| परिभ्रमणकाल | Period of Revolution |
| परिभ्रमणम् | Revolution |
| परिक्षेपिणी शक्ति | Albedo |
| परिभ्रमणम् | Revolution |
| प्रकाशग्राहिता शक्ति | Light gathering Power |
| प्रकाशपरिवर्तनम् | Light Variation |
| प्रकाशमण्डलम् | Photosphere |
| प्रकाशमानग्रहणशीलद्विकानि | Bright Eclipsing Binary |
| प्रकाशरेखाचित्रम् | Light curve |
| प्रकाशवर्ष | Light year |
| प्रकृतगति, (प्रकृता गति) | Proper motion |
| प्रकृतसर्पिलसंस्थानानि | Normal Spiral Extragalactic systems |

| | |
|---|---|
| लम्बनम् | Parallax |
| वक्रगतिः | Retrogade Motion |
| वर्णच्छत्रीयद्विकानि | Spectroscopic Binaries |
| वर्णमण्डलम् | Chromosphere |
| वर्णसूचकम् | Colour Index |
| वर्तनम् | Refraction |
| वर्तनात्मकदूरदर्शक(यन्त्र)म् | Refracting Telescope |
| वलयाकारग्रहणम् | Annular eclipse |
| वलयाकारनीहारिका | Ring Nebula |
| वसन्तसंपातः | Vernal equinox |
| वायुमण्डलम् | Atmosphere |
| वार्पपर्यविकारिनक्षत्राणि | Cepheid Variables |
| वार्षिकपरिवर्तनम् | Annual variation |
| वार्षिकसमीकरणम् | Annual equation |
| विकारिनक्षत्राणि | Variable stars |
| विमोचनवेगः | Velocity of Escape |
| विशालरक्तचिह्नम् | Great Red Spot |
| विश्लेषिणी शक्तिः | Resolving Power |
| विषुवदीयदूरदर्शकम् | Equatorial Telescope |
| विषुव रेखा | Equator |
| विषुववृत्तम् | Equator |
| विषुवांशः | Right ascension |
| विसृत्वरं जगत् | Expanding Universe |
| विस्फोटशीलविकारिनक्षत्राणि | Explosive stars, Variable |
| वृत्तपादः | Quadrature |
| वेगरेखाचित्रम् | Velocity curve |
| वेधशाला | Observatory |
| व्यूहाणुः | Molecule |
| शनिवलयानि | Rings of Saturn |
| शरत्संपातः ( तुलासंपातः ) | Autumn equinox |
| 'शार्ट'-घटिका | Shortt Clock |
| शिरस्गोलार्ध. | Dome |
| शीर्षम् | Coma (of Comet) |

| | |
|---|---|
| भूचलनम् | Aberration |
| भूभा | Earth's shadow |
| भूमध्यीय | Geocentric |
| मकरसंक्रान्ति | Wintersolstic |
| मध्यमदूरत्वम् | Mean Distance |
| मध्यमसौरकाल | Mean Solar Time |
| मध्योत्सर्पिणी शक्ति | Centrifugal force |
| मध्योत्सारिणी शक्ति | Centrifugal force |
| मन्दफलसंस्कार | Equation of Centre |
| मार्गच्युति | Aberration |
| मुखविवरम् | Aperture (of camera) |
| मुख्यग्रह | Major Planets |
| मुख्यनिम्नता | Primary minimum |
| मुख्याक्ष | Main Axis |
| मेषपात | Vernal equinox |
| मैगेलानिक | Magellanic |
| यथार्थभास्वरत्वकोटि | Absolute Magnitude |
| याम्योत्तरचक्र(यन्त्र)म् | Meridian circle |
| याम्योत्तरम् | Meridian |
| याम्योत्तरवृत्तम् | Transit circle |
| याम्योत्तरवृत्तोल्लङ्घनम् | Upper Transit |
| युति | Conjunction |
| युतिकाल | Synodic Period |
| रक्तविचलनम् | Red Shift |
| 'रडारम्' | Radar |
| रश्मिविश्लेषकयन्त्रम् | Spectroscope |
| राशिचक्रप्रकाश | Zodiacal Light |
| राहु | Ascending node of moon |
| रेखांश | Latitude |
| 'रेडियनम्' | Radian |
| रेडियो एक्टीविटी | Radio activity |
| लघुग्रह | Inferior Planets |
| लघुयुति | Inferior Conjunction |

| | |
|---|---|
| स्थिराङ्काः | Constants |
| स्पष्टसौरकाल. | Apparent Solar Time |
| 'स्पेक्ट्रोफोलोमीटरम्' | Spectro-folometer |
| स्फटिकघटिका | Crystal Clock |
| स्फुरणशीलविकारिनक्षत्राणि | Pulsatory variable stars |
| स्वस्तिकासूत्रम् | Crosswire |
| स्वामिनी घटिका | Master clock |
| होराकोणः | Hour Angle |
| होरावृत्तम् | Hour Circle |



| | |
|---|---|
| शून्या भास्वरत्वकोटि | Zero magnitude |
| श्यामा नीहारिका | Dark Nebulae |
| श्वासमन वाखमन धूमकेतु | Schwassmann Wachmann Comet |
| षड्भान्तरम् | Opposition |
| संक्रमणम् | Transit |
| संघातसिद्धान्त | Clash Theory |
| संहतकिरणपुञ्ज | Convergent rays |
| समयगणक ( कालगणक ) | Time Reckoner |
| समान्तरश्रेणी | Arithmetical Progression |
| सर्पिलसंस्थानानि | Spiral System |
| सर्वदोदितनक्षत्राणि | Circumpolar stars |
| सहचारिनक्षत्रम् | Companion star (of Binary) |
| सान्ध्यप्रकाश | Twilight |
| सापेक्षिक | Relative |
| सापेक्षवाद | Relativity |
| सुमेरु | Poles (Terrestrial) |
| सूक्ष्ममापक(यन्त्र)म् | Micrometer |
| सूचीछिद्रकैमरायन्त्रम् | Pinhole Camera |
| सूर्यग्रहणम् | Solar Eclipse |
| सूर्यमध्यीय- | Heliocentre |
| सूर्यलाञ्छनचक्रम् | Sunspots cycle |
| सूर्यलाञ्छनानि | Sunspots |
| सूर्योक्षतज्वालाशिखराणि | Prominences (Solar) |
| 'सैरोस' ( ग्रहणावृत्तिचक्रम् ) | Saros |
| सौरस्थिराङ्क | Solar Constant |
| स्तवकीयविकारिनक्षत्राणि | Cluster Variable |
| स्तरोच्चयविधि | Strata method |
| स्थानच्युति | Displacement |
| स्थानिककोण | Position Angle |
| स्थानीयकाल | Local Time |
| स्थानीयसंस्थानसमूह | Local Group |
| स्थिरबिन्दव | Stationary Points |
| स्थिरमण्डलम् | Stratosphere |

| | |
|---|---|
| वीजसेकर | Weizsäcker ( आधुनिकः ) |
| शियापैरली | Schiaparelli ( १८३४–१९१० ) |
| शेपली | Shapely (१८८५–) |
| स्लिफर | Slipher (१८७५–) |
| हर्शल | Herschel (१७९२–१८७१ ) |
| हार | Haar ( आधुनिकः ) |
| हालि | Halley ( १६५६–१७४२ ) |



परिशिष्टम्–३

# ज्योतिर्विदां नाम्नां सूची

| | |
|---|---|
| आइन्सटाईन | Einstein ( १८७९–१९५५ ) |
| आइलर | Eular ( १७०७–८३ ) |
| एक्टिन | Aitken R. G. ( १८६४–१९५१ ) |
| ऐडम्स | Adams ( १८६७–० ) |
| एडिंग्टन | Eddington (१८८२–१९४४ ) |
| कप्टीन | Kapteyn ( १८५१–१९२२ ) |
| कान्ट | Kant ( १७२४–१८०४ ) |
| कापर्निकस | Copernicus ( १४७३–१५४३ ) |
| केप्लर | Kepler ( १५७१–१६३० ) |
| गाउस | Gauss ( १७७७–१८५५ ) |
| चेम्बरलिन | Chamberlin ( १८४३–१९२८ ) |
| जीन्स | Jeans ( १८७७–१९४६ ) |
| जेफरीज | Jeffreys ( आधुनिकः ) |
| टाइखो ब्राहे | Tycho Brahe ( १५४६–१६०१ ) |
| डाप्लर | Doppler |
| टालेमी | Plotemy ( १५० ) |
| न्यूटन | Newton ( १६४२–१७२७ ) |
| पिआज़ी | Piazzi ( १७४६–१८२६ ) |
| फूको | Foucantt ( १८१९–१८६८ ) |
| बिएला | Biela |
| बेसेल | Bessel (१७८४–१८४६ ) |
| बोड | Bode ( अष्टादशशतकीयः ) |
| मूल्टन | Moulton ( १८७२ ) |
| मैगेलान | Magellan |
| लाप्लास | Laplace ( १७४९–१८२७ ) |
| लावेल | Lowell ( १८५५–१९१६ ) |
| लेविरिये | Leverrier ( १८११–७२ ) |
| लैंग्ली | Langley (१८३४–१९०६ ) |
| ह्विपिल | Whipple ( आधुनिकः ) |

| | |
|---|---|
| पुनर्वसु | Pollux |
| बहुला | Plaeides |
| मघा | Reguius |
| लुब्धक | Sirius |
| चित्रा | Spica |
| अभिजित् | Vega |

सप्तर्षि

| | |
|---|---|
| क्रतु | $\alpha$Ussa Majonis |
| पुलह | $\beta$ ,, |
| पुलस्त्य | $\gamma$ ,, |
| अत्रि | $\delta$ ,, |
| अंगिरस | $\theta$ ,, |
| वसिष्ठ | $\zeta$ ,, |
| मरीचि | $\eta$ ,, |



परिशिष्टम्-४

# ग्रहोपग्रहाणां सूची

## प्रमुखनक्षत्राणां सूची

| | |
|---|---|
| इन्द्र | Neptune |
| एरोस | Eros |
| ऐस्ट्रीया | Astraea |
| कुबेर | Pluto |
| गुरु | Jupiter |
| गैनिमीड | Ganymede |
| चन्द्र | Moon |
| जूनो | Juno |
| टाइटन | Titan |
| डाइमस | Deimos |
| पैलस | Pallas |
| फ्रीब | Phebe |
| फ्रोबस | Phobos |
| बुध | Mercury |
| भू | Earth |
| भौम | Mars |
| वरुण | Uranns |
| वेस्टा | Vesta |
| शनि | Saturn |
| शुक्र | Venus |
| सेरेस | Ceres |
| रोहिणी | Aldebaran |
| स्वाती | Arcturus |
| श्रवण | Altair |
| ज्येष्ठा | Antares |
| आर्द्रा | Betelgeuse |
| अगस्त्य | Canopus |
| ब्रह्महृदय | Capella |

दृश्यबिम्बव्यासार्धानि

| | | |
|---|---|---|
| सूर्यस्य | १५′ | ५९″·६३ |
| चन्द्रस्य | १५′ | ३२″·५८ |
| बुधस्य | | ०३″·३४ |
| शुक्रस्य | | ०८″·४१ |
| भौमस्य | | ०४″·६८ |
| गुरोः, विषुवद्दीयम् | १′ | ३८″·४७ |
| ध्रुवीयम् | १′ | ३१″·६१ |
| शनेः, विषुवद्दीयम् | १′ | २१″·३१ |
| ध्रुवीयम् | १′ | १४″·५७ |
| यमस्य | | १४″·२८ |
| इन्द्रस्य | | १६″·५६ |
| मार्गाब्धुोः स्थिराङ्कः | | २०″·४७ |
| अयनचलनस्य ,, | | ५′·२१ |

सूर्यस्य उपसर्पणबिन्दुः विषुवांशाः २७०°
क्रान्त्यंशाः +३४

आकाशगङ्गीयध्रुवस्थानम् विषुवांशाः १९०
क्रान्त्यंशाः +२८